# अप्पाशास्त्रि-चरितम्



लेखकः

पं. वासुदेवशास्त्री औदुम्बरकरः



मूल्यं ४० रूप्यकाः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# आ नु पू र्वी



## प्रघट्टानां सूची ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## मध्यमपर्व। ( ३४ तः ७० )



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उत्तमपर्व। (७२ तः १३०)



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प श्चि म प र्व । (२३९ तः २६४)



* * *

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीगुरुः शरणम् ॥

# श्रीअप्पाशास्त्रिचरितस्य भूमिका ।

नमो वाचस्पतये ।

अहो गरीयान् किल परिवर्तः संवृत्तः । यत्र खलु भारतवर्षे प्रायः सहस्र-वत्सरेभ्यः प्राक् संस्कृत-विद्यायाः एव सुमधुरः विलासः समृद्धः आसीत्, तत्रैव इदानीं सर्वत्र असंस्कृत-प्रियता नयन-गोचरीभवति । अधुना हि राष्ट्रियायाः एकतायाः दृढीकरणे प्रयतन्ते नेतारः । अद्वैत-साक्षात्कारस्य पुनः निदानभूता वेदान्त-तत्त्व-ज्ञापिका संस्कृत-भाषा तिरस्क्रियते इति विचित्रम् एतत् । अभविष्यत् किल तिरस्कारः अयं सप्रयोजनः अजनिष्यत च संस्कृताभ्यासः व्यर्थ एव, यदि नाम न अभविष्यन् संस्कृतभाषायां व्यवहारोपयोगिनः विषयाः । अपि तु सन्ति एव तावत् प्रायः सर्वेऽपि विषयाः एतस्यां ये खलु मोक्षाय इव व्यवहाराय अपि प्रभवन्ति । संस्कृत-वाङ्मये हि विराजन्ते धर्मः, तत्त्वज्ञानं, तर्कः, वाक्य-तात्पर्य-शास्त्रं (मीमांसा), व्याकरणं, साहित्यं, राजनीतिः, शिल्पकला, आयुर्वेदः, ज्यौतिषं, भौतिक-विज्ञानम्, संगीतम्, नृत्यकला, विमानविद्या, गणितम्, नगर-निर्माणं, पुरावृत्तम्, इन्द्रजालम् इत्यादयः आत्मज्ञानात् आरभ्य महा-मोहान्ताः सर्वेऽपि विषयाः । तदा एव ननु दृश्येरन् इमे यदि नाम समुन्मील्य नयने तत्र तत्र विलोकितं स्यात् । न खलु केवलं नानाविधविषय-समृद्धा एव संस्कृत-भाषा, अपि तु निखिलस्य अपि भाषा-कुलस्य जीवन-रस-प्रदात्री, इति समस्वरम् एव स्वीक्रियते एतत् सर्वैः । भारतीयानां भाषाणां पुनः एकमात्रं प्रभवस्थानं संस्कृतभाषा इति विवादातीतः खलु अयं विषयः । सर्वेषु अपि हि भारत-प्रदेशेषु एषः समानम् एव संमानं भजते । प्रदेशान्तर-भाषाम् अवमानयन्तः अपि जनाः आद्रियन्ते एव संस्कृतभाषाम् । एतस्यां खलु विराजन्ते नाना-विध-धर्म-संप्रदायानां पूज-नीयतमाः ग्रन्थाः । एवं सर्वाङ्ग-सुन्दरां निसर्गतः एव भारतवर्षस्य ऐक्यं प्रतिष्ठापयन्तीम् भाषाम् एनाम् अपहाय यत्किंचित्कारिणां दयनीयतमा एव विचारमूढता पुरुषाणाम् ।

अवस्था पुनः एषा न तावत् इदानीम् एव प्रादुर्भूता । शतवर्षेभ्यः प्राक् ईदृशी एव सा समभूत् । तदानीं तु शासनभाषा इति आङ्ग्ली

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्यराजत, तया सह अधुना काऽपि अन्या एव प्रादेशिकी भाषा, इति एव विशेषः। तत्र तावद् वैदेशिकी-भाषा नैव उचिता राष्ट्रिय-सिंहासने इति स्वीकृतः एव अयम् अर्थः सर्वैः। का पुनः अन्यतमा प्रादेशिक-भाषाणां समस्त-भारतीय-शासन-क्षमा समाना स्यात् भाषा, यां खलु सर्वेऽपि संमन्येरन् ? संपद्येत च सेयं वाङ्मय-प्रतिनिधिः भारतीय-राष्ट्रियतायाः इत्येवं निर्णये सर्वेषाम् आदरास्पदभूतां भाषाम् अलभमानाः केऽपि विचार-चतुराः बहु-जन-भाष्या इति काम् अपि प्रदेश-भाषां शासन-भाषा इति स्वीचक्रुः। प्रददुः च वैदेशिक-भाषायाः तावत्-कालिकं स्थानं यावत् इयं प्रादेशिक-भाषा शासन-निर्वहण-सामर्थ्यं प्राप्नुयात् इति।

किन्तु हा हन्त ! दौर्भाग्यम् एतेषाम्, यत् न किल मनोरथः अयं फलेग्रहित्वम् आपन्नः। विभिन्न-प्रदेशानाम् एकसूत्रग्रथनं न तावत् इदानीम् एतया भाषया सुकरं भाति। प्रत्यक्षमेव इदं सर्वेषाम्। अतः च अन्वेष्टव्यं राष्ट्रभाषा-पदे भाषान्तरं यत् अत्र समर्थं स्यात्। तच्च भाषान्तरं नाम 'संस्कृतम्' एव। न पुनः संस्कृतात् अन्यत् किमपि। वस्तुतः तु प्राक् एव संस्कृत-भाषायाः स्वाभाविकम् एतत् स्थानं परिष्कर्तव्यम् आसीत्। भवतु नाम यद् भूतम्। इतःपरं तु नात्र मनाक् अपि समालम्बनीयम् औदासीन्यम्।

**एतदर्थम् आवश्यकं संस्कृतम्।**

संस्कृत-राष्ट्रभाषात्वस्य स्वीकारेण न खलु केवलं विभिन्नप्रदेशानाम् ऐक्यमेव स्थिरीभवेत्, अपि तु संपद्येरन् भूयांसः एव लाभाः। ये भाषान्तरेण कथमपि न सिध्येयुः। तथाहि। भारतीयानां ज्ञान-भाण्डागारं संस्कृत-भाषायाम् एव संघटितम् इति सुप्रथितम् एव। ततश्च संस्कृत-ज्ञानं भारतीय-विद्यानाम् आकलने परमावश्यकम् इति सिद्धम् एव एतत्। यदि नाम सम्यक् एव समभ्यस्तं संस्कृतं, तर्हि सः अयं भारतीयः संस्कृतज्ञः विज्ञातुं प्रभवेत् स्वकीयं प्राचीनं वैभवम्। यथा किल प्रोक्तम् एव प्राक् तथा ज्ञान-विज्ञान-कलादिषु विद्यमानं वाङ्मयम् अवलोक्य परिचीयेत स्वदेशीयं गौरवम्। परिचितं च गौरवं सम्यक् एव प्रतिष्ठापयेत् स्वाभिमानम्। दृढमूलः स्वाभिमानः च संजनयेत् स्वदेशविषयिणीं गरिष्ठां भक्तिम्। 'मातृदेवो भव' इति श्रुति-चोदिते अर्थे परिनिष्ठिता श्रद्धा च

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निष्कम्पा एव भवेत् । '**जननी जन्मभूमिश्च स्वर्गादपि गरीयसी**' इत्यस्मिन् वचने जनन्या सह जन्मभूमेः उल्लेखः जन्मभूमेः जननी-सदृशं महनीयत्वम् अवबोधयति। राष्ट्र-गौरव-ज्ञानाय पुनः संस्कृत-परिचयात् अन्यः नास्ति प्रभावशाली अभ्युपायः। विना हि राष्ट्र-गौरव-ज्ञानं कथम् इव समुन्मिषतु राष्ट्रभक्तिः? अतः च एतदर्थम् आवश्यकं संस्कृतम् ।

**संस्कृत-राष्ट्रभाषात्वस्य द्रष्टारः**

संस्कृत-ज्ञान-संपन्नः खलु मनसाऽपि नोच्चारयेत् अशुद्धां भाषाम् । स्वकीयं तत्त्वज्ञानम् असौ सम्यक् एव जानीयात् । स्वधर्म-शास्त्रीय-रहस्य-ज्ञानं सुखेनैव संपादयेत् । महिष्ठ-गरिष्ठ-पूर्वजानां पुण्यतमानि चरित्राणि विज्ञातुं प्रभवेत् । भूयिष्ठम् एव सुस्थिरं भवेत् स्वत्वे अवस्थानम् एतस्य । यदि नाम न स्यात् स्वत्वं, तर्हि किं तावत् पौरुषं नाम? तत् एतत् सर्वमपि तदैव स्यात् यदि नाम राष्ट्रभाषात्वम् एतस्याः (संस्कृत-भाषायाः) संमानितं स्यात् ।

संस्कृतस्य राष्ट्रभाषात्वं स्वयंसिद्धम् अपि न इदानीम् एव दृग्गोचरीभूतं, किंतु षष्टि-वर्षेभ्यः प्राक् एव । तदा हि संस्कृतप्रचारकेषु मूर्धन्यताम् आवहद्भिः कै. विद्यावाचस्पति श्रीअप्पाशास्त्रि-राशिवडेकरमहोदयैः स्पष्टतया एव घोषितम् एतत् । यथा चैतत् तथा ग्रन्थस्य अस्य उत्कृष्ट-पर्वणि स्फुटीभविष्यति। अत एव संस्कृतराष्ट्रभाषात्वस्य प्रस्तुतकालिकाः द्रष्टारः श्रीअप्पाशास्त्रिणः एव इति निःसंदेहम् इदम् ।

निखिलेऽपि भारते संस्कृतसंसारम् उत्प्रेक्षमाणैः श्रीअप्पाशास्त्रिभिः संस्कृतचन्द्रिका च सूनृतवादिनी चेति पत्रिका-द्वितयं प्रचारितम् । तदर्थम् एव भाषणानि प्रदत्तानि। संस्कृतार्थम् एव आसीत् एतेषां समस्तोऽपि प्रयत्नाटोपः। संवीक्ष्य खलु एषां प्रबन्ध-प्रणयन-पाटवं, स्तोतुम् एतत् मूकः भवेत् वाचस्पतिः अपि । का पुनः कथा वराकाणाम् अस्मादृशानाम्? तदीयम् अवदानं संस्कृत-प्रियाणां संमोदयेत् अन्तरङ्गं, संजनयेत् च तादृशीम् एव संस्कृत-राष्ट्र-भक्तिम् इति प्रिय-पाठक-मेघ-वृन्देषु चातकायमानः विरमामः ।

**औदुम्बर (साङ्गली–महाराष्ट्र)** **वासुदेवशास्त्री औदुम्बरकरः**
बलिप्रतिपदा, १८९५

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha



## शरण्यः संस्कृत-पत्र-विश्वस्य ।

'शारदा'-काराणां मार्गदर्शी महर्षिः स्वर्गीयः विद्यावाचस्पतिः राशिवडेकर अप्पाशास्त्री । संस्कृत-साहित्य-क्षेत्रे नूतन-युग-निर्मातृत्वेन सर्वश्रेष्ठं तपोधनं 'चन्द्रिका-सूनृतवादिनी'-कारं स्मारं स्मारम् एव अग्रतः सरति 'शारदा'। अप्पाशास्त्रि-जन्म-शताब्दी-मङ्गले पं. ओदुम्बरकर वासुदेवशास्त्रि-विरचितम् 'अप्पाशास्त्रि-चरितम्' प्रकाशयितुं लब्धा-वसरा 'शारदा' स्वात्मानं धन्यां मनुते ।

अप्पाशास्त्रि-प्रज्वालितस्य संस्कृत-पत्र-पाण्डित्य-रूपस्य नन्दादीपस्य संरक्षणम् एव स्वीयं जीवनव्रतं मन्यमानाः 'शारदा'-काराः साभिवादनं प्रार्थयन्ते वर्धिष्णुतां संस्कृत-पत्र-विश्वस्य यावच्चन्द्र-दिवाकरौ ।

शारदा-गौरव-ग्रन्थमाला, पुणें ३० — वसन्त अ. गाडगीळ

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# विद्यावाचस्पतिर्जयति ।

कोल्हापुरीय-राशिवडे-ग्रामे लब्धजनुरसौ वाग्ग्मी ।
अप्पाशास्त्रि-सुशर्मा विद्यावाचस्पतिर्जयति ॥ १

श्रीमत्सदाशिवेश्वरभक्तानां विद्वदग्र्यवर्याणाम् ।
भट्टसदाशिवनाम्नामेकोऽसौ तनुजनुर्जयति ॥ २

यो हि त्रयोदशे निजवर्षे पञ्चाङ्ग-गणितमातनुत ।
व्यस्मापयच्च निखिलान् सोऽयं विद्वान् चिरं जयति ॥ ३

कोल्हापुरीयपण्डितकान्ताचार्येषु भक्तिमान् गुरुषु ।
प्राधान्येन व्याकरणेऽधीती शास्त्रविद्वरो जयति ॥ ४

श्रौतस्मार्तपुराणानुसृतसुतन्त्राङ्गनेऽञ्जसाऽमृतवाक् ।
प्रतिभामात्रविलासितनैपुण्यक्रीडनः स संजयति ॥ ५

वङ्गनिवासिसुपण्डितवर्यैरास्वाद्य वाक्सुधामेषः ।
विद्यावाचस्पतिरिति यथार्थनाम्ना सुपूजितो जयति ॥ ६

वाराणसेय-भारत-धर्म-महामण्डलेन सप्रणयम् ।
विद्यालङ्कार-महामहोपदेशक-पदार्हितो जयति ॥ ७

संस्कृतचन्द्रिकया सह संगममासेव्य पञ्चमे वर्षे ।
विलसन् नितरां वाङ्मयबन्धामृतवर्षणैः सुधीर्जयति ॥ ८

स्वयमेव प्रतिशब्दं पीयूषस्राविणीं प्रधीररमणीयम् ।
सूनृत-वाद-लसन्तीं प्रभावयन् पत्रिकां जयति ॥ ९

मालविका-वेणी-नल-सावित्री-बुद्धचरित-विवरणकृत् ।
वैष्णव-भविष्य-भारत-टीकाकृद् वाक्पतिर्जयति ॥ १०

अनुपम-सुरवाक्-पाटी-सुधा-प्रणालीः सदैव संतन्वन् ।
रमणीय-वर्ण-रचनैर्मनस्वि-चेतोहरः सदा जयति ॥ ११

नाना-शास्त्र-विभाषा-भाषा-तन्त्रेषु लोक-वृत्तेषु ।
पूर्णमतिश्च गरिष्ठः शिवभक्तेराश्रयः सदा जयति ॥ १२

(शारदा-दीपावली १९६१)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha



विद्यावाचस्पतिपदविडम्बनः श्रीअप्पाशर्मा-
सं-चं-प्र-सम्पादक

जन्म कार्तिक शु. १३, १७९५          मृत्यु आश्विन व. ११, १८३५



**ज न्म श ता ब्दी .... अ भि वा द न म्**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# पूर्वपर्व

## १. भारतीय-विद्यानां संस्कृत-घटितत्वम् ।

परिचितमेव सर्वेषां 'संस्कृतिः संस्कृताश्रिता' इति वचनम् । अत्र उल्लिखिता संस्कृतिः पुनः भारतीया एव । सा एव संस्कृतभाषया संघटिता । तथाहि । संस्कृतिः नाम परंपरया संप्राप्ताः ज्ञान-विज्ञान-कला-विचाराचाराः । एतेषां ज्ञानादीनां संबन्धिनः भारतीयानां ये ग्रन्थाः ते संस्कृतभाषायाम् एव निबद्धाः । सन्तु पुनः अन्याः ताः ताः प्राकृतभाषाः, तदुद्भवाः च अपभ्रंशदेश्यादिभाषाः । तथापि तत्तासु भाषासु तादृशी ग्रन्थ-संपत्तिः नैवास्ति, यादृशी सेयं संस्कृतभाषायां वैपुल्येन विराजते । अत्र केचित् 'संस्कृतात् प्राक्तनी प्राकृतभाषा, सैव संस्कारैः परिष्कृता संस्कृत-भाषा इति उच्यते, अतश्च प्राकृत-भाषायाः एव सन्तानं संस्कृतम्' इति प्रजल्पन्ति । तत् एतत् रभसात् । प्राकृत-भाषायाः व्याकरणप्रणेतृभिः संस्कृतम् एव उपजीव्य प्राकृतं परिव्याकृतम् । समुद्घोषितं च 'प्रकृतिः संस्कृतं तत्र भवं प्राकृतमुच्यते' इति । अपि च । यदि नाम प्राकृतम् आदिभाषा अभविष्यत् तर्हि ज्ञान-विज्ञानादि-ग्रन्थाः अपि तस्यां वैपुल्येन अभविष्यन् । न पुनः सन्ति तादृश-विविध-विषयमयाः ग्रन्थाः प्राकृत-भाषायाम् । विद्यन्ते तु एते संस्कृतभाषायाम् असंख्याः एव । अतश्च प्रतीयते सिध्यति चैतत् यत् संस्कृतभाषा एव सर्वाद्यतमा इति । वेद-वेदार्थ-धर्म-शास्त्र-पुराणेतिहास-च्छन्दः-कोश-तर्क-मीमांसा-सांख्य-योग-वेदान्त-साहित्य-चार्वाक-जैन-बौद्ध-न्याय-शिल्पायुर्वेद-ज्योतिःशास्त्र-गान्धर्व-राज-नीति-तन्त्रशास्त्र-प्रभृतिसमस्त-विषय-व्यापिना वाङ्मयेन तेजसा भगवती संस्कृतभाषा विभ्राजते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**२. संस्कृत-राजनीतेः कालः ।**

सा इयं विविध-विषय-तल-स्पर्शिनी संस्कृतविद्या एव प्राचीने समये भारतस्य प्रधान-विद्या समवर्तत । मेधाविनां प्रवराः संस्कृतविद्यान्तर्गताम् एव शाखाम् अधीत्य प्रतिभाम् आत्मीयां प्रकाशयामासुः । संगीतादि-कलावन्तः संस्कृतवाङ्मयम् एव अभ्यस्य परमात्म-स्वात्म-मनोरञ्जनं विदधुः । संस्कृत-तर्कशास्त्र-निकषोपले एव घर्षितवन्तः धीमतां प्रवराः विचारशक्ति-सुवर्णम् । संस्कृत-राजनीतिम् एव अनुसृत्य नृपालाः राज्य-शासनं चक्रुः । संस्कृत-तत्त्वज्ञानम् एव अभ्यस्य स्वीयं मनः संस्कृतम् अकुर्वन् ज्ञानिनः । एवं च राजानः, सचिवाः, पण्डिताः, सैनिकाः, कृषी-वलाः, वणिजः, भृत्याः, कलावन्तः, शिल्पिनः, भिक्षुकाः चेत्यादयः सर्वेऽपि संस्कृतोपज्ञेन एव वर्त्मना श्रेयः आत्मीयं संपादयामासुः । सोऽयं भार-तीयः संस्कृतसंसारः सहस्रसंवत्सरेभ्यः प्राक्तनं समयं यावत् अक्षुण्णतयैव प्रचलन् आसीत् । यावत् च भारतीयाः एव शासकाः प्रदेशम् एनं शासितवन्तः ।

भारतवर्षीयाणां प्राचीनेतिहासः सुसमृद्धि-द्योतकः इति प्रायोवादः अयं पुरावृत्तविदाम् । ततश्च मध्यमः कालखण्डः अज्ञानादि-दोष-भूयिष्ठः । ततः परं च अर्वाचीनः अयं समयः पुनरपि विज्ञान-प्रवृत्तः इत्यपि संमतम् एतेषाम् । तत् एतत् स्वीकरणार्हम् एव । भारतवर्षीयाणां प्राचीनः कालः समृद्धः आसीत् इत्यत्र निदानं न खलु दुर्लभं विज्ञातुम् । संस्कृतविद्या एव हि समृद्धि-निदानभूता इति । यावत् हि संस्कृत-विद्या पूर्वोक्तरीत्या सर्वत्रैव भारते प्रचलिता आसीत्, तावत् सर्वम् अपि जीवनं भारतवर्षी-याणां संस्कारमयं समृद्धम् एव आसीत् । यदा पुनः संस्कृत-संस्कृतिः क्षीणा भवितुम् आरब्धा, ततः समृद्धिः अपि भारतवर्षस्य तादृशीम् एव अवस्थां संप्राप्ता इति सुशकम् एतत् अवबोद्धुम् ।

अयं तु संस्कृत-शासन-समयः गौतमबुद्धपर्यन्तवर्ती । ततः परं हि पालिप्रभृतिप्राकृतभाषाणाम् एव सुतरां प्रचारः संवृत्तः इति । ततः प्राचीने समये यद्यपि प्रचरिताः एव आसन् प्राकृतभाषाः, तथापि सभ्यानां भाषा संस्कृता एव आसीत् । अस्मिन् एव महति कालखण्डे श्रीमतः मनोः आरभ्य नन्दान्ताः क्षत्रिय-भूपालाः समभूवन्, येषां पुण्यतमेन चरितेन

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संस्कृतसंसारः समृद्धः अभवत्, संस्कृत-विद्या-प्राप्त-सदाचार-परिपालनेन वा तेषां चरितं पुण्यतमं बभूव इति दुःशकम् एतत् विनिर्णेतुम्।

बुद्धेन महावीरेण च प्राकृतभाषया एव धर्मतत्त्वानां प्रचारः प्रारब्धः इति संस्कृतभाषायाः व्याप्तिः क्रमशः न्यूनभावम् आसादयत्। अलक्ष्येन्द्रादीनां (अलेक्झाण्डर) वैदेशिकभूपानां समाक्रमणम् अपि इतःपरं प्रारब्धम्। ततश्च स्वास्थ्यं भारतवर्षीयं शनैः शनैः विनष्टं, गहन-शास्त्राणाम् अभ्यासः च शिथिलः बभूव। यद्यपि परकीयाणाम् आक्रमणेन स्वास्थ्यम् अत्रत्यं विनाशम् उपयातं, तथापि यावत् संस्कृत-प्रियाः राजानः आसन् तावत् इयं संस्कृत-विद्या राज्ञाम् आस्थान-मण्डपेषु गौरवं भेजे। सोऽयं कालः हर्षवर्धनपर्यन्तः। ततः परस्तात् पुनः वैदेशिकानां स्वाम्यं यथा यथा भारतवर्षं व्याप्नोत् तथा तथा संस्कृत-संसारः म्लेच्छ-स्पर्श-दोष-भयात् इव संकोचितवान् आत्मानम्। एवं च यावत् विरेजे संस्कृतराजनीतिः तावत् संस्कृतविद्यायाः आसीत् उत्कर्षः।

### ३. माहम्मदानां पदक्षेपः।

प्रायः सहस्रसंवत्सरात् प्राक् माहम्मदानां भारतवर्षीय-प्रदेशेषु स्वाम्यम् आरब्धम्। तत् नैतत् आश्चर्यं यत् स्वास्थ्येन सह भारतीयानां स्वकीयसंस्कृत्यनुकूलं शासनम् अपि लुप्तम् अभूत इति। भूयिष्ठाः एव विद्यालयाः, देवालयाः, धर्मालयाः नष्टदग्धप्रायाः अभूवन्। अहो अमीषां क्रौर्यम्! संस्कृतसंसारः एतेषां क्रौर्यस्य बलिः अभवत्। प्रासरत् च सर्वत्रापि मोहाज्ञानाधर्मादि-दोषबहुलम् असंस्कृतं तमःपटलम्। प्रतिकूलेऽपि पुनः अस्मिन् समये धन्यतमाः केऽपि प्राणान् अपि अविगणय्य संस्कृतसंस्कृति-रक्षणे तत्पराः अविद्यन्त। केऽपि पुनः वैदेशिकाः अपि भूपालाः विद्याप्रियाः अभूवन् यदाश्रिताः पण्डितराज-जगन्नाथादयः संस्कृतभारतीं परिपोषित-वन्तः। अन्तरा अन्तरा भारतीयं शौर्य-तेजः किमपि प्रखरतरम् अभूत्; यत्प्रभावेण माधवाचार्यादयः संस्कृतविश्वं समुद्भासितवन्तः। नैके पुनः एतादृशाः अपि समभवन् ये किल स्वीयतपोबलेन समुद्दध्रुः संस्कृतं जगत्, यथा नारायणभट्टः। (अनेन किल पर्जन्यवर्षं कारयित्वा माहम्मदेभ्यः काशीविश्वेश्वरं स्वायत्तीकृत्य तन्मन्दिरं निर्मापितम् इति प्राहुः।) किन्तु शासकानाम् एव परधर्मविद्याविद्वेषित्वात् नैव पूर्वरूपं समाससाद संस्कृत-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संसार:। प्रत्युत हीनहीनाम् एव दशां प्रतिक्षणं प्राप्त: अयम्। एतां दुरवस्थितिम् अवलोक्य स्व-संस्कृति-संरक्षणाय बद्धकटिषु भारतीय-भूपालेषु छत्रपति: श्रीशिवराज: गरिष्ठ:। एष: एव च अन्तिम: आर्यवंशीय: क्षात्र-तेज:प्रोद्भासी राजाधिराज: इति मन्यामहे। एतस्यैव शौर्यकौशल्यं माहम्मदानां मद-विध्वंसनाय प्राभवत्।

**४. माहाराष्ट्र-भटच्छटा रणपटु:। —श्रीवेङ्कटाध्वरी।**

श्रीशिवाजिराजस्य अवदानराजि: विराजयति कविराजराजीनां काव्यराजिम्। माहम्मदीयानां शासन-प्रभावात् भारतीय-भाषासु अपि भूयसी विकृति: समपद्यत। शुद्धभाषैव हि सार्वत्रिकशुद्धे: मुखम्। अत: एव धर्मभूमिपरित्राणदीक्षितेन महाराजेन अमुना भाषाशुद्धिरक्षणाय राज्यव्यवहारकोश: निर्मापित:। अहो दूरदर्शिता महाराजस्य! यद्यशोगानतल्लीना: कविवरा: अद्यापि न सन्तुष्यन्ति। कवीन्द्र-परमानन्द: शिवराजसमकाले एव प्रादुर्भूय तं प्राशंसत्। तत: पुरुषोत्तमकवि: श्रीशिवकाव्यं प्रणिनाय। अम्बिकादत्तव्यासमहोदय: शिवराजविजयं संग्रथ्य समुद्धूतवान् शिवराजयश:पताकाम्। अद्यापि डॉ. श्रीवर्णेकर-सरसवाणीप्रणाल्या प्रवहन्ती श्रीशिवराज्योदयकीर्ति: सीमाम् आत्मीयां नि:सीमां वितनोति। साधु शंसति भविष्यपुराणम् अपि — 'सेवाजयो नाम, नृपो देवपक्षविवर्धन:' (प्रतिसर्ग. खं. ४ अ. ४६ श्लो. ५१) इति। अहो प्रभाव: शिवराजस्य! यन्नाम्ना महाराष्ट्र-शब्दान्तर्गतं महत्त्वं सार्थम् अभूत्। शिवराजप्रधान-परंपरया पुण्यपुरेऽपि श्रावण-भाद्रपद-मासयो: पण्डित-पुण्डरीक-सत्कार: प्रक्रान्त: आसीत्। येन खलु नानादिग्देशवास्तव्या: पण्डितवरेण्या: स्व-स्व-प्रावीण्यानुकूलं सत्कारम् अवाप्य समवर्धयन् संस्कृत-विद्याभ्यास-परंपराम्। यतश्च वाराणसीसदृशं महत्त्वम् एकदा समवाप्तं पुण्यपत्तनेन। प्राय: सर्वत्र भारतीय-प्रदेशेषु शासनम् उपक्रमते स्म पुण्यपुरीयं किन्तु तावदेव, हा धिक्...कालवशात्! अगात् शिवराजप्रणीतम् अपि राज्यम् एतत्, प्राप च प्रतिष्ठां पाश्चात्यदेशीयानां शासनम्।

**५. हूणा: करुणाहीना:। — श्रीवेङ्कटाध्वरी।**

यद्यपि हूणापरपर्याया: इमे आङ्गला:, फ्रेञ्चा: पोर्तुगालीया: च वैदेशिका: एव तथापि माहम्मदेषु एतेषु च महद् अन्तरम्। माहम्मदा: हि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नातिविचक्षणाः बाह्यानि एव अङ्गानि भारतीयानां विध्वंसयितुं प्रायतन्त। हूणास्तु धूर्तप्रवराः अन्तरङ्गं भारतीयानां सूक्ष्मेक्षिकया चिच्छिदुः। विशेषतः पुनः आङ्ग्लाः कर्मणि अत्र कृतहस्ताः। एते हि संपादयन्तः नाम भारतीयानां भौतिकं श्रेयः आध्यात्मिकं तदेतद् अशेषमपि विहायसि चित्रितम् इव अकुर्वन्। एतैः खलु भारतीयानां मानसे परंपरया प्रचलितेषु आचारेषु विद्वेषः समुत्पादितः। भौतिकाविष्काराणां चाकचक्य-मुग्धैः तदेकप्रवणैः भूयिष्ठैः भारतीयैः अपि स्वात्मा विस्मृतः इव। आङ्ग्लानां पुनः वञ्चना-जाल-प्रवीणत्वात् भारतीयैः भौतिकः अपि उत्कर्षः तावत् नैव प्राप्तः। एतदेव वञ्चनाजालम् एतेषां भेत्तुं पुरःसृतैः नेतृभिः महद् आन्दोलनं कृतं; यस्य प्रभावतः कारणान्तरेण च भारतत्यागः एव हूणैः अभिमतः। तदेतद् विस्तरशः ऐतिह्यप्रबन्धान्तरेषु द्रष्टव्यं, नायम् अस्माकं विषयः इति। प्रस्तुततया संस्कृत-विद्या-संबन्धम् एव अत्र निर्देष्टुम् इच्छामः।

**६. प्रमोदनृत्यं तदतीतमेव। — अन्नदाचरणतर्कचूडामणिः।**

यदा महाराष्ट्रीयं पण्डितप्रधानशासनं समाप्तं तदा खलु सर्वत्र भारतवर्षे घनिष्टभावम् आपेदे राज्यम् आङ्ग्लानाम्। ततश्च तदेतत् प्रचालयितुं भूयिष्ठानाम् एव कार्यकर्तृणाम् आसीत् आवश्यकता। भारतीय-पद्धत्या अधीतविद्यानां जनानां तदानीम् अभवत् सुतराम् उपेक्षा एव। अधीतसंस्कृतविद्याः स्वाभिमानिनः मात्रयाऽपि आङ्ग्लानाम् आधिपत्ये नैव तदीयधोरणीं पुरस्कृतवन्तः। खण्डप्राये पुनः भारते आङ्ग्लानुकूलानाम् एव जनानाम् अपेक्षा आसीत्। तदात्वे पुनः भारतवर्षे तादृशाः आङ्ग्लानुकूलाः अतीव स्वल्पाः एव आसन्। बहु-दवीयसः स्वीय-देशात् तावताम् अधिकारिणाम् आनयनं तु अशक्यप्रायम् एव आसीत्। एतस्याम् अवस्थायां निजमतानुसारेण वर्तमानाः जनाः अत्रैव निर्मातव्याः आसन्। तच्च निर्माणं नाम भारतीयेभ्यः आङ्ग्लशिक्षणप्रदानम् एव। अत एव च आङ्ग्लशासकैः स्वीयमतानुसारिशिक्षणप्रदानोद्यमः प्रारब्धः। लॉर्ड बेण्टिङ्कनाम्नः भारताधिकृतस्य शासनसमये १८३५ ई. वर्षे भारतीयजनेभ्यः किंविधं शिक्षणं प्रदेयम् इति निर्णयाय समितिः एका नियोजिता। तस्याः किल अध्यक्षः लॉर्ड मेकॉलेमहाभागः आसीत्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुप्रथितम् एव हि विद्या-प्रियत्वम् आङ्ग्लानाम्। अतश्च भारतीयेभ्यः शिक्षणप्रदाने केवलम् एतेषां स्वार्थः एव आसीत् न वा इति दुर्वचम्। स्वकीय-राज्य-वासिनः जनाः ज्ञानिनः भूयासुः इत्यपि स्यात् एतेषां विचारः। किन्तु शिक्षितैः एतैः शासनानुकूलतया एव वर्तितव्यं, मात्रयाऽपि न तावद् विरोधः करणीयः इति अपेक्षा पुनः आसीत् एव एतेषाम् इत्यत्र नास्ति सन्देहः। मेकॉलेप्रभृतीनां संस्कृत-विद्यायाः परिचयः विकृतः एव आसीत्। वास्तविकं तथ्यं विज्ञानं संस्कृते नामतः अपि नास्ति इति स्वनिवेदने मेकॉलेमहाभागः प्राह स्म। आङ्ग्ल-भाषा एव सर्वतः ज्ञानविज्ञानदृष्टचा संपन्नतरा इति मतम् आसीत् एतेषां मेकॉलेप्रभृतीनाम्। तत् एतत् भौतिकविज्ञानदृष्टचा तथ्यम् आसीत्। तथापि भाषाशास्त्र-नीति-धर्म-तत्त्वज्ञानेत्यादिविषयाणां तु वैदेशिकानां ज्ञानं नैव तथ्यपूतम् आसीत्। ततश्च नैतत् आश्चर्यं यत् मेकॉलेमहाभागेन स्वीयनिवेदने संस्कृत-विद्यायाः उपहासः कृतः प्रतिपादितं च 'आङ्ग्ल-विद्यैव आङ्ग्लभाषया एव भारतीयेभ्यः प्रदेया' इति। इतश्च संस्कृत-विद्यायाः नाममात्रम् अपि स्थानं नावशिष्टम्। तदानीन्तनशिक्षितसमाजे संस्कृतज्ञाः एव आसन् भूयांसः। संस्कृतविद्यापक्षपातिभिः एतैः 'संस्कृत-विद्या एव भारतीयेभ्यः प्रदेया' इत्येतदर्थं बहु प्रयतितम्। संस्कृतं नाम-शेषताम् आपन्नम् इति वीक्ष्य भारतीयेषु महान् क्षोभः समजनि। किन्तु नेदम् आन्दोलनम् एषां सिद्धिम् उपेयाय। प्रशमयितुम् इव पण्डितानां क्षोभं लॉर्ड आकलंदमहाभागैः मेकॉलेनिवेदनस्य पुनर्विचारः इव आरब्धः; यत् किञ्चित् च तत्र नाममात्रम् एव परिवर्त्य तदेव निवेदनं स्थिरीकृतम्। (इ. १८३९) तत्र एतावान् एव विशेषः प्रकटीकृतः 'परंपराप्राप्तं पाठ-शालीयम् अध्ययनं तथैव प्रवर्तितव्यम्। शास्त्रीयविषयाणाम् अभ्यासः प्रशालासु महाशालासु च आङ्ग्लभाषयैव विधेयः। सोऽयं शास्त्रीय-विषयाणाम् अभ्यासः प्रदेशीय-भाषा-द्वारा अपि तदभिलाषुकैः कर्तव्यः। उत्तेजन-द्रव्यादि पुनः प्राचीन-नव्ययोः शिक्षणक्रमयोः कृते समानम् एव स्यात्।' इति। किन्तु प्रत्यक्षदशायां संस्कृतविद्यया नैव लब्धः राजाश्रयः नाम। अपि तु आङ्ग्लविद्या एव झटिति सुसमृद्धा समभवत्।

आरम्भावस्थायां नव-शिक्षितेषु संस्कृताङ्ग्ल-विद्ययोः सुमधुरः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संगमः दृष्टिपथम् उपेतः। किन्तु आङ्ग्लभाषा एव ऐहिकसर्वविद्योत्कर्ष-प्रदात्री इति संस्कृतविद्याध्येतॄणां संख्या क्रमशः न्यूनीभूता। नव्य-शालासु शिक्षितानां परस्तात् स्वधर्म-स्वभाषादिविषयेषु तिरस्कारः समुदेति स्म। अवस्था पुनः एषा संस्कृतविद्यायाः कार्श्याय एव प्राभवत्। अतः एव तस्याः समुन्नयनाय संस्कृतपण्डिताः तत्र तत्र प्रयत्नान् अन्वतिष्ठन्। तत्र तत्र संस्कृत-विद्या-परीक्षाः प्रारब्धाः।

आङ्ग्लानाम् एव संपर्कात् प्रथमतः अभूतपूर्वः एकः उपाधिः संस्कृतभाषया समुपार्जितः। कः पुनः एषः इति चेत् सोऽयम् 'मृतभाषा' इत्येव। संप्रति प्राप्तस्वातन्त्र्ये अपि स्वदेशे उपाधिः अयं भाषाम् एनां न त्यजति इति निरीक्षितव्यम्। अनेन एव व्यापारेण कुशलधूर्तत्वं स्वकीय-विद्या-प्रचारक-धुरीणानाम् आङ्ग्लानाम्। संस्कृतभाषायां विविध-विषयेषु विद्यमानानां ग्रन्थानां विषये अज्ञानम् एव आसीत् भूयसाम्। अतः ग्रन्थानां मुद्रणम् एव सर्वाद्यः कल्पः इति विनिश्चित्य 'राजाराजेन्द्रलाल-मित्र'-महाभागैः (वङ्गीयैः) 'बिब्लिओथेका इण्डिका' इत्याख्यं मासिकपत्रं प्रकाशयितुम् उपक्रान्तं, प्रकाशिताश्च तद्द्वारा भूयांसः एव संस्कृत-ग्रन्थाः। वङ्गेषु जीवानन्दविद्यासागरप्रभृतिभिः, वाराणस्यां चौख-म्बासंस्कृतग्रन्थमालया, अलाहाबादे बसुप्रभृतिभिः, मुम्बय्यां निर्णयसागर-श्रीवेङ्कटेश्वरमुद्रणालयादिभिः, मद्रासप्रान्ते वाणीविलासमुद्रणालयादिभिः ग्रन्थानां मुद्रणप्रकाशनादि उपक्रान्तम्। येषु नैकविधविषयेषु भूयांसः एव ग्रन्थाः संमुद्रिताः। वाराणसेय-संस्कृत-महाविद्यालयस्य पण्डित-पत्रिका इति-नामकं मासिक-पत्रकं प्रचलितं यत्र बहवः ग्रन्थाः एव क्रमशः प्रकाशिताः। अनया खलु ग्रन्थ-संपत्या संस्कृत-भाषायाः समृद्धिः विद्योतिता लज्जिताः च भाषायाः अस्याः उपहासकाः। भाषाप्रचाराय कोश-वैपुल्यम् अपेक्षितम्। अमर-विश्व-शाश्वत-मेदिनी-प्रभृतयः बहवः एव प्राचीनाः शब्द-कोशाः सन्ति संस्कृत-भाषायाम्। अथापि विशेष-प्रचाराय नव्यशैल्या कोश-निर्माण-कार्यं प्रारब्धम्। 'राजा सर राधाकान्त'-महाभागेन 'शब्द-कल्पद्रुम-कोशः' विनिर्मितः। पण्डितप्रवरेण तारानाथतर्कवाचस्पतिना 'वाचस्पत्यं बृहदभिधानम्' इत्याख्यः यथार्थनामा महान् कोशग्रन्थः प्रणीतः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं प्रकाशितान् अवलोक्य बहुविधान् संस्कृतग्रन्थान् पाश्चात्त्य-देशीयाः विद्वांसः संस्कृत-विद्यां रोचयामासुः। विलयम जोन्समहोदयेन प्रणीतं शाकुन्तलानुवादं पठित्वा जर्मनदेशीयः गटे-नामा कविः जहर्ष ननर्त च। शास्त्रीय-ग्रन्थानां वैपुल्यं वीक्ष्य वेदादि-ग्रन्थेषु एव महान् परिश्रमः प्रारब्धः पाश्चात्त्य-पण्डितैः। अत्र जर्मनदेशीयाः प्राधान्यं भजन्ते। भारत-वर्षे नव्य-शालासु संस्कृत-प्राध्यापकाः तदानीं यद्यपि उत्तम-श्रेणीयत्वेन आङ्ग्लाः एव आसन्, तथापि एतैः पाश्चात्त्यप्राध्यापकैः भारतीयपण्डितानां सकाशात् एव शास्त्रीय-ग्रन्थम् अधीत्य विद्यालयेषु अध्यापनं कृतम्। डॉ. बुल्हरमहोदयः पं. दिवेकरविनायकशास्त्रिणां सकाशात् धर्मशास्त्रम् अधीतवान्। पं. अनन्तशास्त्रिपेण्ढारकरैः डॉ. कीलहॉर्नमहाभागः व्याकरणे निपुणः कृतः। तथापि महद् आश्चर्यम् एतत् एव यत् प्राचीनपाठशाला-याम् अधीताः पण्डिताः स्वच्छात्राणां कीलहॉर्नादि-महोदयानाम् अपेक्षया दशांशम् अपि वेतनं नैव अलभन्त।

एवं पाण्डित्ये श्रेष्ठ-कक्षीयाः अपि भारतीयाः पण्डिताः नव्य-विद्यालयेषु शिक्षकाः सन्तः अपि न उत्तेजनं प्राप्नुवन्। सर्वथा शासनो-पेक्षितानां प्राचीन-पाठशालाध्यापकानाम् अवस्था तु स्वयमेव विचार्यतां पाठक-महाभागैः।

यद्यपि संस्कृतपण्डितानाम् आन्दोलनवशात् शालासु आङ्ग्ल-विद्यया सह संस्कृताध्यापनं प्रारब्धं, तथापि नेयं भारतीया विद्या पूर्वतनं वैभवं प्राप्तवती। तदानीं हि शासनम् आङ्ग्लानाम् आसीत्। इदानीं पुनः स्वायत्तशासनः भारतदेशः। स्वकीयभृत्यानां निर्माणं पाश्चात्त्यशासन-कालीन-विद्यालयानाम् उद्दिष्टम् आसीत्। एतर्हि भारतीयविद्यालयानां निष्कामकर्मयोगः प्रवर्तते। स्वधर्मप्रचारः अपि पाश्चात्त्यानां ध्येयकक्षायां विराजते स्म। प्रस्तुतं भारतीयं शासनं तद्विषये निरपेक्षं वर्तते। अतः नैव अत्र विस्मयस्य किमपि निदानं, यत् संस्कृत-कल्पलता म्लायन्ती एव स्थितवती इति। इदानीम् अपि अमूल्यनिधिः इति विश्वविख्यातैः समस्त-विश्वव्यापिभिः प्राचीननव्योभयैः पण्डितप्रकाण्डैः समर्थ्यमाना अपि संस्कृत-भाषा निजभूमौ अपि न लभते प्रधान-भाषा-पदम् इति किंविधः अयम्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आङ्ग्ल-शिक्षा-परिपाकः इति विचार्यताम एतत् धीमतां बुधैः। आस्तां तावत् एतत्।

नव्यशालासु शिक्षितानां हृदये प्रायः स्वत्व-प्रणयः नावशिष्टः। पाश्चात्त्य-वेष-भूषा-धर्म-विधानाम् अनुकरणम् एव बाहुल्येन ते एते विहितवन्तः। यत्र भारते संस्कृत-संस्कृतेः प्रमोद-नृत्यम् अभूत्, तत्रैव असंस्कृत-प्राया काऽपि पद्धतिः कृतपदक्षेपा बभूव।

७. संस्कृतविद्योदयः समुदितः।

नव्यशालासु शिक्षितानां हृदये स्वजन्मभाषां प्रति अपि प्रद्वेषः इव समभूत् किमु कथा संस्कृतभाषायाः। आङ्ग्लवाङ्मयस्य पुरः सर्वम् अपि भारतीय-भाषा-जालं कःपदार्थः इति ते एते अमन्यन्त। तेषाम् इमां पर-प्रत्यय-नेय-बुद्धिं स्वाभिमान-विहीनतां च दूरीकर्तुं प्रादेशिक-भाषासु तत्तद्-विद्वद्भिः तत्तानि मासिकादि-पत्राणि प्रकाशयितुम् उपक्रान्तानि। महाराष्ट्रेषु ज्ञानप्रकाश-केसरि-प्रभृतीनि वृत्तान्त-पत्राणि प्रादुरभूवन् निबन्ध-माला-प्रभृतीनि मासिक-पत्राणि च। निबन्धमाला-मासिकपत्र-द्वारा तस्य संपादकैः पं. विष्णुशास्त्रिचिपळूणकरमहाभागैः महाराष्ट्रीयेषु स्वाभिमानजागृतिः कृता। स्वधर्म-स्वदेश-स्वभाषा-विषये निष्ठा समुत्पादिता। प्रदर्शितं च महाराष्ट्री-भाषायाः उज्ज्वलं स्वरूपम्। एवम् अन्य-प्रदेशेषु अपि राष्ट्रभक्ति-वर्धनाय पत्रिकादिप्रचारद्वारा प्रयत्नाः अभूवन्। तत्तत्प्रदेश-भाषायाः गौरवप्रतिष्ठापकानि विविधानि पत्राणि प्राकाशन्त। यत्फलभूततया राष्ट्रियम् आन्दोलनं प्रारब्धम्। एवं भारतीयाः जागृताः भवितुम् आरब्धाः। तथापि संस्कृतभाषायाः परिस्थितिः यथास्थिता एव आसीत्। मृतभाषा इति संस्कृतभाषायाः वैदेशिकैः प्रदत्तं मानपत्रबिरुदं भारतीयाभारतीयानां मनःसु कृतदृढस्थानम् एव आसीत्। संस्कृतपण्डितैः आङ्ग्ल-वाङ्मय-परिचयात् निबन्धलेखनस्य रीतिः उपलब्धा। यथा किल आङ्ग्लपत्रिकानुसरणेन प्रादेशिक-भाषासु पत्रिकाणां प्रकाशनं प्रारब्धम्, तथैव संस्कृतभाषायां सर्वप्रथमं मासिक-पत्रम् एकं प्रकाशयितुम् उपक्रान्तम्। तस्य च नाम '**विद्योदयः**' इति। अस्य संपादकाः वङ्गीय-पण्डितवर्याः श्रीहृषीकेश-शास्त्रिणः। विद्योदयस्य प्रकाशनारम्भः १८७३ इ.

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वर्षे समभूत्। अत्र काव्य-शास्त्रार्थ-निबन्ध-वृत्तान्तादिविषयाः प्रकाशयितुम् उपक्रान्ताः। १८८८ इ. वर्षे च केरलेषु **विज्ञान-चिन्तामणिः** नाम साप्ताहिकपत्रं प्रकाशयितुम् आरब्धम्। अत्र निबन्ध-समस्यापूरणादिभिः सह संक्षिप्तवृत्तान्ताः अपि प्रकाश्यन्ते स्म। **विद्योदयः** अयं पाश्चात्त्यैश्च भारतीयैश्च पण्डितैः बहु प्रशंसितः। नव्य-शैल्या विलिखिताः अत्रत्याः निबन्धाः भृशं प्रशंसास्पदम् अभूवन्। **विद्योदये** प्रकाशितानां केषाञ्चित् निबन्धानां संग्रहः 'प्रबन्ध-मञ्जरी' इत्याख्यया पुरतः प्रकाशम् आससाद। अयं तु संस्कृत-पत्रिका-प्रकाशनस्य प्रारम्भः एव आसीत्। ततश्च वृत्तपत्रीयसौष्ठवस्य पूर्णता नैतयोः पत्रिकयोः अभवत् इति नेदम् आश्चर्यकरम्। तथापि संस्कृत-संसारः नव्येन अनेन प्रकारेण समाकृष्टः इति तु सत्यम्।

तदानीन्तने समये प्रकाशितेषु पत्रेषु भूयसां राष्ट्रभक्ति-समुद्दीपनम् एव आसीत् उद्देश्यम्। प्रादेशिक-भाषासु बहूनि तद्विषयकाणि व्यराजन् पत्राणि। अत एव तत्तद्भाषाविज्ञाः पत्रवाचनरसिकाः पर्यचिन्वन् स्वदेशीयं वैदेशिकं च नैकविधं वृत्तान्तम्। अबुध्यन्त च स्वदेशीय-समुन्नतिविषये किं तावत् अस्माभिः कर्तव्यम् इति। पोषयामासुः च नानाविध-नवीनविषयैः स्वभाषीयवाङ्मयम्।

संस्कृतभाषायां तु वृत्तान्तादिपत्राणां समृद्धेः अभावात् नैतत् शक्यम् अभवत्। सतां वा पत्राणां नाविद्यत सामर्थ्यम्। इदानीं संस्कृतप्रचारकाणां कर्तव्यता-कोटौ निर्दिष्ट-पूर्वाणि भाषान्तर-साधारणानि देश-विदेशवार्ता-प्रसारः, राष्ट्रिय-कर्तव्य-विचारः, नवीनशैल्या संस्कृत-वाङ्मय-संवर्धनम् इत्यादीनि विधेयानि आसन् एव। किन्तु ततोऽपि अधिकाः संस्कृत-भाषा-प्रचारणं, पण्डितेषु पत्रिका-प्रचारणं, राष्ट्रिय-कर्तव्येन-सह भारतीय-सांस्कृतिक-कार्याणां विचारः इत्यादयः अपि विषयाः अवर्तन्त। संस्कृत-भाषायाः स्वतः एव सरस-रमणीयत्वात् संस्कृत-विदुषां भाषान्तरीय-वाङ्मय-पठने अप्रवृत्तिः स्वाभाविकी एव। अत एव प्राप्तम् एतत् प्रादेशिक-भाषामय-पत्रिकाणां पठनं भूयसाम् एव संस्कृत-पण्डितानां नैव आसीत् इति। ततश्च देश-विदेश-वार्तानां गन्धः अपि नासीत् एतेषाम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत् एतत् एतान् ज्ञापयितुं नानाविध-विषयकं संस्कृत-पत्र-संपादन-विचक्षणत्वं समपेक्षितम् आसीत्। अस्माद् अपि महत्तमम् आवश्यकतमं च विधेयम् आसीत्—

### ८. नव्यविषयसंग्रहसमेतं प्राचीनसंस्कृतिरक्षणम्।

आङ्ग्ल-परिपाटी-परिचयवशात् नव्य-शालासु शिक्षितानां मतिः स्वदेशीयाचारादि-विषये विपर्यस्तप्राया अभूत्। अतश्च भारतीय-धर्म-संप्रदायेषु विविधाः आक्षेपाः एतैः आविर्भाविताः। तेन सामान्यजनानाम् अन्तरङ्गं धर्मविषये व्याकुलं बभूव। पाश्चात्त्य-संशोधित-नवनवाविष्काराणां तेजोभिः प्रतिहतदृष्टयः भूयिष्ठाः एव संस्कृतसंस्कृतिं निनिन्दुः। अस्यां दशायां बहुभिः एव विद्वद्भिः आक्षेपान् एतान् निरसितुं प्रयत्नः कृतः। अथापि ते एते विद्वांसः एकदेशीय-विचाराः आसन्। तथा हि। ये तावत् संस्कृतपण्डिताः ते प्रायः स्वदेशेतिहासादि-विषये उदासीनाः समवर्तन्त। ये च पुरा-वृत्त-विदः न ते सनातनधर्मे श्रद्धालवः आसन्। ये तु तत्र श्रद्धालवः न ते वैज्ञानिक-वार्ताम् अपि अशृण्वन्। येऽपि विज्ञानसंपन्नाः नैते राष्ट्रभक्ताः। ये च राष्ट्रभक्ताः ते तु धर्म-परिवर्तन-वादिनः। ये तु धार्मिकाः ते संस्कृतप्रचारे पराङ्मुखाः। येऽपि प्रचारकाः तेषु भाषान्तराणां विषये न प्रीतिः। बहुभाषाविज्ञत्वेऽपि संस्कृतभक्तिः निकामं दुर्लभा। सत्याम् अपि एतस्यां गद्यपद्यात्मक-साहित्य-प्रणेतृत्वं विरलतरम्। प्रणयशालित्वेऽपि पत्रिका-संपादन-कौशल्यं दुर्लभम्। सत्सु अपि पुनः एतेषु गुणेषु परमेश-भक्तिः निकामं दुर्लभा। एवं नाना-तन्त्र-विचक्षणाः सर्व-भूमिका-शालिनः पुरुष-धौरेयाः विरलतमाः एव। अपि च। 'मृतभाषा संस्कृतम्' इति प्रवादस्य समुद्धूलनाय गरीयान् एव प्रयत्नः आवश्यकः आसीत्। सः च संस्कृतस्य व्यवहार-सौलभ्य-संपादनम् एव। तदर्थं हि प्रचलितविषयेषु सरलसरलया संस्कृतभाषया प्रबन्धप्रणयनम् आवश्यकम् आसीत्। एवं संस्कृतसंसारप्रवर्तनार्थं समपेक्षितानां गुणानां गणः नैकत्र क्वापि व्यराजत। अत एव च तत्तेषां विद्वत्प्रकाण्डानां प्रयासाः न तावत् सार्वभौमत्वं प्राप्नुवन्। तद् एतत् न्यूनत्वं संस्कृतसंसारे विद्यावाचस्पति-श्री. अप्पाशास्त्रिराशिवडेकराणां प्रादुर्भावेण पलायितम् इव।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**९. विदुषाम् अग्रेसरः केसरी।** — भट्टश्रीरमानाथशास्त्री

**अप्पाशास्त्रिसरस्वती-रससुधा-माधुर्यधुर्यच्छटा।**

— श्रीमहेशचन्द्रतर्कचूडामणिः।

श्रीअप्पाशास्त्रिणः हि महाप्रतिभावन्तः संस्कृतपण्डिताः समभूवन्। ये खलु धार्मिकाः, उपासकाः, राष्ट्रभक्ताः, दार्शनिकाः, साहित्यिकाः, समालोचकाः, पुरावृत्तविदः, गद्यवाङ्मय-प्रणेतारः, पद्यरचना-प्रवीणाः, कवि-प्रवराः, बहुलिपि-विज्ञाः, नैकभाषा-विशारदाः, प्राचीन-वाङ्मय-विज्ञानिनः, नव्यविज्ञानविदः, पत्रकला-कुशलाः, सामयिक-वार्तान्वेषिणः, मासिकपत्र-प्रचार-कोविदाः, साप्ताहिकपत्र-सचार-विचक्षणाः, पुराणतत्त्व-विदः, भूगोलखगोलविज्ञानज्ञानिनः, व्याख्याकर्तृषु वरिष्ठाः, भाषान्तरानु-वादकप्रवराः, सरस-वाङ्मय-लेखन-विचक्षणाः, सरस-मधुर-संस्कृत-भाषिणः, विद्वांसः अपि विनम्राः, विशिष्टाः अपि सामान्याः, नैकभाषा-प्रवाहैः समस्तविषयस्पर्शि-बुद्धिशालिनः अपि सनातन-भारत-धर्म-राष्ट्र-शिवाद्वैतसाक्षात्कारिणः प्रभावसंपन्नाः विद्योतन्ते स्म। यैः हि स्वल्पीयसि एव आयुषि समुद्दीपितः संस्कृतसंसारः। विहितः संस्कृतभाषायाः मृतत्ववादिनां मुखभङ्गः। संस्कृता राष्ट्रभक्तिः। विदारितं वैदेशिकानां मायाजालम्। खण्डिताः धर्मद्वेषिणां प्रलापाः। संभृतं संस्कृतविश्वे चैतन्यम्। परि-शीलिता सामाजिकनीतिः। अनुशीलिता राजनीतिः। संपन्नतां प्रापिता संस्कृत-पत्र-कला। आदर्शताम् अध्यापितं वैदुष्यम्। प्रतिष्ठापिता च संस्कृत-विद्या-प्रचार-प्रतिष्ठा। यतः किल नैकसंख्यानां विदुषां प्रशंसा-मुक्ताभिः चिराय एव सुनिर्मलमधुरं यशःपात्रम् आसादितम्। परिचयार्थम् एतेषां समुत्कण्ठितैः समास्वाद्यतां प्रतिपर्वरसावहं चरितम् इदम्।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# प्रथमपर्व ।

## १. जन्मभूमिः ।

भारतवर्षे महाराष्ट्राख्यः जनपदविशेषः सुप्रथितः । तत्र कोल्हापुरं नाम पुराणप्रसिद्धं विराजते क्षेत्रम् । अस्य एव करवीरक्षेत्रम् इति अपरं नाम । अस्मिन् क्षेत्रे श्रीमन्महालक्ष्म्याः सुविशालं प्राचीनतमं मन्दिरं विराजते । उक्तं खलु श्रीमति देवी-भागवते 'करवीरे महालक्ष्मीः' इति (९–३०–७१), "कोलापुरं महास्थानं यत्र लक्ष्मीः सदा स्थिता ।"(७–३८–५) इति च । अस्मिन् श्रीमहालक्ष्मी-समधिष्ठिते नगरे पूर्वं छत्रपति-श्रीशिवराज-वंशजाः राजानः विरेजिरे । तेषां कोल्हापुर नरेशानां माण्डलिकेषु पन्तामात्यबावडेकर-संज्ञकाः अन्यतमाः । प्रसिद्धतमः राजनीतिविज्ञः पन्तामात्यरामचन्द्रबावडेकरः एषां माण्डलिकानां मूलपुरुषः । पन्तामात्यानां वसतिस्थानं पुनः गगनबावडा-संज्ञकः कोल्हापुर-मण्डले विद्यमानः ग्रामः । तस्मिन् ग्रामे तत्परिसरे च पन्तामात्यानां शासनं प्रावर्तत । गगनबावडा-ग्रामस्य अधिकृतक्षेत्रे एव भोगावतीनाम्न्याः नद्याः तीरे राशिवडेसंज्ञकः ग्रामः विराजते । एषा च भोगावती नाम कोल्हापुर-मण्डलं पावयन्त्याः पञ्चगङ्गानद्याः घटकभूता । राशिवडेग्रामस्य मध्यभागे जीवनम् इव निवासिनां, सौन्दर्यम् इव मूर्तं सरः किमपि आत्मानम् अवस्थापयति । तत्परितः च ग्रामवासिनां सदनानि विराजन्ते । सरस्तीरे एव विभ्राजते श्रीकपिलेश्वरमहादेवमन्दिरम् । सदनानां च बहिर्भागं समन्तात् विभूषयन्ति नानाविध-देवतायतन-गर्भित-सानु-संनिहितानि क्षेत्राणि । तत्प्रदेशम् अभिप्रस्थितः मनुजः लाङ्गूलम् इव अपरान्तप्रान्तस्य इदम् इति प्रत्यक्षी-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

करोति । एवं नैसर्गिक-वैभव-मण्डितः अस्ति अयं राशिवडेग्रामः । पन्तामात्यानाम् अधिकारक्षेत्रे विद्यमानेषु ग्रामेषु किल संपत्तिदृष्ट्या राशिवडेग्रामः एव महत्त्वपूर्णः आसीत् । तत्रत्यं क्षेत्रजधान्यं प्रायः व्रीहिः एव। संपत्प्रदेषु भूभागेषु राशिवडेग्रामः प्रधानः आसीत् । अतः पन्तामात्यानां प्रेष्ठः इव आसीत् असौ । अयम् एव ग्रामः श्रीअप्पाशास्त्रिणां जन्मस्थानम् ।

## २. कुलवृत्तान्तः ।

अस्मिन् राशिवडेग्रामे गुळवणी इति कुलनामधारिणां द्विजानां बहूनि गृहाणि वर्तन्ते। तेषु गुळवणी इत्युपाख्येषु पाण्डुरङ्गभट्टसंज्ञकाः द्विजवर्याः आसन् । गोत्रम् एतेषां वासिष्ठम् । पाण्डुरङ्गभट्टमहाभागानां राशिवडेग्रामे स्वकीयं गृहमासीत् । ग्रामपरिसरे कृषिक्षेत्रम् अपि आसीत् राशिवडेग्रामे च तत्समीपवर्तिषु येळवडे, तारळे, घुडेवाडी, हेळवाडी, ऐतवडेप्रभृतिग्रामान्तरेषु च पौरोहित्यवृत्तिः आसीत् । येळवडेग्रामे स्वगृहम् अपि आसीत् एतेषाम् । राशिवडेग्रामस्थे कपिलेश्वरदेवालये पूजकत्वं च आसीत् एतेषाम् । एवम् एतावत् प्रपञ्च-निर्वाह-साधनम् आसीत्। राशिवडेकर-येळवडेकरेति उपनामद्वयम् आसीत् एतेषाम् ।

पाण्डुरङ्गभट्टानां सिद्धभट्टसंज्ञकः पुत्रः आसीत्। यः ११५ वर्षाणि जीवितवान् । सिद्धभट्टस्य आप्पाभट्टाख्यः पुत्रः १२० वर्षाणि अजीवत् । आप्पाभट्टस्य पुत्रद्वयं जज्ञे । एकः जीवभट्टः, अपरः पुनः रामभट्टः इति । एतौ प्रत्येकं ४८ वर्षपर्यन्तं जीवनं प्राप्तवन्तौ । तत्र जीवभट्टस्य तनयः विठ्ठलभट्टः ४२ वर्षात्मकम् आयुः लेभे । तस्य वंशः अद्यापि राशिवडेग्रामे विराजते । रामभट्टानां तनयः सदाशिवभट्टः नाम, यः खलु श्रीअप्पाशास्त्रिणां जनकः । अत्रत्य-कुल-गुरुषेषु पाण्डुरङ्गम् आरभ्य रामभट्टं यावत् कोऽपि विशेषपरिचयः नोपलभ्यते । आयुर्मान-निर्देशस्तु कस्मिन् अपि जीर्णपत्रे समासादितः अस्माभिः ।

सदाशिवभट्टाः प्रायः शालिवाहनशकस्य १७४९ तमे वर्षे जन्म लब्धवन्तः । एते पुनः विद्वांसः वैदिकाः आसन् । ज्योतिःशास्त्रज्ञाः संस्कृत-साहित्यविदः अपि आसन् । ततः एव च सदाशिवशास्त्री इति प्रथितम् एषां नाम । शंभुभट्टः इत्यपि एतेषाम् आसीत् नामान्तरम् । याज्ञिककर्म-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कुशलाः पुरोहितवर्याः अपि एते काव्यमर्मविदः रसिकाः अपि आसन्। एतेषां भार्यायाः नाम पार्वतीदेवी।

### ३. विठ्ठलभट्ट-सदाशिवभट्टयोः दायविभागः।

शालिवाहन-शक-वर्षस्य १७७८ तमे वर्षे विठ्ठल-सदाशिवभट्टयोः दायविभागः जातः। तद्वर्षस्य आषाढसुदि द्वादश्यां ( १४ जुलै १८५६ ) लिखितम् एकं विभागलेख्यं प्राप्यते। यत्र सदाशिवभट्टैः विठ्ठलभट्टेभ्यः विभागप्रतिज्ञाः समर्पिताः। अस्मिन् लेख्ये पञ्चदशप्रतिज्ञाः परिशिष्ट-सहिताः विद्यन्ते। अन्ते च सदाशिवभट्टानां हस्ताक्षरं विद्यते। ग्रामस्थानां कुलजानाम् अपि केषाञ्चित् स्वहस्तनामाक्षराणि सन्ति। तत्र अन्तिमे परिच्छेदे 'किमपि वादकारणम् इतःपरं नावशिष्टम्' इत्यर्थकं वाक्यं विद्यते। एतत् खलु द्योतयति पूर्वतनं विवादम्। अस्मिन् विभाग-पत्रे याः प्रतिज्ञाः सन्ति तदनुसारं विठ्ठलभट्टाः ज्येष्ठत्वभाजः प्रतिभान्ति। 'सर्वेषां क्षेत्राणां राशिवडे-ग्रामवर्ति-गृहस्य च समसमार्धभागः कृतः। येळवडेग्रामस्थ गृहोपभोगः तत्रत्यपौरोहित्यवृत्तिः च द्वाभ्याम् एकादशैका-दशवर्षपर्यायेण स्वीकार्या। कपिलेश्वरपूजा, देवालयजीर्णोद्धारः, तत्संपत्तिः समानतया गृहीतव्या' इत्येताः तत्रत्याः प्रधानप्रतिज्ञाः। ज्येष्ठत्वभाजः विठ्ठलभट्टाः इति कुलदैवतानां परंपरागतप्रतिमाः तेषाम् एव आयत्ताः इति प्राप्तम् एतत्। तथापि तासाम् एका रजतमयी प्रभावलिसमेता अष्टभुजा-तुलजाभवानी-मूर्तिः सदाशिवभट्टैः प्रसादरूपेण स्वीकृता। एतेन एतेषां भवानीदेवी सर्वप्रधाना उपास्या कुलदेवता इति प्रतीयते।

### ४. सरसकविः शंभुभट्टापरपर्यायः सदाशिवशास्त्री।

एतत् किल निर्दिष्टम् एव पूर्वं यत् तुलजाभवानी-मूर्तिः सदा-शिवशास्त्रिभिः प्रसादरूपेण स्वीकृता इति। तेन एतेषां देव्यां भक्त्यति-शयः व्यज्यते। कपिलेश्वरमहादेवस्य पूजनमपि पुरोहितवृत्तितया प्राप्तम् एतैः। तथा च शिवोपासनाऽपि प्रचलिता एतेषाम्। मन्यामहे शंभुमहा-देवस्य कपिलेश्वरस्य सेवारतानाम् एव सदाशिवशास्त्रिणां 'शंभुभट्ट' इति नाम प्रथितम् अभवत् इति। कथयन्ति च वृद्धाः अपि तेषां शंभुभट्ट इति नाम्नः सार्थकत्वम्।

याज्ञिक-ज्योतिष-ज्ञानेन सह गरिष्ठा संस्कृत-भाषा-व्युत्पत्तिः अपि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समासादिता आसीत् सदाशिवशास्त्रिभिः। काव्यमर्मविदाम् एतेषां सरस-कवित्वम् अपि सुप्रथितम् अभूत्। काव्यकादम्बिनी-नामिकायाः मासिक-पत्रिकायाः द्वितीय-खण्डस्य पञ्चमे अङ्के समस्या-पूर्ति-श्लोक-द्वयं सदाशिव-शास्त्रिणां नयनगोचरीभवति। तदित्थम्—

**विद्वेषं विजहदशेषविश्वभव्यप्रोद्युक्तः प्रियवचनप्रयोगदक्षः।**
**श्रद्धालुः श्रुतिगदिते सदैव धर्मे को न स्याद् भुवि बहुलाभसंभृतात्मा॥ १॥**
**मा मुग्धे वह मदमम्बुदालि नूनं विद्युद्भिर्जलजलताम्बुनश्वराभिः।**
**व्यूढायां त्वयि भुवने यतोऽन्धकारः स्यादद्धा सखि बहुलाभसंभृतात्मा॥ २॥**

अत्र 'बहुलाभसंभृतात्मा' इत्येषा समस्या प्रतिभाति। अनयोः द्वयोः अपि पद्ययोः प्रसादः स्फुटः। विप्रश्रमेतिवर्णानां वृत्त्यनुप्रासः अपि स्पष्टः। भावः पुनः अत्रत्यः उदात्तः। प्रथम-पद्ये सतां प्रवृत्तेः उत्कृष्टं वर्णनं विद्यते। द्वितीय-पद्ये अप्रस्तुतप्रशंसया क्षण-भङ्गुर-विभूतौ गर्वः न कर्तव्यः इत्यर्थः माधुर्येण प्रतिपादितः। अहो चातुर्यम्! श्रेष्ठकविः काव्य-रचनायां स्वीयम् अन्तरङ्गं समर्पयति। तत् नैतत् आश्चर्यं यत् अनयोः अपि पद्ययोः सदाशिवशास्त्रिणां स्वान्तं स्पष्टतया दृश्यते इति। धर्मश्रद्धा, प्रियभाषिता, परोपकारिता, गर्वविहीनत्वं, विनयः च इति सदाशिव-शास्त्रिणां गुणगणाः पद्याभ्याम् आभ्यां समभिव्यक्ताः भवन्ति।

वेदशास्त्राभ्यासः, पार्वतीपरमेश्वरयोः आराधना, सात्त्विकम् उप-जीवनम्, मधुरभाषणं, विनयः इत्यादिगुणगणैः सदाशिवशास्त्रिणां जीवितं तपःपूतम् आसीत्। तथापि स्ववयसः पञ्चचत्वारिंशवर्षं यावत् पुत्रमुख-कमलं न निर्वर्णितम् एतैः। मन्यामहे वाचस्पतेः अवतारोचिता सामग्री न किल अद्यावधि समलंकरोति स्म सदनम् एतेषाम्। किन्तु भवानी-शंकरः स्वसेवकस्य गृहं पुत्र-रत्न-हीनं कथं नाम सहताम्? विद्यया ऋषीणां, यज्ञैः च देवानाम् ऋणं निर्यातितवताम् एतेषां प्रजया पितॄणाम् ऋणनिर्यातनस्य समयः प्राप्तः।

**५. अप्पाशास्त्रिणां जन्म।**

प्रवृत्तः शालिवाहनशकस्य १७९५ तमः श्रीमुखनामा संवत्सरः। निरस्तकालाम्बुदा प्रसन्नसलिला सलीलाबभूव शरद्। कार्तिक-शुक्लपक्षे

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रबुद्धः महाविष्णुः। प्रभातः सुरलोकः। समुदिता शिवतिथिः (त्रयोदशी)। अस्तम् उपेतः भास्करः। जागृतः रात्रेः मध्यकालः। समये अस्मिन् सदाशिवशास्त्रिणां पत्नी पार्वतीदेवी पुत्ररत्नं सुषुवे। सुसमृद्धः महता प्रमोदेन जातकर्मोत्सवः। श्रीरामेति पितामहस्य नामवर्णैः अलंकृतः अयं बालः। 'अप्पा' इति प्रपितामहस्य नाम अपि तम् एनं समाशिश्लेष। श्रीअप्पाशास्त्रिणां जन्मपत्रिका सदाशिवशास्त्रिभिः एव प्रणीता। सा किलेयम् —

॥ श्रीः ॥

व्यावहारिकं नाम राम इति।

श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीगुरुभ्यो नमः। श्रीकुल-देवता-भगवती-पाण्डुरङ्गाय नमः। श्रीइष्टकुलदेवता विजयादेवी-दत्ता-त्रेयाय नमः।

स जयति सिन्धुरवदनो देवो यत्पादपङ्कजस्मरणम्।
वासरमणिरिव तमसां राशिं नाशयति विघ्नानाम्॥
आदित्याद्या ग्रहाः सर्वे सनक्षत्राः सराशयः।
शुभं कुर्वन्तु ते तस्य यस्यैषा जन्मपत्रिका॥

स्वस्ति श्रीमन्-नृपशालिवाहन-शके १७९५ वर्षे श्रीमुखनामसंवत्सरे कार्तिक शुद्ध १३ रवौ घ. ४६ प. ५१ उत्तराभाद्रपदानक्षत्रं घ. १५ प. १ हर्षणयोगः घ. २४ प. ३ कौलवकरणं घ. २० प. ५ एवं पञ्चाङ्गशुद्धौ अस्मिन् दिने रात्रौ **गतघट्यः सुमार (प्रायः) १५ प. ५ ता. २ नवम्बर सन १८७३ इसवी नक्षत्रं हस्ते पतितं फलं सद्व्ययः।**

तस्मिन् समये वे. राजेश्री. सदाशिवभडजी येळवडेकर, तेषां भार्या पार्वतीबाई पुत्ररत्नं सुषुवे। शुभं भवतु॥ असौ देवद्विजप्रसादात् दीर्घायुर्भूयात्। अस्य स्पष्ट-जन्मकालः। रेवती-नक्षत्र-द्वितीयचरणः। अस्य अवकहडाख्यचक्रानुसारेण नाक्षत्रं नाम "चन्द्रचूडः" देवगणः विप्रवर्णः अन्त्यनाडी गजयोनिः घातवारः ६ असौ दीर्घायुर्भूयादिति।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जन्मलग्नकुण्डलीयम् ।




'मञ्जूषा'-संपादकैः पं. क्षितीशचन्द्रचट्टोपाध्यायैः पत्रिकायाम् अस्यां टिप्पनी लिखिता। सा पुनः ईदृशी—

"कर्कटलग्नः तृतीये कन्यायां नीचस्थः शुक्रो हीनबलो गुरुश्च। चतुर्थे तुलायां नीचस्थो रविः केतुश्च। पञ्चमे वृश्चिके बुधः। षष्ठे धनुषि कुजः। सप्तमे मकरे चरराशौ गुरुदृष्टः शनैश्चरः। नवमे बलवांश्चन्द्रो गुरुशुक्रकुजराहुशनैश्चरैः पूर्णदृष्टः। दशमे राहुः। वक्री वरुणो (नेपच्यूनो) मेषे दशमे। प्रजापतिः (हर्शल) लग्ने कर्कटके।" इति।

जन्मकुण्डलिकाम् एतां निध्यायद्भिः विज्ञायेरन् एव स्पष्टत्वेन इमे-योगाः — १ लग्नेशः चन्द्रः भाग्ये बलवान्। २. भाग्येशः गुरुः भाग्यं पश्यति। ३. लाभेशभाग्येशयोः गुरुशुक्रयोः युतिः। अत्र भाग्येशः गुरुः भाग्यं पश्यति इति 'यो यो भावः स्वामिदृष्टः...... तस्य तस्याभिवृद्धिः' इति ज्यौतिषनयेन गुरुः एव भाग्यकारकः। स च वाचाम् अधीश्वरः इति भाषाप्रभुत्वेन एव भाग्योदयः इत्यर्थः व्यज्यते। एतत् च सुतराम् अनुभव-गोचरं भविष्यति पुरस्तात् इति। अस्तु नाम एतत्।

## ६. चापल्य-कमनीयं बाल्यम्।

अप्पाशास्त्रिणां शरीरकान्तिः गौरी, नासिका च दीर्घा आसीत्। ककः एव पुत्रः अयम् इति प्रेष्ठः बभूव श्रीमान् अप्पाशर्मा सदाशिव-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शास्त्रिणाम्। बालकः पुनः अयम् अतिमात्रं चपलः अवर्तत। संचारप्रियः अयं यत्र कुत्रापि भ्रमति स्म। भोजनसमये तु बालकस्य अन्वेषणं नाम एतत् नित्यकर्म एव विद्यते स्म सदाशिवशास्त्रिणाम्। प्रियतमं वत्सम् एनं विहाय न कदापि भोजनं स्वीकृतम् एतैः। व्यापारेण अमुना पितुः पुत्रे इव पुत्रस्यापि पितरि गाढः एव समपद्यत अनुरागः। लालयितॄणां प्रियजनानाम् अनुकरणे पण्डिताः खलु शिशवः। तत् नैतत् आश्चर्यं यत् अप्पाशर्माऽपि धर्मश्रद्धा, शिवभक्तिः, मधुरभाषिता, विनयः, ग्रन्थपठन-रसिकता इत्यादिषु स्वपितरम् एव अनुससार इति।

### ७. लिपेर्यथावद्-ग्रहणेन वाङ्मयम् ...

वयसः षष्ठे वर्षे श्रीअप्पाशर्मा पितुः सकाशात् एव वर्णमालाम् अशिक्षत। बालबोधलिपिः (देवनागरी) महाराष्ट्र-प्रदेश-प्रचरिता मोडीलिपिश्च बालकेन आत्मसात् कृता। तस्य संस्कृतभाषायां सम्यक्-प्रवेशलाभाय सदाशिवशास्त्रिभिः शब्दरूपावलिः, समासचक्रं, धातुरूपावलिः इत्यादयः प्राथमिकाः ग्रन्थाः अध्यापिताः। अञ्जसा एव पुनः एतत् सर्वं बालकेन अमुना आत्मसात्-कृतम्। अष्टमे वयोवर्षे श्रीअप्पाशर्मणः उपनयनम् अभूत्। ततश्च प्रवेशितः अयं कोल्हापुरे कस्मिंश्चित् महाराष्ट्रभाषा-विद्यालये। तत्र च स्ववयसः द्वादशे वर्षे षष्ठीम् इयत्तां समुत्तीर्णः अयं स्वसदने एव पितुः निकटे स्वाध्यायम् आरब्धवान्।

### ८. परिवर्तितः कालिदासः।

सदाशिवशास्त्रिभिः प्राथमिकान् ग्रन्थान् अध्याप्य श्रीमान् अप्पाशर्मा रघुवंशे प्रवेशितः। एककः एव अयं पुत्रः इति प्रियतमे पुत्रे स्निग्धवर्तनम् आसीत् सदाशिवशास्त्रिणाम्। एवं बिभ्रतः अपि समधिकां सौम्यतां पुत्रविषये न पुनः परिहार्यपक्षे अकुर्वन् कठोरशिक्षाम्। श्रीमान् अप्पाशर्माऽपि च न किल नासीत् एकान्तभाजनं सर्वतः प्रभाविण्याः मेधायाः। तत् असौ शिशुः एव पित्रा पाठितं विषयं निरुपम-प्रतिभावत्या मेधया विधाय आत्मसात् प्रत्युपदेशम् इव आतनोत् आत्मनः उपाध्यायस्य। न केवलं पितृपृष्टं प्रश्नं यथायोग्यं निरवशेषयत् अयम्, अपि तु तत्र पद्यमयीं सरस्वतीं निवेशयति स्म। श्रीमतः कविकुल-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सार्वभौमस्य रघुवंशाख्य-काव्याभ्यास-समये श्रीमान् अप्पाशर्मा प्रतिपद्यं प्रतिप्रथमार्धं स्वीयम् एव नव्यं द्वितीयार्धं योजयति स्म इति प्रथितप्रायम् इदं वृद्धेषु । यदा किल कालिदास-काव्य-परिवर्तनं प्रक्रान्तं तदा श्रीअप्पाशर्मा द्वादशवर्षवयस्कः एव आसीत् । यस्मिन् किल वयसि वर्तमानाः बालकाः धूलि-धूसराङ्गाः मातृभाषा-गत-पद्यम् अपि अर्थयितुं क्वचित् एव शक्नुवन्ति । एतेनैव अनुमीयतां पाठकमहाभागैः प्रतिभा-प्रभावः श्रीअप्पाशर्मणः । कालिदास-काव्य-परिवर्तनम् एतत् अवलोक्य सदाशिव-शास्त्रिभिः वात्सल्यरसेन अभिषिक्तः स्यात् अप्पाशर्मा इति नात्र सन्देहः । तथापि क्रियासमभिहारेण विधीयमानम् एतत् परिवृत्ति-वैचक्षण्यं सदाशिवशास्त्रिषु क्रोधम् अपि उत्पादयति स्म । अत एव अन्तरान्तरा एते तर्जयन्ति स्म स्वबालकम् — 'कालिदास-सदृश-महाकवीनां रचनायाः विच्छेदमौर्ख्यं किं करोषि?' इति । काव्यव्युत्पत्तेः विशेषाध्ययनार्थं श्रीहरिशास्त्रि-पाडगांवकर-नाम्ना ख्यात-विदुषां मार्गदर्शनं संप्राप्तम् अप्पाशर्मणा । एते अध्यापका अपि स्वच्छात्रस्य महत्तमया प्रतिभया विस्मय-स्तिमिताः बभूवुः । स्ववयसः षोडशवर्षं यावत् श्रीअप्पाशर्मा हरिशास्त्रिणां छात्रत्वं निर्व्यूढवान् ।

### ९. त्रयोदशे वयोवर्षे पञ्चाङ्ग-निर्मितिः ।

श्रीसदाशिवशास्त्रिणां परिचिताः केऽपि ज्योतिःशास्त्र-पारङ्गताः मुहुर्मुहुः सदनम् एषां संभावयन्ति स्म । प्राथमिक-शालायां संप्राप्त-गणित-विज्ञानः श्रीअप्पाशर्मा ज्यौतिषिक-प्रवरेभ्यः एतेभ्यः सिद्धान्तग्रन्थं कमपि अधिजगाम । अवगतं चानेन पञ्चाङ्ग-निर्माण-विधानम् । आगामि-वत्सरस्य पुनः झटिति एव प्रादुश्चकार निर्दोषं पञ्चाङ्गम् । अहो अप्पाशर्मणः प्रतिभायाः बहुमुखत्वम् । नास्ति खलु धीमताम् अविषयो नाम । यदि नाम ज्योतिःशास्त्रे परिश्रमम् अकरिष्यत् अप्पाशर्मा, तर्हि भास्कराचार्यस्य अपरावतारत्वेन एव ख्यातिम् अगमिष्यत् । किन्तु बालकस्य अस्य प्रेष्ठविषयः आसीत् साहित्यम् । अत एव नैव विहितः विषयेऽस्मिन् विशेषः प्रयास एतेन । ज्योतिःशास्त्रविषयकम् एतत् ज्ञानं तु पुरस्तात् पञ्चाङ्गकरणग्रन्थसमालोचनादौ भृशम् उपयुक्तताम् अयासीत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

### १०. विवाहः, कोल्हापुरे निवासः।

इदानीम् अप्पाशर्मा षोडशवर्षवयस्कः आसीत्। तदैव शकस्य १८१० तमे वर्षे प्रथमः अस्य विवाहः संवृत्तः। स्वपुत्रस्य अलौकिक-प्रतिभया अल्पीयसि एव वयसि संप्राप्तेन संस्कृतभाषापाटवेन च नितरां समुत्साहिताः सदाशिवशास्त्रिणः यथावत् अध्ययने कृते अप्पाशर्मा गरिष्ठः महापण्डितः संपद्येत इति मनसि अकुर्वन्। अत एव उच्चशिक्षणस्य कृते तैः अप्पाशर्मा कोल्हापुरम् आनीतः। तत्र श्रीअप्पाशर्मणां मातृष्वसुः सदनं व्यराजत। कोल्हापुरे कपिलतीर्थ-विभागे कृष्णभट्टव्यासनामकः अप्पाशास्त्रिणां मातृष्वसुः पुत्रः निवसति स्म। तस्यैव गृहे सपुत्रकलत्रैः सदाशिवशास्त्रिभिः निवासः प्रारब्धः।

इदानीम् आसीत् शकस्य १८११ तमो वत्सरः। कोल्हापुरीय-विद्वन्मण्डलं श्रीअप्पाशर्मणां काव्यकलानैपुण्यं धार्मिकप्रवरत्वं च विलोक्य परं विस्मितम्। अत एव षोडशवर्षीयोऽपि अयं कुमारः अप्पाशर्मा 'अप्पाशास्त्री' इति प्रसिद्धिं प्राप्तः। राशिवडेग्रामवासित्वात् महाराष्ट्रीयाणां पद्धतिम् अनुसृत्य 'राशिवडेकर' इति उपाख्यां लेभे।

महाराष्ट्रेषु सत्सु अपि अन्य-शास्त्रेषु व्याकरण-शास्त्रस्य भूयान् आदरः विद्यते। अत एव व्याकरणे पाण्डित्यं संपादयितव्यम् इत्यासीत् श्रीअप्पाशास्त्रिविषयकः अभिलाषः सदाशिवशास्त्रिणाम्। कोल्हापुरे च तदानीं पण्डित-कान्ताचार्य-संज्ञकाः विद्वद्प्रवराः व्यराजन्त। एते खलु निखिल-शास्त्र-मर्मविदः अपि प्राधान्येन वैयाकरणाः, आसन्। तेषां गृहे भूयांसः एवच्छात्राः अध्येतुं गच्छन्ति स्म। सेयं "पं. कान्ताचार्याणां पाठशाला" आसीत्। विद्वान् च कुशलाध्यापकः च इति कीर्तिः आसीत् पं. कान्ताचार्याणाम्। एतेषामेव निकटे व्याकरणाध्ययनार्थं श्रीअप्पाशास्त्रिणः गन्तुम् आरभन्त।

### ११. पण्डित-कान्ताचार्याः।

कोल्हापुराधिपतीनां छत्रपतीनाम् अष्टप्रधानमण्डली विद्योतते स्म। तस्यां पण्डितराजेति-धर्मविषयकाधिकृतस्य अष्टानाम् अन्यतस्यम प्रधानस्य वंशीयाः किल पं. श्री. कान्ताचार्याः। एषां पितृचरणाः श्रीबल-कृष्णाचार्यमहाभागाः अपि विद्वांसः बभूवुः। कान्ताचार्याणाम् अध्ययनं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ग्वाल्हेरनगरे तेषां मातामहानां वैयाकरण-शेखराणां श्रीरामाचार्याणां निकटे जातम्। अध्ययनं समाप्य काशीयात्रां विधाय कोल्हापुरे समागताः कान्ताचार्याः। ते कोल्हापुरीय-वेद-शास्त्राभ्यासाभिनन्दिनी-संज्ञक-परिषदि व्याकरणपरीक्षकाः आसन्। गर्भश्रीमन्तः अपि विद्याश्रीमन्तः च। तदुभयवत्त्वे धार्मिकत्वं, विनयित्वं, सरलत्वं, शिष्यजनेषु वत्सलत्वं च परं व्यद्योतत श्रीमत्सु पण्डितराजकान्ताचार्येषु। गुणगणैः एभिः आकृष्टैः श्रीअप्पाशास्त्रिभिः तेषां निकटे व्याकरणशास्त्रीयाः सिद्धान्तकौमुदी, मनोरमा इत्यादयः द्वित्राः एव ग्रन्थाः अधीताः। यद्यपि विद्वत्तल्लजाः अध्यापनकुशलाः च आसन् गुरुवर्याः, यद्यपि च महामेधावी प्रतिभावतां निदर्शनम् आसीत् अप्पाशास्त्रिसदृशः छात्रः, तथापि यावदपेक्षितं न सदाशिवशास्त्रिणाम् महत्त्वाकाङ्क्षा फलं लब्धवती। पाठ्यग्रन्थेषु प्रवीणः शास्त्रविदां धुर्यः संपद्येत पुत्रः आत्मीयः इति हि पितुः आसीत् अभिलाषः। श्रीअप्पाशास्त्रिणां स्वभावाय न तादृशम् अरोचत गुरुसंमुखे समुपविश्यैव विधीयमानं गहनाध्ययनम्। तत एव च नैते ग्रन्थाध्ययनाय स्वान्तम् अर्पयामासुः। गरीयसी खलु कविता-कामिनी-प्रीतिः क्षणमपि नामुञ्चत् अप्पाशास्त्रिमहोदयान्।

**१२. अहो कविता-कामिन्यां प्रणयातिशयः।**

शकस्य १८११ वर्षतः त्रि-चतुर्-वर्ष-पर्यन्तमेव श्रीअप्पाशास्त्रिभिः पं. कान्ताचार्याणां पुरतः साक्षादध्ययनं कृतम्। १८१४ तमवर्षतः स्वयमेव ग्रन्थपठनम् एतेषां प्रक्रान्तम्। स्वपितुः सकाशात् पं. हरिशास्त्रि-पाडगांव-करेभ्यः च या काव्यव्युत्पत्तिः संपादिता अप्पाशास्त्रिभिः सा किल जले तैलमिव प्रतिभां काव्यमयीम् अकरोत्। तत एव च तदारभ्य एव नैकविध-काव्य-नाटक-चम्पू-कथा-सुभाषितादि-सरस-प्रबन्ध-पठनस्य एव गरिष्ठं व्यसनम् एतेषु कृताधिष्ठानम् अभूत्। इदानीं पुनः कोल्हापुरे ग्रन्थालयानां विपुलतया तदेतद् शुक्लेन्दुवत् अभ्यवर्धत। न केवलं काव्य-पठनमेव प्रवृद्धम्, अपि तु काव्य-निर्माणेऽपि संप्राप्तं प्रावीण्यं सरस-प्रबन्ध-निर्माण-व्यसने परिणतम्। अतश्च नैतत् आश्चर्यं यत् अप्पाशास्त्रिणः सर्वदैव काव्य-ग्रन्थ-पठने तत्प्रणयने वा दृढ-दत्त-चित्ता एव अवर्तन्त इति। किन्तु काव्यमात्रासक्तत्वम् एतेषां मनागपि नारोचत सदाशिवशास्त्रिप्रभृतिभ्यः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गुरुजनेभ्यः। अत एव शास्त्राध्ययनार्थं तैः हठेन प्रेषिताः अप्पाशास्त्रिणः पं. कान्ताचार्याणां संनिधौ। तत्र पुनः पं. कान्ताचार्याणां मधुर-स्वभावतया पाठे दत्तचित्तैः अप्पाशास्त्रिभिः पूर्वोक्तरीत्या कतिचित् एव ग्रन्थाः पठिताः। सिद्धान्तकौमुदी तु एतेषां करतलामलकवत् बभूव। एतावता व्याकरणशास्त्रे सम्यक् प्रविष्टाः अप्पाशास्त्रिणः व्यासङ्ग-गम्यम् अन्यत् इति निध्यायन्तः अध्ययनसरणेः विरताः। लब्धशास्त्रदृष्टीनां पुनः एतेषां वाक्सरणिः पूर्वतः रम्याऽपि प्रभावसंपन्ना बभूव। एवमपि काव्यव्यासंगः एव सुदृढः संपन्नः।

### १३. विविध-शास्त्रज्ञाः कोल्हापुरीय-पण्डिताः।

यथा किल कोल्हापुरे पं. कान्ताचार्याः वैयाकरणप्रवराः आसन्, तथैव पं. श्रीआत्मारामशास्त्री पित्रेमहोदयाः अपि तत्रैव श्रीशंकराचार्य-मठे शास्त्रिणः आसन्। एते प्राधान्येन व्याकरणे कृतश्रमाः। उपरिष्टात् च संन्यासं स्वीकृत्य पीठाधिपतयः बभूवुः। तेषाम् अपि संनिधौ विद्यन्ते स्म बहवः एवञ्छात्राः। पित्रेशास्त्रिणाम् एव शिष्यभूताः पं. मुकुन्दशास्त्रि-मिरजकरमहाभागाः अप्पाशास्त्रिणां परमसुहृदः आसन्। राजाराममहा-विद्यालये पं. गणेशशास्त्रि-हुकडीकर-महाभागाः प्राध्यापकाः अवर्तन्त। एते पुनः न्यायशास्त्रं प्राधान्येन परिशीलयामासुः। पं. एकसम्बेकर-नारायण-शास्त्रिणः उभयमीमांसानदीष्णाः अविद्यन्त। एते कंचित् समयं कोल्हापुरे ततः परं च साङ्गलीनगरे न्यवसन्। तोरोबालशास्त्रिणः ज्योतिःशास्त्र-वेत्तारः आसन्। श्रीहनुमान्शास्त्रि-पाध्येमहाभागः आयुर्वेदविदां धुरीणः आसीत्। अस्य महोदयस्य वैद्यक-विषयकाः केचित् प्रबन्धाः पुरस्तात् संस्कृत-चन्द्रिकायां प्रकाशिताः अभूवन्। अन्येऽपि बहवः शास्त्रिणः, वैदिक-प्रवराः अपि कोल्हापुरे विराजमाना आसन्। पण्डितप्रवर-खुपेरकर-बालाचार्याः कोल्हापुरीयाः एव ये बहून प्रबन्धान् संपादयामासुः।

### १४. सहाध्यायि-वर्गः।

पं. कान्ताचार्याणां संनिधौ यदा श्री. अप्पाशास्त्रिणाम् अध्ययनं प्रचलितम् आसीत्, तदा तत्र केचित् अपरे अपि छात्राः आसन्। तेषु कतिपये इमे सन्ति—बाबूशास्त्रि-गुळवणी, अध्यापकर-बाळशास्त्री, कृष्ण-कान्त-सांगलीकर, माधवाचार्य-उपाध्ये, बाळशास्त्रि-हुपरीकर प्रभृतयः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एषां विद्यार्थिनाम् अध्यापकर-बाळशास्त्री, सांगलीकर-कृष्णशास्त्री इति द्वौ एतौ पं. रुकडीकराणां सकाशे न्यायशास्त्रम् अपि पठतः स्म । एतत्-कालिकी अप्पाशास्त्रिणाम् आग्रहातिरेकस्य काऽपि कथा श्रूयते। सेयम्—

पं. रुकडीकराणां लेले-संज्ञकः कोऽपि अपरः आसीत् विद्यार्थी। सोऽयं न्याये व्याकरणे च व्युत्पन्नः अवर्तत। पं. पित्रेशास्त्रिणां संनिधौ करमरकर-नामधेयः विद्यार्थी व्याकरण-शास्त्रीयं परिभाषेन्दुशेखर-ग्रन्थम् अध्येति स्म । सोऽयं मनागिव मन्दधीः आसीत् । अप्पाशास्त्रिणां स्वभाव-माधुर्येण समाकृष्टः एषः तेषाम् अपि सकाशे परिभाषेन्दुशेखरं पठितुम् उपक्रान्तवान् । अप्पाशास्त्रिणां समीपे कलकत्तातः प्रकाशिता परिभाषा-विवृतिः आसीत् । ताम् एतां स्वयम् एव अभ्यस्य करमरकरमहाभागम् एते पाठयन्ति स्म। इयं वार्ता लेलेमहोदयेन श्रुता। स तु समाहूय करमरकरं श्रीअप्पाशास्त्रिणाम् अध्ययन-शून्यतां प्रतिपादितवान्। यदा पुनः इदं वृत्तम् अप्पाशास्त्रिणां श्रवण-पथम् उपगतं तदा एते पराधिक्षेप-प्रवृत्तिं लेलेमहाभागस्य न सेहिरे। गताश्च ते तत्समीपं समभूच्च किमपि प्रलाप-जातम् । अन्यदा च बावडा-संस्थानाधिपति-पन्तामात्यानां गृह-सचिवेन बोरगांवकरोपाख्येन सह श्रीअप्पाशास्त्रिणः लेलेमहाशयस्य गृहं गताः। तत्र च प्रवृत्तः द्वयोः शास्त्रार्थः। लेलेमहाभागः गुरुमुखात् अधिगतविद्यः। अप्पाशास्त्रिणः तु स्वीयबुद्ध्यैव कृतपरिश्रमाः । अतश्च नैतद् आश्चर्यं यत् तस्मिन् शास्त्रवादे लेलेमहोदयः सिद्धान्तपक्षम् अकरोत् इति ।

### १५. विविध-शास्त्राणां संस्कारः ।

श्रीअप्पाशास्त्रिभिः पं. कान्ताचार्याणां शिक्षकत्वे व्याकरणम् आत्म-सात् कृतम् । एवं पं. रुकडीकराणां मार्गदर्शनेन न्याय-दिग्दर्शनं लब्धम् । पं. एकसम्बेकर-नारायणशास्त्रिणां सकाशात् मीमांसाशास्त्रे वेदान्तशास्त्रे च परिचयः प्राप्तः । यद्यपि व्याकरणं विहाय शास्त्रान्तर-ग्रन्थानां न किमपि अध्ययनं कृतम् अप्पाशास्त्रिभिः, तथापि प्रसंगवशात् विविध-शास्त्रग्रन्थानां परिशीलनं विधाय तत्तेषु विषयेषु नैपुण्यं समवाप्तम् एतैः। अत्र पुनः आसीत् सहायभूता तिरस्कृत-भास्वन्महःप्रसरा अनन्यसाधारणा प्रतिभैव। संस्कृत-लेखन-पाटवाय कान्ताचार्याणाम् अपि मार्गदर्शनम् उप-कारि समभूत्। अवगतशास्त्रदृष्टिभिः अप्पाशास्त्रिभिः श्रुति-स्मृति-पुराण-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साहित्यशास्त्रादिवाङ्मयं स्वयमेव पठितम्। विशेषतो व्याकरणे धर्मशास्त्रे साहित्ये च घनिष्ठं पाटवं प्राप्तम् एतैः। ज्योतिःशास्त्रम् आयुर्वेदः साङ्ख्यं योगः चेत्यादिविषयेषु अपि सम्यक्-परिचयः प्राप्तः। तन्त्रशास्त्रस्याप्यवलोकनम् अप्पाशास्त्रिभिः कृतम्। अनेन च बहुमुखत्वं प्राप्तया प्रगाढया प्रतिभया प्रबन्ध-प्रणयने अतुलनीयं समदर्शित्वं लब्धम्। एवं सम्यक् परिचितः अपि प्रस्थानभेदः प्रज्ञाभेदम् एतेषां विधातुं नाशक्नोत्। दृश्यते हि एकदेशि-विषय-परिचिताः संकुचित-दृष्टिताम् आपद्यन्ते, बहुविषय-परिचिताः तु कस्मिन्नपि विषये श्रद्धां नोररीकुर्वन्ति इति। अप्पाशास्त्रिणः तु एतस्य उभयविध-दोषस्य मनाक् अपि आश्रयः न अभूवन्।

## १६. गरिष्ठा शिवभक्तिः।

अत्र पुनः निदानं श्रीअप्पाशास्त्रिणां श्रीशिवाद्वैतनिष्ठत्वम् एव। विना हि तत्तादृश-परेशानुग्रहम् अशक्यमेव मनसः समाहितत्वं नाम। स एष प्रतिभा-महोत्कर्ष-प्रसादः अप्पाशास्त्रिभिः कपिलेश्वर-परिचरणया प्राप्तः। अत एव वर्णविन्यासारम्भे "श्रीशिवः शरणम्" इति लिखन्ति स्म अप्पाशास्त्रिणः। अत एव च पुरस्तात् चन्द्रिका-प्रकाशनोपक्रमे सूनृतवादिनी-प्रचारोपक्रमे च यथाक्रमं मङ्गलम् आचरितम् एतैः—

"पद्मभू-प्रमुखा यस्य किङ्करा अमृतान्धसः।
स सुधांशूल्लसच्चूडः कोऽपि देवोऽवलम्ब्यते॥"
"अशेषजगदाधारमीशमेकमुपास्महे।
यत्कृपापाङ्गमनिशं गिरां देव्यनुधावति॥" —इति।

तत्तत्प्रसंगेषु च सर्वमङ्गलाजानिः शिव एव प्रार्थितः। ते हि पार्वतीसदाशिवस्वरूपं मातापित्राकृति पार्वती-सदाशिव-युग्मम् इत्येव मेनिरे।

## १७. वयस्य-मण्डलम्।

यद्यपि भूयांसः एव आसन् कोल्हापुरे सहाध्यायि-प्रभृतयः वयस्याः अप्पाशास्त्रिणाम्, तथापि घनिष्टस्नेहसंभृतस्वान्तानि एतेषां त्रीणि एव मित्ररत्नानि आसन्। ते च सुहृद्वर्याः नाम श्रीशंकरशास्त्रि-गोखलेमहाभागाः, श्रीतोरो बालशास्त्रिमहोदयाः, गगनबावडा-संस्थानाधीश्वरपन्ता-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मात्य-श्रीबाळासाहेबापरपर्यायाः श्रीमन्माधवरायमहाभागाश्च । तत्र श्रीपन्तामात्यमहोदयाः अप्पाशास्त्रिणाम् आश्रयदातारः एव आसन् । उक्तम् एव प्राक् "पन्तामात्यानां राशिवडेग्रामे प्रणयातिशयः आसीत्" इति । सोऽयं विपुल-धान्यप्रद-महालक्ष्मी-संनिधानतः । किन्तु तत्रैव अप्पाशास्त्रीत्याख्यायाः सरस्वत्याः उदयेन प्रणयः एषः द्विगुणितः बभूव । सप्रणयं, सादरं साभिमानं च पन्तामात्यमहोदयाः अप्पाशास्त्रिणाम् आश्रयप्रदानेन संमानं चक्रुः । गोखले-शंकरशास्त्रिणः आयुर्वेद-विज्ञाः आसन् । तैः च विद्याविलास-संज्ञकं महाराष्ट्रभाषामयं साप्ताहिक-पत्रम् एकं संचालितम् । एतत् च उपरिष्टात् दैनिकत्वम् आसाद्य प्राप्ते स्वातन्त्र्ये विरतम् । बालशास्त्रि-तोरो-महोदयाः ज्योतिःशास्त्रविदां प्रवराः आसन् । एवम् एतैः त्रिभिः अप्पाशास्त्रिणां संमिलनं नित्यम् आसीत् । चतुर्णाम् एतेषां सुखासिकाः मुहुर्मुहुः संपद्यन्ते स्म । एवं ग्रामान्तरीय-मित्रेषु ऋतुकोटिवासी पं. लिङ्गेशशर्मविद्याभूषणः, कित्तूरवासी काव्यानन्दः, पं. पुणेकरनरसिंहाचार्यः च आदिमौ मित्रप्रवरौ आस्ताम् ।

१८. प्रकीर्णाभ्यासः ।

संस्कृतभाषाप्रणयिभिः अपि अप्पाशास्त्रिभिः प्रदेशभाषा नैव परिहृता । अपि तु भाषान्तराणाम् अभ्यासे तेषां महीयसी रुचिः आसीत् । रुचिरा बभूव पुनः नानाविध-लिपीनाम् अपि अभ्यासे रुचिः । महाराष्ट्रभाषायां विशेषतः मोरोपन्तकवेः काव्यम् एतैः परिशीलितम् । इङ्ग्रजीलिपेः तद्भाषायाः अपि अप्पाशास्त्रिभिः अभ्यासः कृतः । शकस्य १८१५ तमे वर्षे कोल्हापुरीय-प्राध्यापकैः एम्.ए.एल्एल्.बी. -बिरुदशालिभिः रघुनाथ ना. आपटे-महोदयैः कालिदास-काल-निर्णय-विषयकः कोऽपि इङ्ग्रजीभाषामयः प्रबन्धः अप्पाशास्त्रिभ्यः प्रदत्तः । तदानीम् एव पुनः अयम् अप्पाशास्त्रिभिः पठितः । मन्यामहे,अयमेव प्रबन्धः काल-निर्णय-विषयिणीम् आधुनिकानां नीतिम् अप्पाशास्त्रिभ्यः निवेदितवान् इति । तदारभ्य च कालिदासादीनां प्राचीन-प्रबन्ध-प्रणेतॄणां समय-निर्णय-समीक्षादि-विषयकं ग्रन्थपठनं प्रारब्धवन्तः, प्राचीनार्वाचीनप्रमाणैः तत्तद्विषयकाणि स्वकीयानि मतानि च निर्धारितवन्तः श्रीअप्पाशास्त्रिणः । आङ्ग्ल-ग्रन्थकारेषु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शेक्स्पियर-बायरन-गोल्डस्मिथ-टामसन-प्रभृतीनां कृतीनाम् अध्ययनं तैः प्रारब्धम्।

राजाराम-महाविद्यालयस्य ग्रन्थालये करवीर-नगर-वाचन-मन्दिरे च अप्पाशास्त्रिणः नियमिततया गच्छन्ति स्म। तत्र तेषां नैक-विषयाणां ग्रन्थानां पठनं भवति स्म। एतयोः ग्रन्थालययोः लिप्यन्तराणाम् अभ्यासः, तत्तद्-ग्रन्थ-पठनम् अपि प्रारब्धम् एतैः। राजाराम-महाविद्यालये श्रीबलवन्तराय-मोडक-नामकः प्राध्यापकः आसीत्। तद्-विरचिताः भूयांसः एव ऐतिह्य-प्रबन्धाः अप्पाशास्त्रिभिः पठिताः।

### १९. कोल्हापुरीय-महोत्सवेषु शास्त्रार्थः।

तदानीं कोल्हापुरे घनपाठि-वैदिकाः, व्याकरण-न्याय-मीमांसादि-विविध-विषय-निष्णाताः पण्डिताः च सुबहुलाः एव आसन्। शारदीयनवरात्रादि-महोत्सवाः प्रतिवर्षम् अभूवन्। महोत्सवेषु एतेषु पण्डितानां शास्त्रार्थोपन्यासाः कविगोष्ठीषु समस्यापूरणानि कविता-पठनम् इत्यादयः कार्यकलापाः भवन्ति स्म। तत्र सहभागित्वम् अवाप्य श्रीअप्पाशास्त्रिभिः शास्त्रार्थ-चातुर्यम् इव सरस-काव्य-प्रणेतृत्वम् अपि आत्मीयं निर्दशितम्। त्रिपुर-पूर्णिमायां गणेशोत्सवे चैताः शास्त्रार्थसभाः संपद्यन्ते स्म। नूनम् इदानीं महालक्ष्मी-क्षेत्रे सरस्वत्याः एव महोत्सवः दृष्टिपथम् उपैति स्म। एतत् च 'तद्दिव्यमव्ययं धाम सारस्वतं'' सम्यगेव अपुष्णात् श्रीमदप्पाशास्त्रिणाम् अन्तरङ्गम् इत्यत्र न नः सन्देहः।

### २०. संस्कृत-मासिक-पत्रिका-पठनारम्भः।

वङ्गेषु प्रथमं संस्कृतपत्रं विद्योदयसंज्ञकं कलकत्तातः प्रकाशते स्म। तदनु शकस्य १८१५ (मे १८९३) तमे वर्षे वैशाख-मासाद् आरभ्य 'संस्कृत-चन्द्रिका' इत्याख्यं मासिकं पत्रं प्रारब्धम्। आदितः प्रभृति अप्पाशास्त्रिणः संस्कृत-चन्द्रिकायाः पाठकाः अभूवन्। शनैः शनैः पुनः तस्याः लेखकाः अपि संवृत्ताः। संस्कृत-चन्द्रिकायाः द्वितीय-खण्डस्य चतुर्थाङ्के अप्पाशास्त्रिणां श्लोकाः प्रथमं प्रकाशिताः। इमे समस्या-पूरण-श्लोकाः प्रारम्भभूताः एव अप्पाशास्त्रिणां कवित्व-प्रकाशनस्य इति ते अत्र समुद्ध्रियन्ते। —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यदोत्तरं प्रयुज्यते सुनिश्चितं बुधेन किं
शिखा समुज्ज्वला क्व, किं चकार रङ्गगो नरः ।
दधति कः स्वमस्तके महाभरां वसुन्धरां
**तदा मयूरमस्तके ननर्त पन्नगेश्वरः ॥**

अनारतं का मधुराभिलाषा
लयाश्रितः किं कुरुते नरश्च ।
करोति सन्ध्यासु हविः क्व होता
**पिपीलिका नृत्यति वह्निकुण्डे ॥**

उच्चानधस्ताद् विदधदवचांश्च समुन्नतौ ।
अरा इव जनान् कालश्चक्रवत् **परिवर्तते ॥**

वक्षःपीठे वीक्ष्य कान्ताजनस्य
पीनोरोजश्छद्मनेशं वसन्तम् ।
पाटीरात्मा तं परिष्कर्तुकामो
मन्ये यातः **कल्कतां कुण्डलीशः ॥**

एतेषु समस्यापूर्तिश्लोकेषु अधोरेखिता वर्णाः समस्याभूताः । अत्र मञ्जूषासंपादकानां पं. क्षितीशचन्द्रमहोदयानां टिप्पनी यथा—

"एतेषु प्राथमिकेषु पद्येषु यद्यपि शब्दानां हठादाकृष्टत्वं मात्रया दृश्यते, तथापि प्रसादगुणः प्रायेण सर्वत्र विलसति । एतद् दृष्ट्वा केन वा प्रतीतं द्वित्रैर्वर्षैरयमेवासेतुहिमाचलं स्वयशसा प्लावयिष्यतीति ।" इति ।

अत्र आद्यश्लोकयोः यथासंख्यालङ्कारः तृतीये पूर्णोपमा, चतुर्थे अपह्नव-समाश्लिष्टा उत्प्रेक्षा । अस्मिन् (चतुर्थे) पद्ये कवेः शिवभक्ति-व्यङ्ग्या । किं च अत्र किल वृत्त्यनुप्रासः अपि । नागराजस्य अपि शिव-परिष्काररूप-सेवाबुद्धिः अत्र उपवर्णिता । वक्षः पीठम् इव, उरोजः ईशः इव, पाटीरकल्कः कुण्डलीशः इव इति उत्प्रेक्षायां सावयवत्वम् अपि । पाटीर-कल्के कुण्डलीशत्व-संभावना-सिद्ध्यर्थम् उरोजे ईशकल्पना इति परंपरितत्वम् अपि । यद्यपि परंपरितत्व-सावयवत्वेत्यादि-प्रकारः रूप-काङ्गं, न उत्प्रेक्षाङ्गम्, तथापि पाटीरात्मा इति रूपकत्वात् अस्याम् उत्प्रेक्षायां रूपक-साङ्कर्यं मन्तव्यम् ।

एवं प्राथमिक-पद्येषु अपि अलङ्कार-ध्वन्यादि-विन्यास-चातुर्यम् अप्पाशास्त्रिणां स्पष्टं विद्योतते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## २१. चन्द्रिकायां मातृभक्ति-स्पर्धा ।

चन्द्रिका-संपादकैः चन्द्रिकायाः द्वितीय-खण्डस्य फाल्गुनाङ्के निबन्ध-स्पर्धा समुद्घोषिता । निबन्धस्य कृते 'मातृभक्तिः' इति विषयः आसीत् । प्रथम-क्रमाङ्कस्य पारितोषिकम् आसीत् 'शब्दकल्पद्रुमः' इति संज्ञकः महान् कोषग्रन्थः । सोऽयं शकस्य १७८० तमे वर्षे 'श्रीराजासरराधाकान्त-बहादूर-महाभागैः विरचितः आसीत् । तस्य कोष-ग्रन्थस्य तदानीन्तनं मूल्यम् आसीत् पञ्चसप्ततिरूप्यकाणि । अप्पाशास्त्रिभिः स्वप्रणीतः निबन्धः स्पर्धार्थं प्रेषितः । अयमेव पुनः प्रथमक्रमाङ्कितः भूत्वा स्पर्धां विजितवान् । अप्पाशास्त्रिभिः शब्दकल्पद्रुमाख्यः महाकोषग्रन्थः प्राप्तः । अत्युत्कृष्टः असौ 'मातृभक्तिः' इत्याख्यः निबन्धः तु संस्कृत-चन्द्रिकायाः तृतीयवर्षस्य, शकस्य १८१७ वर्षे ज्येष्ठाषाढ-श्रावणमासीयेषु त्रिषु अङ्केषु प्रकाशितः ।

अस्य मातृभक्ति-निबन्धस्य 'चन्द्रिका'-संपादकैः भूरि भूरि प्रशंसा कृता । पाठकानाम् अपि अयं भृशं रोचकः समभूत् । आमुखम् एव अस्य संदृश्यतां प्रिय-पाठक-महाभागैः —

"सहृदयाः ! कियन्तो नाम मन्दमतिभिरस्माभिर्वाचाम् अगोचरा वक्तव्याः श्रीमातृदेव्या गुणाः कियच्च प्रतिपादनीयं गौरवं तद्भक्त्याः । ययैव स्वीय-जीवन-निर्विशेषम् उपजीविता वयम्, ययैवैताम् उपलम्भिता सुखैकविषयां दशाम्, ययैव प्रीतिपुरस्सरम् उपलालिताः, पोषिताः, संवर्धिताश्च तस्याः श्रीमातृदेव्याः कियतो वा गुणान् कियत्कालं वदत्वियं रसना? नूनं यल्लेखने कल्प-पादप-शाखाया अप्यपर्याप्ता लेखनी, आकाश-निर्विशेषविस्तारमप्यपरिपूर्णमेव पत्रम्, सिन्धुसमधिकाऽपि नालम्भविष्यति मसी, वाक्पतिरपि न प्रभविष्यति वर्णितुम्, न वेतण्डतुण्डोऽपि लिखितुम् । तस्यैव महीयसो विषयस्य मादृशैः क्षुद्रधिषणैः प्रतिपादनं नाम सुचक्षुष्कैरप्यप्रत्यक्षीक्रियमाणे वस्तुनि विलोकनायासो नयन-विधुरस्य, किन्तु 'नभः पतन्त्यात्मसमानपत्त्रिणः' इत्यस्ति अस्माकमप्यधिकारो लिखितुम् ।" इति ।

गङ्गाप्रवाहवद् ओघवती वाक्सरणिः इयं श्रीमातृदेव्याः प्रशंसापूर्तेः अशक्यत्वं द्योतयति । लेखनी-पत्र-मसी-कवि-लेखकानां मातृ-वर्णन-विषये प्रतिपादितम् असामर्थ्यं नूनं स्मारयेत् पुष्पदन्तप्रणीते शिवमहिम्नःस्तवे

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'असित-गिरि-समं स्यात् कज्जलं सिन्धुपात्रे' इत्यादि श्लोकम्। अशक्य-प्रायेऽपि अस्मिन् कर्मणि पदार्पणस्य समर्थनम् अपि खग-दृष्टान्तेन क्रिय-माणं मातृदेव्या महिम्नः अपारत्वं विस्पष्टयति।

महाकाली-भक्तानां शारदीय-नवरात्र-पूजा-महोत्सव-प्रियाणां मातृदेवानां वङ्गीयानां स्वान्तम् आचकर्ष निबन्धः अयम् इत्यत्र न किमपि आश्चर्यं नाम। अपि तु भाषासौष्ठवं, प्रतिपादनचातुर्यं, प्रसादः स्रोतस्वती सरस्वती इत्यादिभिः गुणगणैः श्रीजयचन्द्रशर्म-सिद्धान्तभूषण-नामधेयाः संस्कृत-चन्द्रिका-सम्पादकाः संस्कृत-लेखकेषु श्रीअप्पाशास्त्रिणाम् एव बहुमानं विदधिरे। यत्फलभूतः महान् कोषग्रन्थः अप्पाशास्त्रिभिः लब्धः। मूल्यं खल्वस्य तदानीन्तनं ७५ रूप्यकाणि। दरिद्राणां धुर्याः किल अप्पाशास्त्रिणः। कुतः पुनः एतावान् रूप्यकाणां राशिः ग्रन्थक्रयणार्थं संपाद्यताम् एतैः? ग्रन्थः पुनः अयं संस्कृत-कोष-वाङ्मये अमूल्यः इति सुप्रसिद्धम् एव। ततश्च प्राप्तोऽयं ग्रन्थराजः प्रसादः एव सरस्वत्याः इति, यदि नाम संपन्ना मतिः अप्पाशास्त्रिणां, नात्र किमपि आश्चर्यम्। अत एव शब्दकल्पद्रुमाख्यः अयं ग्रन्थराजः अप्पाशास्त्रिणां संनिधिं नित्यमेव अलङ्करोति स्म।

एतदुत्तरं 'दशापरिणतिः' इति कथा एका अप्पाशास्त्रिणां चन्द्रिकायाः द्वितीयखण्डस्यैव पञ्चम-सप्तमयोः अङ्कयोः प्रकाशिता।

अप्पाशास्त्रिणां कौशल्यं वीक्ष्य चन्द्रिकासंपादकाः समस्यापूरक-कविभ्यः काव्यानन्द-प्रभृति-पदवी-वितरणसमये अप्पाशास्त्रिणाम् अपि अभिप्रायं स्वीकर्तुं समुपचक्रमिरे।

एवं च संस्कृत-गद्य-पद्य-विलेखने लब्धप्रतिष्ठैः अप्पाशास्त्रिभिः मनसि कृतः अभिनवः एकः समुद्यमः।

### २२. सूनृतवादिनी-संकल्पः।

कित्तूरग्रामवास्तव्यः काव्यानन्दः पुणेकरोपाह्वः श्रीनरसिंहाचार्य-महोदयः अप्पाशास्त्रिणां परमः सुहृद्वर्यः इति पूर्वम् एव निवेदितमेतत्। काव्यानन्दः इति उपाधिरेव अस्य महाभागस्य काव्य-कला-कुशलत्वं विस्पष्टयति। अनेन सह संमन्त्र्य निर्णीतम् अप्पाशास्त्रिभिः सूनृतवादिनी-नाम मासिकपत्रम् एकं प्रचारयितव्यम् इति। विज्ञापनं च एतद्विषयकं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१८१७ तम-शक-वर्षस्य पौषे चन्द्रिकायाः तृतीय-वर्षस्य नवमाङ्के प्रकटीकृतम् । तदित्थम् —

* * * * * * * * * * * * * * * * * * * * * * * *

"सूनृतवादिनी नाम संस्कृत-मासिक-पत्रिका आगामिनश्चैत्रमासात् प्रभृति (सहस्रग्राहकाः संपत्स्यन्ते चेत्) प्रचारयिष्यते । अस्यां च नानाविध-मनोहरप्रबन्धाः, महात्मनां चरितानि, अनुवादादयश्च प्रकाशयिष्यन्ते । मूल्यं तु नयव्ययसहितं केवलं १।. रूप्यकम् । तच्च अग्रिममेव प्रेषणीयम् । त्वर्यतां च पत्रप्रेषणे सहृदयैः । अस्याः सौष्ठवे च संस्कृत-चन्द्रिकायां प्रकाशितो मातृभक्ति-प्रबन्ध एव निदर्शनम् ।

कृष्णभट्टव्यासानां भवने — राशिवडेकरः श्रीअप्पाशास्त्री"
कपिलतीर्थस्ट्रीट, कोल्हापुर — इति ।

* * * * * * * * * * * * * * * * * * * * * * * *

अस्मात् च विज्ञापनात् एवम् अवगम्यते यत् नवीन-मासिक-पत्र-प्रचाराय समपेक्षिता लेखादि-सामग्री अप्पाशास्त्रिभिः संपादिता आसीत् इति । यथा किल एतैः प्रकटीकृतं तथा भूयांसः मनोहराः प्रबन्धाः कानिचित् महात्मनां चरितानि, केचित् अनुवादस्वरूपाः प्रबन्धाश्च श्रीमदप्पाशास्त्रिभिः निर्मिताः एव स्युः । किन्तु कुटिलः खल्वसौ कालः एनं सूनृतवादिनी-प्रकाशन-रूपं मनोरथं नेदानीं समपूरयत् । अत्र च निदानं ग्राहकाणाम् अनिष्पत्तिः एव इति भाति । अभिलाषस्तु अयं सूनृतवादिनी-प्रचारात्मकः प्रायः इतःपरं पञ्चदश-वर्षोत्तरं सफलः संपन्नः । तदा हि सूनृतवादिनी साप्ताहिक-रूपेण अप्पाशास्त्रिभिः प्रकाशयितुं समारब्धा । वृत्तान्तः अयम् अस्य ग्रन्थस्य उत्कृष्ट-पर्वणि सुस्पष्टं वर्णयिष्यते ।

## २३. मालविका-नाटके व्याख्या ।

अद्यावधि स्ववयसः द्वाविंशवर्षपर्यन्तम् अप्पाशास्त्रिभिः पाणिनीय-व्याकरणेन सह साहित्ये दण्डी, विश्वनाथः इत्यादयः, कोशेषु अमर-हैम-त्रिकाण्डशेष - मेदिनी-रत्नाकर-हलायुधादयः, वसन्तराजीय-रसरत्नावली-प्रभृति-वैद्यकग्रन्थाः, भरतनाटचशास्त्रं, पिङ्गलसूत्रं, छन्दोमञ्जरी इत्यादि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नाटचच्छन्दोग्रन्थाः सुनिपुणम् अवलोकिताः। प्रथित-कवीनां काव्य-महाकाव्य-गद्य-नाटचादि-वाङमयम् अभ्यस्तम्। भैरवीतन्त्रादि-तन्त्रशास्त्रीय-ग्रन्थाः अपि आत्मसात्कृताः। विद्यारण्यादीनां वेदान्तग्रन्थाः परिशीलिताः। काव्य-नाटच-ग्रन्थानां टीकायाः अपि तुलनात्मकम् अध्ययनं कृतम्। सर्वस्य पुन अस्य सरस्वतीसमाराधनस्य परिपाकः स्वतन्त्रव्याख्याप्रणयनकौशलम अप्पाशास्त्रिषु समुत्पादयामास। शालिवाहन-शकस्य १८१८ तमे वर्षे अप्पाशास्त्रिभिः श्रीमतो महाकवि-प्रवरस्य कालिदासस्य मालविकाग्निमित्रं नाम नाटकं स्वकीय-व्याख्यया सनाथीकृतम्।

अस्याः मालविका-व्याख्यायाः मुद्रणं १८२४ तमे शकाब्दे मुम्बय्यां लक्ष्मीवेङकटेश्वरमुद्रणालये जातं तत्रैव चेदं प्रकाशितम्। पुनर्मुद्रणाद्यधिकाराः पुनः मुद्रणालयाधिपतेः श्रीकृष्णात्मज-गङ्गाविष्णुमहोदयस्य एव हस्ते समर्पिताः। यद्यपि व्याख्यायाः मुद्रणं प्रणयनोत्तरं प्रायः षड्भिः वर्षैः अभूत्, तथापि व्याख्यायाः विज्ञप्तिः १८१८ शकाब्दे एव विलिखिता। तत्र व्याख्यायाः प्रयोजन-विज्ञापकः इति विज्ञप्तेः चतुर्थः परिच्छेदः अत्र समुद्ध्रियते। स एषः —

"रूपकाणां स्वत एव दुर्गमत्वेनावश्यं व्याख्या-सापेक्षत्वम्। मालविकाग्निमित्रे च समीचीनाया एकस्या अपि व्याख्याया अभावाद् दुर्बोधतया रसपरिप्लुततया च तदास्वादमभिलष्यन्तो रसिका आमूलं कण्टकच्छन्नं केतकी-प्रसूनम् अनुधावन्तो मधुकरा इव नितान्तं दुःखायन्त इति तस्य सरलव्याख्यासापेक्षत्वमवबुध्य यथामति प्राणैषं व्याख्याम् इमां बालबोधिनीं नाम।" इति। मालविकाग्निमित्रस्य च शुद्धपाठं निर्धारयितुं कलकत्ताप्रकाशितम् एकं, मुम्बईप्रकाशिते द्वे, बेङ्गळूरप्रकाशितं चैकम् इति चत्वारि पुस्तकानि समासादितानि एतैः।

## २४. संस्करण-कौशल्यम्।

व्याख्याय नाटकम् एतत् अप्पाशास्त्रिभिः नव्यशैलीम् अनुसृत्य व्याख्यायाः प्राक् अन्येऽपि विषयाः समायोजिताः। प्रथमं तावत् कवेः कालिदासस्य कालनिर्णयः प्रपञ्चितः। संक्षिप्ते कालनिर्णयलेखे अस्मिन् एकादश-पूर्वपक्षान् निराकृत्य विक्रमार्क-पूर्व-कालिकत्वं व्यवस्थापितम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततः कालिदास-विरचित-प्रबन्धानां परिचयः प्रदत्तः। तदूर्ध्वं नायकादि-विवेकः, रसोत्पत्तिः, अलङ्कारलक्षणानि, छन्दोमञ्जूषा, कथांशस्य सूची-पत्रं, नाटकगतपद्यानां सूचीपत्रं, मालविकाग्निमित्रे पात्राणां सूचिः इत्यादयः रसिकानाम् आवश्यकाः विषयाः लिखिताः। व्याख्यायाः अन्ते शुद्धिपत्रम् अपि संयोजितम्। एवं सार्धद्विशत-पृष्ठात्मकम् एतत् पुस्तकं प्रदाय रसिकेभ्यः संसाधितम् एतैः प्राचीन-नवीन-शैली-सनाथं व्याख्याकौशल्यम्। व्याख्यायाः आरम्भे समाप्तौ च श्रीशिवकृपाशंसनं विहितम् इति नैतत् आवश्यकं वक्तुम्।

२५. आकाङ्क्षापूर्तिः।

एवं सुमधुर-लेखनेन व्याख्या-प्रणयनेन च रसिकानाम् आकाङ्क्षा-पूर्तिं कुर्वाणाः अप्पाशास्त्रिणः स्वीयाकाङ्क्षायाः पूरणे दत्तचित्ताः आसन्। वाचस्पति-प्रतिभ-प्रतिभानाम् एतेषां प्रबन्ध-विलेखने महिष्ठा रुचिः उद-पद्यत। पाठकाः अपि अप्पाशास्त्रिणां लेखनी-सरणौ लुब्धाः आसन्। मातृभक्तिनिबन्धेन दत्तहस्तावलम्बैः अप्पाशास्त्रिभिः 'सूनृतवादिनीं नाम मासिकपत्रिकां प्रकाशयिष्यामः' इति प्रकटीकृतं, परन्तु ग्राहक-संख्यायाः अपूर्त्या आकाङ्क्षा-पूर्तिः इयम् एतेषां खपुष्पायिता। अतश्च म्लानम् इव स्यात् मनागपि स्वान्तम् अप्पाशास्त्रिणाम् इत्यत्र न संदेहः। किन्तु नवीनपत्रिकाप्रचारस्य तावत् इदानीं नैवासीत् योगः इति तथ्यम् एतत्। चन्द्रिका तु नव्येऽस्मिन् लेखकप्रवरे मुग्धा इव आसीत्। अतश्च सैव स्वयमेव अप्पाशास्त्रिणां संनिधिं प्राप्तवती। अप्पाशास्त्रिभिः च सिद्धेः द्वारम् इव उपलब्धम्। समुज्ज्वलितम् अभूत् अशेषं संस्कृत-विश्वम्। प्रसन्ना अजायत संस्कृत-साहित्य-सृष्टिः। प्रदत्तावलम्बः अभवत् संस्कृत-विद्या-विस्तरः। विलसितं संस्कृत-सरस्वती-नृत्यम्। समलङ्कृतः संस्कृत-गद्यावतारः। संपूर्ण-मनोरथा अजायत पद्यपद्धतिः। अमन्दानन्द-कन्दलिता रसिकाः। प्रफुल्लितम् अभूत् संस्कृत-पत्रिकोद्यानम्। धवलितं चाभूत् अशेषं संस्कृतं जगत् संस्कृतचन्द्रिका-प्रसारितेन अप्पाशास्त्रिणां यशोमहसा। तदेतत् अशेषम् अपि मध्यमपर्वणि निध्यायतां सहृदयैः।

* * *



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# मध्यम पर्व।

**१. वङ्गाः किल विहारभवनं भगवत्याः संस्कृतभाषायाः।**
**—श्रीअप्पाशास्त्रिणः।**

सुविदितम् एव इदं निखिलानाम् एव संस्कृतज्ञानां यत् समस्त-भारत-व्यापिनी अपि संस्कृतविद्या क्वापि क्वापि विशेषतया विराजते इति। यथा किल महाराष्ट्रेषु व्याकरणम् अद्वैत-वेदान्तश्च, केरल-मद्रास-प्रदेशयोः श्रौत-याज्ञिकं मीमांसा च, कर्णाटकेषु न्याय-वेदान्तौ, काश्मीरेषु साहित्यं, वङ्गेषु नव्यन्यायः इत्यादि विशेष-शास्त्राणां प्रचारः तत्र तत्र विद्यते। काश्यां पुनः सवषाम् एव शास्त्राणां प्रचलति परिशीलनम्। इदानीम् अपि आर्यावर्तापरनामधेये उत्तरापथे एव समधिकः दृश्यते संस्कृत-भाषायाः प्रसारः। तत्रापि वङ्गेषु एव सोऽयं दृश्यते सुबहुलः एव। अखिल-भारतीय-साहित्य-संमेलनस्य प्रधानं स्थानं प्रथमं वङ्गानां राजधानी कलकत्ता-नगरी एव आसीत्। प्रथमं संस्कृतमासिकपत्रम् अपि पं. हृषीकेशभट्टाचार्यैः कलकत्तातः एव प्रकाशितम्। कलकत्तानगरे एव आदिमः संस्कृत-महाविद्यालयः प्रतिष्ठापितः। भूयांसः एव विभिन्नप्रान्तीयाः अपि पण्डिताः कलकत्ता-संस्कृत-विद्यापीठं मण्डयामासुः। अतः युक्तमेव संस्कृतप्रचारान्दोलनस्य अपि वङ्गेभ्यः एव प्रारम्भः। कलकत्तानगरं तु तदानीं भारतवर्षस्य राजधानी बभूव। अतो विशेषतः तत्रैव संस्कृतभाषायाः प्रचारोपक्रमस्य निदानं स्पष्टमेव। तत् हि समस्तदेशस्य हृदयस्थाने विद्यमानस्य राजधानीनगरस्य संस्कृतीकरणम् एव। संपन्ने च तस्मिन् देश-शरीर-शुद्धिः अनुपदम् एव भवेत् इति। अतः यद्यपि विद्योदयाख्यं मासिकपत्रकं कलकत्तायां प्रचलत् आसीत् तथापि संस्कृत-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रचार-परिपोषाय द्वितीयम् अपि एकं संस्कृत-भाषामयं मासिकपत्रकं कलकत्तानगरे एव प्रकाशम् आसादयत् । अभिधानं पुनः एतस्य '**संस्कृत-चन्द्रिका**' इति ।

## २. '**संस्कृतचन्द्रिका**'

संस्कृतचन्द्रिका इति यथार्थं-नाम्नी इयं मासिक-पत्रिका पण्डित-प्रवरैः जयचन्द्रशर्मसिद्धान्तभूषणभट्टाचार्यैः संपादिता । उद्देशस्तु चन्द्रिका-प्रकाशनस्य 'सरलसंस्कृतभाषया विनाक्लेशमुपदेशः, दार्शनिकादि-विषयाणां परिज्ञापनम्' इत्यासीत् । सर-रमेशचन्द्रमिश्रः, गुरुदास वन्द्यो-पाध्याय धर्माधिकारी च इत्येतौ चन्द्रिकायाः प्रचारे प्रेरकौ आस्ताम् । हरिदासमित्रः प्रकाशकः आसीत् । संस्कृतचन्द्रिकायाः मुद्रणं कलकत्तायाम् एव "६९ गनफाउंडरी रोड, काशीपुर हार्टिकल प्रेस" इत्यत्र "७५ कटन स्ट्रीट, नारायणयन्त्रम्" इत्यत्र च समभूत् । चन्द्रिकायाः प्रथमवर्षस्य प्रथमाङ्कस्थ-संपादकीयात् पं. जयचन्द्रशर्मभट्टाचार्यमहोदयानां हृदयस्थः संस्कृतचन्द्रिका-विकासः सचमत्कारं प्रादुर्भवति इति तत्रत्यः कोऽपि अंशः अत्र दीयते । सोऽयम् —

"संस्कृतचन्द्रिका अपि सुदूरे देशे विचरन्ती केनापि दैवहतकेन संरुद्धा प्रतिनिवृत्ता च मदीय-हृदय-शय्यायां सुदीर्घदिनानि सुप्ता बभूव । गते च किमपि काले श्रीमदीश्वरेच्छया महात्मना श्रीयुतरमेशचन्द्रमित्रेण, श्रीयुक्तगुरुदासवन्द्योपाध्यायेन उपाध्यायेनैव च सा 'संस्कृतचन्द्रिका' पुनर्जागरिता समाज्ञप्ता च पुनर्भारतवर्षस्य यशोगानाय प्रोत्साहिता च दिगन्तं पर्यटितुम् । तावेव प्राक्तनवर्तमानौ महाधर्माधिकरणिकौ च तौ मन्यमाना, तयोरादेशांश्च शिरसि वहन्ती संस्कृतचन्द्रिका पुनः प्रचलितुम् आरेभे ।" इति ।

अस्मात् पुनर्निवेदनात् एवं प्रतीयते । संस्कृतभाषायाः प्राक्तनं समृद्धं वैभवं पं. जयचन्द्रशर्मणां हृदयं समुल्लासयति स्म । दुर्दैववशात् अस्तमितं तद् वैभवं पुनरपि प्रत्यानेतुं संस्कृत-चन्द्रिका-नामक-मासिक-पत्रिका-प्रचारस्य विचारः एतेषां मनसि बहुकालं कृतावस्थानः आसीत् । यदा पुनरयं मित्र-वन्द्योपाध्याय-महाभागाभ्यां विज्ञातः, तदा ताभ्यां पत्रिकायाः प्रचारे साहाय्यं प्रतिश्रुतम् इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चन्द्रिकाया: प्रथमोऽङ्क: शकस्य १८१५ वर्षीये वैशाखे मासि (इ. सन १८९३ मे) प्रकाशित:। तत: प्रभृति चेयं नियतमेव प्रतिमासं प्रकाशितुं समुपक्रान्ता।

३. सूक्तसंस्कृतचन्द्रिका जयपुरश्चन्द्रोऽपि चन्द्रायते। —विश्वेश्वरशर्मा

यदा किल संस्कृतचन्द्रिकाप्रचार: प्रारब्ध: तदा वङ्गेषु विद्योदय:, केरलेषु च विज्ञानचिन्तामणि: इति द्वे एव संस्कृतभाषामयपत्रिके आस्ताम्। विद्योदये चिन्तामणौ च देशवृत्तान्ता: प्रबन्धा: च प्रकाश्यन्ते स्म। किन्तु पत्रिकयो: एतयो: प्रचार: मर्यादित: एव आसीत्। विद्योदयस्य प्रचार: प्राय: उत्तरापथे, विज्ञानचिन्तामणे: च दक्षिणापथे अवर्तत। किन्तु समुदयमाना चन्द्रिकेयम् अचिरादेव समस्तं भारतं व्याप्नोत्। अनेनैव अनुमेयं पं. श्रीजयचन्द्रशर्ममहोदयानां कुशलत्वम्। चन्द्रिकाया: आकार: 'डेमी २४ पृष्ठात्मक:' आसीत्। अस्याश्च मुखपृष्ठे सर्वदैव अयं श्लोक: व्यराजत —

"दोषक्षतं चात्र हि शोषणीयं दयारसं साधु सदाभिषिच्य।
सतां पदे तत्प्रचते न धूर्तं किं मक्षिका तत् त्यजति स्तुताङ्घ्री॥"

मङ्गलाचरणात्मक: पुन: एषोऽपि श्लोक: प्रत्यङ्कम् अधिष्ठित: आसीत् —

"शिवादीनपि कर्माणि कारयन्ती जनानिव।
मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी॥"

अनेन संपादका: भगवत्या: परमोपासका: इति स्पष्टीभवति। 'श्रीदुर्गा शरणम्' इति विलिख्यैव श्रीजयचन्द्रशर्ममहाभागा: प्रबन्धलेखनम् उपक्रमन्ते स्म।

श्रीजयचन्द्रमहोदयै: चत्वारि वर्षाणि संस्कृतचन्द्रिकाया: संपादनं कृतम्। तदवधि भूयांस: एव नानाविधा: प्रबन्धा: एभि: प्रकाशिता:। नैकेषां नैकविधानां प्रबन्धानां चन्द्रिका प्रकाशनस्थानम् अभूत्। परिचयार्थं प्रथमवर्षत: चतुर्थवर्षावधि प्रकाशितलेखानां दिग्दर्शनं क्रियते। तेन खलु विज्ञायते पाठकै: रोचकं स्वरूपं संस्कृतचन्द्रिकाया:।

प्रथमवर्षे—कविता: १५। निबन्धा: २४। कथा: ५।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**द्वितीयवर्षे**—उपन्यासद्वयम् । कथाः ८ । निबन्धाः १४ । कविताः २९ ।

**तृतीयवर्षे**—एकं नाटकम् । उपन्यासद्वयम् । निबन्धाः १० । कविताः ३३ ।

**चतुर्थवर्षे**—कविताः ४४ । कथाः ३ । लेखाः २९ । इत्येवंविधं प्रकाशनम् अभूत् ।

संस्कृतचन्द्रिकायाः प्रत्यङ्कम् एव नियता विषयस्तम्भा आसन् । यथा–विविधविचारः, धर्मतत्त्वम्, नीतितत्त्वम्, स्त्रीशिक्षा, पुस्तकपरिचयः इति । एतेन चन्द्रिकायाः विषयवैविध्यं परिचितं भवति । तेन चन्द्रिकायां रसिकपाठकानाम् आकर्षणस्थानम् अभूत् । विश्वविद्यालयस्थच्छात्राणां कृतेऽपि चन्द्रिकायां प्रश्नोत्तराणि प्रकाश्यन्ते स्म । अतश्चन्द्रिका बहूनां प्रशंसायाः भाजनं बभूव । तत्र दृश्यतां किमपि प्रशंसापद्यम्—

"भूराकाशतलायते प्रतिपलं रवाशापिपूर्णायते
नाना-गद्य-सुपद्य-हृद्य-रचना तारानुकारायते ।
चेतश्चार्वथ लोचनं च विदुषां चञ्चच्चकोरायते
सूद्यत्संस्कृतचन्द्रिका जयपुरश्चन्द्रोपि चन्द्रायते ॥"

(चं. २ । १०)

एवं 'संस्कृतचन्द्रिका'-काराणां पं. जयचन्द्रमहाभागानां सर्वतः स्तुतिः अजायत । चन्द्रिकायाः ग्राहकसंख्याऽपि सहस्रम् अतिक्रान्ता ।

**४. चन्द्रिकायाः केचिल्लेखकाः ।**

अभिनवं पन्थानं प्रवर्तयन्त्या संस्कृत-चन्द्रिकया भूयांसः प्रबन्ध-प्रणेतारः प्रोत्साहिताः । तत्र केषाञ्चित् प्रधानप्रधानानां नामानि यथा—
१. नन्दलालशर्मा विद्याविनोदः । २. ईशानचन्द्रविशारदः । ३. महावीर-प्रसादद्विवेदी । ४. उपेन्द्रनाथसेनः । ५. श्रीविष्णुशास्त्री । ६. अन्नदाचरण-तर्कचूडामणिः । ७. कुलिकरामशास्त्री । ८. अप्पाशास्त्री राशिवडेकरः । ९. महेशचन्द्रतर्कचूडामणिः ।— इत्यादि ।

एतेषु ३–६–८–९ क्रमाङ्किताः संस्कृत-चन्द्रिकायाः जीवितावधि लेखकत्वेन तस्थुः । अष्टमक्रमाङ्किताः पुनः उत्तरकालिकाः संस्कृत-चन्द्रिकायाः संपादकाः एतच्चरितनायकाः एव ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ५. संपादकीयो निर्वेदः ।

प्रियपाठकमहाभागाः । आरम्भकालात् प्रभृति संस्कृतपत्रिका-संपादकानां 'निर्वेदः' ललाटरेखायितः । अद्यापि पुनः अयं संस्कृत-पत्रिका-संपादकं प्रियं सखायम् इव न त्यजति । अहो अस्य संस्कृत-पण्डितेषु प्रणयप्रकर्षः! एवं सति पं. जयचन्द्रशर्मसिद्धान्तभूषणमहोदयानां विरहमसौ कथङ्कारं सहेत? तन्नैतदाश्चर्यं चन्द्रिकायाः चतुर्थवर्षीय-नवमाङ्के निर्वेदः अयम् आत्मानं प्रकटीचकारेति । स एषः —

"अधुना खलु चन्द्रिकाया मूल्यप्रदातारो ग्राहकाः सहस्रादुपरि वर्तन्ते । तथापि भिन्नदेशीया एवार्घाः । ये खल्वर्घा वङ्गीयाः तन्मध्ये पादार्घा एव मूल्यं प्रायच्छन् । अवशिष्टास्तु नपूर्वकं क्वापि निर्भर्त्सनं वा । किन्तु ये ग्राहकीभवत्काले सोत्साहं स्वयमेव पत्रं प्राहिण्वन् ते पुनर्न साधारणाः, केऽपि प्रधानधर्माधिकरणिकाः, केऽपि प्रधानवादे नियुक्ताः । ते द्विधा त्रिधा पत्रं प्राप्यापि पत्रोत्तरमपि नो ददति । का कथा मूल्यस्य । एवं रीत्या अनेकेषां संनिधौ एक-द्वि-त्रि-चतुर्णां वर्षाणां मूल्यं व्यवकलितम् । अतश्चैत्रमासात् ( शकः १८१९ ) परं नववर्षप्रवृत्तौ पुनश्चन्द्रिका प्रचलिष्यति न वा संशयं गाहते मनः । " इति ।

एतेन चन्द्रिकायाः सांपत्तिकी स्थितिः प्रकाशिता भवति । यदि नाम मूल्यमेव ग्राहकैर्न दत्तं तर्हि कथं नाम प्रचरतु पत्रिका? भूयसाम् एव ग्राहकाणां दातृत्वविरहेण अनियमितप्रकाशनं, धनविरहेण च मुद्रणा-लयविषये क्लेशः, येनकेनापि प्रकारेण प्रचारणं, मूल्यप्रदातॄणां केषाञ्चित् असन्तोषः एवं रूपेण नानाविधा विपदः संस्कृतचन्द्रिकायाः शिरसि निपतिताः । अतः 'कथं संस्कृत-चन्द्रिका प्रचलिष्यति?' इति प्रश्नो यदि संपादकानां पुरतो दत्तपदः स्यात् तर्हि किम् अत्र आश्चर्यम्?

इदानीं पुनः शरीरप्रकृतिरपि श्रीजयचन्द्रशर्मणां विकृताऽभवत् । चन्द्रिकाप्रचारत्रासः अपि चित्तं तुदति स्म । अतः यदि चन्द्रिकाप्रकाशन-भारधारणार्थम् अन्यः कोऽपि लभ्येत तर्हि सुष्ठु स्यात् इति चिन्तनं संपादकानां यथार्थताम् एव भजते । चन्द्रिका-लेखकेषु श्रीअप्पाशास्त्रिणः संपादकानां प्रेष्ठाः आसन् । मातृभक्तिविषये प्रबन्धं विलिख्य न केवलमेतैः पारितोषिकमेव अर्जितम्, अपि तु चन्द्रिकापाठकानां मनांसि अपि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आवर्जितानि आसन्। अपि च सूनृतवादिनीमासिकविज्ञापनया अप्पाशास्त्रिणां पत्रिकाप्रचाराभिलाषः अपि चन्द्रिका-संपादकैः विज्ञातः। ग्राहकसंपत्तेः अभावात् नायं श्रीअप्पाशास्त्रिणां मनोरथः पूर्णोऽभवत् इत्यपि श्रीजयचन्द्रपण्डितानां प्रत्यक्षमेव आसीत्। यदि पुनः ग्राहकनामावलिसहिता संस्कृतचन्द्रिका एव श्रीअप्पाशास्त्रिणां हस्तसात् क्रियेत तर्हि न केवलम् इयं प्रचरेत् एव, अपि तु समुत्कर्षमपि प्राप्नुयात् एव, अत्रार्थे महिष्ठः आसीत् श्रीजयचन्द्रपण्डितानां विश्वासः। एतद्विषये श्रीअप्पाशास्त्रिणां संमतिः प्राप्तैव इति नेदं कथयितुम् आवश्यकम्।

६. चन्द्रिका कोल्हापुरात् प्रकाशयिष्यते।

चन्द्रिकाप्रचारविषये साहाय्यं श्रीअप्पाशास्त्रिभिः प्रतिश्रुतम्। ततश्च संस्कृतचन्द्रिकायाः चतुर्थवर्षस्य एकादशेऽङ्के 'चन्द्रिका अप्पाशास्त्रिसंपादकत्वे कोल्हापुरात् प्रकाशयिष्यते' इति प्रकटितम् अभूत्। अस्मिन् एव अप्पाशास्त्रिषु चन्द्रिकासमर्पणरूपे व्यापारे व्यापृतानां जयचन्द्रशर्मणां श्रीअप्पाशास्त्रिभ्यः प्रेषितं पत्रमेकं समुपलभ्यते। इदं च हार्दाम् अवस्थां संपादकमहोदयानां व्यञ्जयतीति तदेतत् समग्रमेव अत्र विलिख्यते। अनेन हि पत्रलेखनशैली अपि श्रीमतां जयचन्द्रशर्मसिद्धान्तभूषणभट्टाचार्याणां परिचीयेत। तदेतत् —

"श्री श्रीदुर्गा शरणम्।

प्रतिनमस्कारपूर्वकं निवेदकः —

लब्धं श्रीमतः पत्रद्वयं, प्लेगप्रबन्धः भवद्विज्ञापनं च चैत्रपत्रिकायां प्रकाशितं, शीघ्रमेव हस्तमापतिष्यति। चैत्र-पत्रिका-वितरणात् प्रागेव (+) एवं चिह्नयित्वा मुद्रितनामादिकं प्रेरयिष्यामि। शब्दकल्पद्रुमादिविज्ञापनम् आगामिवर्षे प्रकाशयिष्यते न वेति विज्ञापयितृभ्यां निवेदयामि। वङ्गाक्षरप्रबन्धं यदि मुद्रणोचितं देवाक्षरेण लिखित्वा प्रतिप्रेरयामि अतस्तं प्रेरयन्तु भवन्तः। कलिकाता तु न मुष्टिमेयं स्थानं, मयापि चन्द्रिका अत्र पोष्टद्वारा चाल्यते। अतो मत्संनिधौ कलिकाताग्राहकाणां तावच्चन्द्रिका न प्रेर्याः। अद्यापि गवर्णसकाशात् चन्द्रिकामूल्यं न लब्धम्, अहो ततो मूल्यादाने नरकयन्त्रणाविशेषः। कति वा आवेदनान्यपेक्ष्यन्ते

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कति वा न क्लेशाः। आगामिवर्षार्थमपि मयावेदनपत्रं प्रदत्तं गतमासि। नाद्याप्युत्तरमुपात्तम्। लब्धे च प्रत्युत्तरे श्रीमन्तं कर्तव्यं विज्ञापयामि। बन्धो! मनसुष्ठार्थं (मनःसौष्ठवार्थं ?) लिखितं सम्यक् सबलोऽस्मीति। किन्तु गुरुतररोगात् परं नाद्यापि मनो न प्रसीदति। क्षुधा न सम्यक् प्रवृद्धा। कदाचिद्वा ज्वरवत् संतापोऽनुभूयते पुनर्झटिति स तिरोभवति। अधुना सप्ताहं यावत् सर्वाङ्गेषु वेदना रोमान्तीवच्च स्वल्पकण्डूतिः काऽपि शरीरे दृश्यते। उपजिव्हिका प्रवृद्धा, तदर्थे शुष्ककासोऽतितरां क्लेशयति। शिरःशूलमपि निरन्तरं तुदति। अत इच्छामि आगामि-वैशाखे मासि स्वजन्मस्थानं प्रति गन्तुमिति। तदा भवन्तमपि ज्ञापयामि। अपि च देवलस्मृतिर्विक्रयार्थं मुद्रितश्चेत् (मुद्रिता चेत् ?) तस्य कियन्मूल्यमवगन्तुमिच्छामि। अत्रान्यत्कुशलम्। श्रीमतां कुशलं ज्ञापयितव्यमिति। चैत्रशुक्लत्रयोदश्याम्।

अपि च गतरजन्यां मे ज्वरो जातः।" इति।

श्रीमदायत्तचेताः
श्रीजयचन्द्रशर्मा।

प्रेष्ठाः पाठकाः। नूनं निभालितं श्रीमद्भिः संस्कृतचन्द्रिकाप्रवर्त-कानां पत्रमेतत्। श्रीअप्पाशास्त्रिभ्यः खलु एतत् लिखितम्। मनसि कर्तव्यं तावत् अत्रत्यं सौहार्दम्। सम्यक्पठनं पत्रस्यास्य ज्ञापयति गुरुः इव उप-देशं मित्रमिव च दुःखम् आत्मीयम्। 'स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति।' अत एव स्वकीयं दुःखं स्निग्धवरेण्येभ्यः अप्पा-शास्त्रिभ्यः निवेदितम् एतैः। न तावत् दुःखनिवेदनम् एव प्रयोजनम् अस्य पत्रस्य। किन्तु चन्द्रिकाप्रचारार्थं दिग्दर्शनमपि। एतेन चतुर्थवर्षपूर्ति-सम-कालम् एव श्रीजयचन्द्रमहाभागैः चन्द्रिकाविषयकः सर्वोऽपि भारः श्रीअप्पाशास्त्रिषु निक्षिप्त इति भाति। अप्पाशास्त्रिषु समर्पित-चन्द्रिका-नाम् एतेषाम् अन्तरात्मा नूनं सुप्रसन्नः स्यात्।

**७. संपादकः कलकत्तायां चन्द्रिका तु कोल्हापुरे।**

स्वीकृतचन्द्रिकाप्रकाशनभारैः अप्पाशास्त्रिभिः प्रकाशनमुद्रणादि-योजना विहिता। मुद्रणं तावत् संस्कृतचन्द्रिकायाः वाईनगरे संकल्पितम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकाशनं च कोल्हापुरे स्वस्थानादेव। वाईक्षेत्रे मोदवृत्तमुद्रणयन्त्रस्य प्रमुखः श्रीकाशीनाथशास्त्री लेलेमहाभागः अप्पाशास्त्रिणां सुहृद्वर आसीत्। अयं किल विद्वान् च धार्मिकः च धर्मप्रचारकः च आसीत्। राजकीयसामाजिकादिविचाराः अस्य धर्मानुकूलाः एव आसन्। अत एव अस्य निकटे चन्द्रिकायाः मुद्रणं समायोजितम् एतैः। उच्यते खलु 'समानशीलव्यसनेषु सख्यम्' इति। शकस्य १८१९ तमवर्षे वैशाखे मासि चन्द्रिकायाः पञ्चमवर्षस्य प्रथमाङ्कः कोल्हापुरात् प्रकाशितः (मे १८९७)। संपादक इति श्रीजयचन्द्रशर्मणाम् एव नाम स्थितम्। सहकारिसंपादकः प्रकाशकः चेति श्रीअप्पाशास्त्रिणः तस्थुः। अस्याः च छात्रदेयं वार्षिकं मूल्यं १ रु. ३ आ. तदन्यग्राहकाणां कृते च १॥ रूप्यकात्मकम् आसीत्। एकाङ्कमूल्यं पुनः आनकचतुष्टयम् आसीत्। एवं च प्रधानसंपादकः कलकत्तायां, मुद्रणं वाईक्षेत्रे, प्रकाशनं च कोल्हापुरे इति चन्द्रिकायाः अवस्था आसीत्।

यथापूर्वं चन्द्रिकायाः पञ्चमखण्डाङ्केष्वपि 'दोषक्षतम् ...' इति श्लोकः 'शिवादीनपि...' इति श्लोकः च आसीत् एव, किन्तु तेन सहैव अन्योऽपि मङ्गलश्लोकः अप्पाशास्त्रिभिः स्वप्रकाशिते प्रथमाङ्के मुद्रापितः। सोऽयम्—

"पद्मभूप्रमुखा यस्य किङ्करा अमृतान्धसः।
स सुधांशूल्लसच्चूडः कोऽपि देवोऽवलम्ब्यते॥"

अप्पाशास्त्रिणां श्रीशिवैकभक्तत्वात् शिवप्रकर्षद्योतकात्मकं मङ्गलाचरणम् एतत् स्वाभाविकमेव आसीत्।

शिवशक्तिसंयोगः अयं संस्कृतपत्रिकाविश्वे अपूर्वां संस्कृतयशश्चन्द्रिकां समुद्दीपयाञ्चक्रे। यतः खलु अद्यापि संस्कृतचन्द्रिका मासिकपत्रिकाणाम् आदर्शः इति जेगीयते सुज्ञैः। यद्यपि चन्द्रिकायाः संपादन-प्रकाशन-प्रचारणादीनां भारः केवलं श्रीअप्पाशास्त्रिणामेव शिरसि आसीत्, तथापि तैः प्रधानसंपादक इति सर्वदा श्रीजयचन्द्रशर्मणाम् एव समुल्लेखः कृतः। सहकारिसंपादकत्वेन एव स्वकीय उल्लेखः कृतः। अयं क्रमः चन्द्रिकायाः चतुर्दशखण्डसमाप्ति यावत् प्रावर्तत। अहो कृतज्ञतायाः पराकाष्ठा!

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

८. चन्द्रिकायाः अभिनवम् उद्देश्यम् ।

सूनृतवादिनी इति मासिकपत्रिकां प्रकाशयितुकामैः अप्पाशास्त्रिभिः दुर्दैववशात् यद्यपि न पारितं प्रतिज्ञातं कर्म, तथापि चन्द्रिकायाः प्राप्तिः एतेषां महीयांसम् उत्साहं समुत्पादयामास । स्वसंकल्पितमासिकपत्रिकायाः कृते यद् यत् नाम संकल्पितम् आसीत् अप्पाशास्त्रिभिः तत्तत् सर्वम् अपि चन्द्रिकायाः एव कृते समुपयोजितम् एतैः ।

संप्राप्तायां हि चन्द्रिकायां श्रीअप्पाशास्त्रिभिः निश्चितं चन्द्रिकाप्रचारस्य उद्देश्यम् । निर्धारिता विषयाः । प्रार्थिता ग्राहकाः । विज्ञापिताः पण्डिताः । बोधिताः प्रबन्धारः । संसाधितः च चन्द्रिकायाः, तद्वारा च संस्कृतमासिकपत्रिकाणां कायाकल्पः । विषयाः तावत् एतैः एवं समुल्लिखिताः —

"विषयाः :

१. मङ्गलम्, मासावतरणिका, उद्भटश्लोकाश्च ।
२. महात्मनां ग्रन्थकृतां जीवनचरितं सति संभवे प्रतिमूर्तिसहितम् । तदभावे कालनिर्णयः ।
३. नव्यानि पद्यकाव्यानि ।
४. देशेतिवृत्तविषयका धर्मादिविषयकाश्च प्रबन्धाः ।
५. नव्यानि गद्यकाव्यानि ।
६. संकीर्णम् । ( अत्र समालोचना, विनोदवाक्यानि, अनुवादाः किंवदन्ती वा यथासंभवं प्रकाशयिष्यन्ते । )

कदाचिन्मिश्राण्यपि काव्यानि निवेशयिष्यन्ते ।" इति ।

चन्द्रिकायाः पञ्चमखण्डस्य विज्ञप्तिलेखे पूर्वोक्तप्रकारेण विषयोल्लेखं विधाय तत्संबन्धि अन्यदपि किञ्चित् अभिधाय अप्पाशास्त्रिभिः अन्ते प्रोक्तम्—"एवं कुर्वाणा अपि प्राचीनस्य संस्कृतचन्द्रिकोद्देशस्य नैव विस्मरिष्यामः" इति ।

चन्द्रिकायाः प्राचीनोद्देशः पूर्वमेव समुल्लिखितः । स हि १. सरलसंस्कृतभाषया उपदेशः । २. दार्शनिकविषयाणां परिज्ञापनम् । ३. उपन्यासकथा-निबन्धानां प्रकाशनम् । ४ विविधविचारः । ५. धर्मनीतिशिक्षा,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुस्तकपरिचयविषयकं लेखनं च इति स्वरूपः। तत्र प्रथमांशः पश्चात् निर्दिष्टेषु अंशेषु गतार्थप्रायः।

एतेषु उद्देशेषु सर्वेऽपि प्रायः श्रीअप्पाशास्त्रिनिर्दिष्टैः ३–४–५–६ क्रमाङ्कितैर्विषयैः समकक्षीयाः। नवीनं तु प्रथमक्रमाङ्कितं विषयद्वयं प्राधान्येन वर्तते। पुस्तकपरिचयः समालोचनारूपम् अगृह्णात्। निबन्धानां स्वरूपं व्यापकम् अभूत्। अनुवादः कृतास्पदः अभवत्। विशेषतस्तु संपादकीयं भाषासौष्ठवं निस्तुलम् अभूत्।

९. चन्द्रिका-प्रथमाङ्क-स्वरूपम्।

यथा किल निर्दिष्टं प्राक् तथा प्रथमाङ्कात् एव समारब्धम् अप्पाशास्त्रिभिः प्रबन्धप्रकाशनम्। वर्षावतरणिका, मासावतरणिका, उद्धृतश्लोकाः, सुमधुरं संपादकीयं, समालोचनाः, समस्यापूर्तयः, कविताः, विविधप्रबन्धाः इत्यादिभिः संस्कृतचन्द्रिका अनुत्तमां सुषमां प्राप्तवती।

एषु विषयेषु मङ्गलम्, अवतरणिका, समालोचना च सर्वथा संपादकानाम् एव आसन्। अवशिष्टविषयाणां लेखकाः अन्येऽपि आसन्। उद्धृतश्लोकास्तु प्रथमम् अप्पाशास्त्रिभिः एव प्रणीताः। कदाचित् प्राचीनाः अपि मुद्रिताः। क्वचित् पुनः अन्येषाम् अपि प्रकाशिताः।

चन्द्रिकायाः अप्पाशास्त्रिभिः संपादिते प्रथमाङ्के प्रतिज्ञातानां सर्वेषां विषयाणां यद्यपि दर्शनं न भवति तथापि प्रधानाः विषयाः अत्र संमुद्रिताः एव। तथा हि — मङ्गलम्, अवतरणिका, उद्धृतश्लोकाः, विज्ञप्तिः, आत्मावलम्बनम्, सामान्यधर्मप्रदीपः, विज्ञानकुसुमम्, वनविहंगः, इति शीर्षकाः विषयाः अस्मिन् प्रकाशिताः। तत्र मङ्गलावतरणिका श्लोकवनविहंगेतिविषयाः पद्यमयाः अवशिष्टाः तु गद्यप्रबन्धाः। एषु प्रबन्धेषु विज्ञानकुसुमम् इत्याख्यः गद्यप्रबन्धः, वनविहंगः इत्याख्यं काव्यं च अन्यान्यलेखकप्रणीतम्। अवशिष्टाः सर्वेऽपि गद्य-पद्य-मयाः प्रबन्धाः अप्पाशास्त्रिविरचिताः एव। अनयैव रीत्या चन्द्रिकायाः भूयांसः एव अङ्काः अप्पाशास्त्रि-प्रणीत-प्रबन्धैः एव बाहुल्येन अङ्किताः वर्तन्ते।

अस्मिन् प्रथमाङ्के 'श्रीशिवः शरणम्' इति वाक्यं सर्वाद्यत्वेन विद्योतते। एवं 'श्रीशिवः शरणम्' इत्यारभ्यैव श्रीअप्पाशास्त्रिणां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लेखनी प्रस्थानम् उपक्रमते स्म। ततश्च मङ्गलावतरणिकासुभाषित-श्लोकोत्तरं 'विज्ञप्तिः' इति गद्यप्रबन्धः विराजते, यः खलु अस्याङ्कस्य विशेषेण समाकर्षणं विद्यते। अस्मिन् हि प्रबन्धे चन्द्रिकायाः स्वरूपं, विषयाः इत्यादि विस्तरशः प्रकटीकृत्य जीवनचरितविषयकस्य देशेतिवृत्त-विषयकस्य च प्रबन्धस्य विषये विस्तरेण प्रतिपादितम्। अत्र तु एतद्-विषयकः तत्रत्यः अंशः समुद्ध्रियते, येन परिचीयेत पाठकमहाभागैः सौष्ठवं श्रीअप्पाशास्त्रिणां भाषायाः, प्रतिपादनस्य, उद्देशस्य चेति। स एषः —

**१०. अत एव, किञ्च, तदर्थम् —**

"बहवः किल भारतवर्षीया भूतपूर्वा विद्वांसो येषां जीवनचरित-स्याप्तमुखमात्रावशिष्टस्य कियानप्यंश आकर्णितो रोमाणि हर्षयति। यदि च तेषां जीवनचरितं कियन्तं कालं न विरच्येत तदा किल न तेषां नामापि श्रोतुं सुलभं स्यात्। न चैतद्युक्तम्। महात्मनां हि जीवनचरितं नाम निस्तुल उपदेशक एव। तद्धि चरितं पठन्तः सुमतयश्छात्राः 'कथंकारं वर्ण्यो विद्यामुपार्जिजत्, कस्मिंश्चावसरे कथंकारमवर्तत, कीदृशी चास्य प्रबन्धप्रणयनशैली, कीदृशः स्वभावस्तेन च कोऽस्य लाभः का वा हानि-रित्यादि' विषार्यं स्वयमपि तथा चरन्तः पटीयस्त्वमासादयेयुः भवेयुश्च भारतभूमेरसाधारणानि भूषणानि। अत एव यथाक्रमं यथावसरं च तेषां जीवनचरितानि नातिसंक्षेपाण्यनतिविस्तराणि च प्रकाशयिष्यन्ते।

"किं च शास्त्रमात्रपटवः केऽपि पण्डिताः पाण्डित्यमात्रेण सन्तु-ष्यन्तः स्वदेशविषये निकामम् औदासीन्यम् आलम्बन्ते। न चैतद्युक्तं नापि तैरिदं समीचीनमित्यभिप्रेयते। किं त्वनवरतं संस्कृतभाषासुधामास्वादयतां तेषां साहजिक एव देशभाषामाध्वीकेऽप्यननुरागः। दुरधिगमा चेदानीं देशीयभाषामयानां संवादपत्रिकादीनां वाचनमन्तरा देशप्रवृत्तिः संवृत्ता। अत एव चानभीष्टमपि देशप्रवृत्त्यज्ञानं तेषां घटते। नूनं यद्यमी महोदया विज्ञात-देश-वृत्तान्ताः स्वीयां हानिं जानन्तो जनपद-हितेषु कर्मस्वभिनिविशेरंस्तदाऽचिरादेव भारतं वर्षमुन्नमय्य महोद्य-मान्यपि देशान्तराणि ह्रेपयेयुः। अत एव तेषामत्र प्रवृत्तिरावश्यिका। सा च संस्कृतभाषया तथाविधविषयकप्रबन्धरचनां विना दुर्घटेति तदर्थं स्वदेश-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विषयकं कमपि वृत्तान्तमधिकृत्य सरल-गद्यमयं कियन्तमपि प्रबन्धं प्रायेण प्रतिसंख्यं प्रचारयिष्यामः।"

अस्मिन् विज्ञप्तिलेखे अप्पाशास्त्रिभिः चन्द्रिकायाः 'पाठकग्राहकाः प्रबन्धरचनायां तथावदधतु यथा न तत्प्रत्यर्पणं प्रसज्येत।' इति सूचना-पूर्वकं प्रबन्धविनिर्माणाय प्रार्थिताः। अस्मात्खलु विज्ञायते चन्द्रिकाप्रचारे काचित् विशिष्टैव सरणिः अप्पाशास्त्रिभिः निश्चिता आसीत् इति।

## ११. प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्।

पाठकमहाशयाः! 'इत्थं करिष्यामि, एवं करिष्यामि' इति प्रतिज्ञाकारिणः सुबहुला एव दृष्टिपथमुपयान्ति पुरुषधौरेयाः। न पुनः एतेषु भूयांसः एव पारयन्ति कर्तुं प्रतिज्ञापूर्तिम्। ते हि स्वकीयं सामर्थ्यम् अनालोच्य एव 'मुखमस्तीति वक्तव्यम्' इति न्यायमवलम्ब्य कार्यारम्भं प्रवर्तयन्तः नानाविधदोषैः आक्रान्ताः असमाप्ते एव कार्यजाते सुदूरतः त्यजन्ति तदेतत्। एतादृशान् एव समवलोक्य कर्तव्यम् एतेषां समुपदिशति सूक्तिः इयम्—'अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम्' इति। प्रतिज्ञाकर्तृषु पुनः अङ्गुलिगण्याः एव तादृशाः सन्ति ये किल जानन्ति सम्यक् एव बलाबलम् आत्मीयम्। निर्णयन्ति च नैतत् शक्यं शक्यमेव वा इति। शक्यमेव चेत् प्रारभन्ते एव एते प्रतिज्ञातकार्यम्। सोढ्वापि पुनः विपदां राशीन् पूरयन्त्येव स्वीकृतं कार्यम्। एतादृशान् एव निर्वर्ण्य सूक्तिः एषा प्रवर्तते—'प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्' इति। मतिमतां प्रवराः श्रीअप्पाशास्त्रिणः सम्यक् एव समवागच्छन् स्वीयं प्रतिभा-प्रकर्षम्। अत एव स्वलेखन्यां सुदृढश्रद्धैः अप्पाशास्त्रिभिः संस्कृतचन्द्रिकाप्रकाशनं महोत्साहेनोपक्रान्तं प्रतिज्ञातं चास्याः विषय-वैभवम्।

पत्रिका-संपादकेषु भूयांसः एव लेखक-महाभागेषु चातकायन्ते। तत्तादृशान् विविधविषयकान् प्रतिजानन्ति च लेखान्। अभीष्टकाले प्रबन्धान् अनधिगतवन्तः पुनः विमनायन्ते। अप्पाशास्त्रिणः तु नासन् तादृशाः संपादकाः। गद्यपद्योभयविधप्रबन्धप्रवीणत्वम् अप्पाशास्त्रिषु व्यद्योतत। सरसप्रबन्धनिर्माणकौशलेन सह शास्त्रार्थपटुत्वम् अपि। समालोचकत्वेन सह विनोदबुद्धिरपि। उपदेशकत्वमिव रञ्जकत्वं च।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत एव चन्द्रिकायाः प्रबन्धानां कृते खसूचित्वमेषां कदापि नैवासीत्। बहुमुखी प्रतिभा एतेषां गद्यमयान् पद्यमयान् मिश्रान् नैकविषयमयान् भूयसः एव प्रबन्धान् आविरकार्षीत्। कूलंकषत्वम् एतेषां प्रतिभायाः निदर्शयितुं चन्द्रिकायाः पञ्चमं खण्डमेव रसिकानां पुरस्तात् प्रसारयितुमिच्छामः। नामत एव श्रीमताम् अप्पाशास्त्रिणां प्रबन्धाः अत्र समुल्लिख्यन्ते। मनागेव पुनः प्रबन्धगतः अंशः समुद्ध्रियते। तथा हि—

**१२. अप्पाशास्त्रिणां नानातन्त्रविचक्षणत्वम्।**

**(१) अप्पाशास्त्री—सरसकविः।**

चन्द्रिकायाः प्रत्यङ्कं मङ्गलाचरणम् अवतरणिकाः च पद्यमया एव आसन्। तत्र संदृश्यताम् इदम् उपास्यदैवतस्य श्रीशिवस्य प्रकर्षद्योतकं मङ्गलम्—

**"पद्मभूप्रमुखा यस्य किङ्करा अमृतान्धसः।**
**स सुधांशूल्लसच्चूडः कोऽपि देवोऽवलम्ब्यते॥"**

पद्मभूप्रमुखाः नाम कमलोद्भव-(=ब्रह्मदेव)-प्रभृतयः सर्वेऽपि किङ्करा एव भगवतः श्रीशिवस्य। सुधांशुः चन्द्रमाः प्रतप्तानां सुरनरप्रभृतीनां दुःखसंहारक इति साभिमानम् एतं स्वचूडायां निवेशितवान् देवः। अथवा यदाश्रितः असौ चन्द्रः विश्वस्य तापहरणे समर्थो भवति, तं तादृशं भगवन्तं महादेवं संश्रयते कविः। कोऽपि इत्यनेन वर्णयितुम् अशक्यः इति द्योत्यते। चन्द्रस्य आश्रयप्रदाता भगवान् श्रीशिवः चन्द्रिकायाः एतस्याः अवलम्बनं करोतु इति ध्वनिः।

मासावतरणिकासु चेतसि विधीयताम् इयम्—

**"आक्रान्तोऽपि घनैर्मलीमसतमैर्वर्षासु निष्कान्तितां**
**नीतः कष्टतमान्यहानि कतिचिच्छन्नोऽतिवाह्य क्वचित्।**
**मासेऽस्मिन्निषसंज्ञके विमलया कान्त्या जगद् भासयन्**
**प्राक्काष्ठामुखचन्दनैकतिलकः शीतांशुरुज्जृम्भते॥"**

नूनं संस्कृतचन्द्रिकाप्रवर्तकस्य जयचन्द्रशर्म-सिद्धान्तभूषणभट्टाचार्यस्यैव वर्णनम् इदम्। सोऽपि ननु एतादृश एव। चन्द्रिकाप्रचारणे विपन्नेन

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

खलु तेन इदानीं ( अप्पाशास्त्रिसाहाय्येन ) संकटानि निरस्य संस्कृत-चन्द्रिकायशसा दिशो धवलीकृताः। असौ च चन्द्रः भारतभुवः पूर्वदेशीयः एव। वङ्गेषु एव अयं न्यवसत् इति। रूपकालङ्कारेणायं वस्तुध्वनिः।

अस्मिन् चन्द्रिकायाः पञ्चमे वर्षे भूयांसः एव अप्पाशास्त्रिणाम् उद्भटश्लोकाः प्रकाशिताः। तत्र दृश्यतां तावत् अयम् अर्थान्तरन्यासः —

"तुङ्गानामपि मेघाः शैलानामुपरि विदधतेच्छायाम्।
उपकर्तुं हि समर्था भवन्ति महतां महीयांसः॥"

इयमपि नयनगोचरीक्रियतां भ्रान्तापह्नुतिः —

"सुपदन्यासमनोज्ञाऽलङ्कारोद्भासिता रसोत्फुल्ला।
किं नु सखे वरवनिता, नहि नहि कविता कवीन्द्रस्य॥"

सुमधुरः प्रसन्नः च अत्रत्यः श्लेषः। एवंगुणविशिष्टायाः कवितायाः पुरस्ताद् कामिनी अपि वरवर्णिनी तुच्छा इति द्योत्यते।

चन्द्रिकायाः पञ्चमे खण्डे अप्पाशास्त्रिणां द्वे खण्डकाव्ये प्रकाशिते। तत्र प्रथमं 'श्रीशाहोः कुमारावाप्तिः।' शकस्य १८१९ वर्षीय श्रावण-सुदि प्रतिपदायां कोल्हापुराधिपतेः श्रीमतः शाहुराजस्य राजारामसंज्ञकः पुत्रः अभवत्। राजपुत्रजन्मोत्सवम् अधिकृत्य काव्यम् इदं प्रणीतम्। तत्र तावत् शाहुराजस्य राजधानीवर्णनं निर्वर्ण्यतां रसिकैः —

"तस्यास्ति लक्ष्म्या स्वयमेव जुष्टा कोल्हापुराख्या किल राजधानी।
अभ्यस्यता देवपुरीविधानं व्यधायि या पूर्वमिवाब्जजेन॥ ४॥"

प्रसन्नोऽयं श्लोकः। सिद्धविषया वस्तूत्प्रेक्षा इयम्। इदं च अक्षि-लक्ष्यीक्रियतां जन्मसमयवर्णनम् —

"मासे नभस्यखिलसंमदसद्मभूते पक्षे सुधाकरकरोज्ज्वलरोदसीके।
आद्ये तिथावुदयमाप नृपात्मजेन्दुर् मोदः प्रजामनसि चाननुभूतपूर्वः॥"

अत्र द्वितीये पादे व्यासः सुस्पष्टः। द्वितीयार्धे रूपकसंश्लिष्टं दीपकम्।

अथैतद् एकमेव निपीयतां राजप्रकर्षवर्णनम् —

"पुण्ये जन्मकुले च संपदमला धर्मे मतिः सुस्थिरा
कीर्तिर्दिग्गजकुम्भमध्यविलसन्मुक्ताकलापायिता।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तारुण्ये च सुताङ्कुवो नृपतितेत्येकैकमप्युच्चकैः
श्लाघ्यं शाहुनृपाल तत् त्वयि सतामग्र्ये समग्रं स्थितम् ॥२३॥"

'उदात्तं वस्तुनः संपत्' इति लक्षितः उदात्तालङ्कारः अत्र संपद्यते। सारालङ्कारोऽपि विराजते। 'उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः।' इति तस्य लक्षणम्। काव्यस्यास्य अन्तिमः श्लोकः शिबिकाबन्धस्य उदाहरणं विद्यते। अतः कवेः विविधालङ्कारविन्यासनैपुण्यं सुस्पष्टं भवति।

द्वितीयं खण्डकाव्यम् एतेषां 'तिलकमहाशयस्य कारागृहनिवासः' इत्याख्यं विद्यते। २२-६-१८९७ इत्याङ्ग्लदिने रॅण्डमहाशयस्य वधः संजातः। तन्निमित्तेन लोकमान्यतिलकमहोदयाः कारागृहवासम् अनुभूतवन्तः। पण्डितस्य नेतृप्रवरस्य च तिलकमहोदयस्य दुःखम् इदं राष्ट्रभक्तस्य कवेः स्वान्ताय कथं नाम स्वास्थ्यं प्रदद्यात्? तत् नैतद् विस्मयावहं यत् तिलककारावासम् एव अधिकृत्य श्रीअप्पाशास्त्रिणः काव्यं न्यबध्नन् इति।

लोकमान्याः निगडेन दूषिताः इति वदन्तु नाम केचित्। कविः तु एवम् अभिप्रैति—

"निगदन्तु निसर्गदुर्धियो निगडं दूषणमित्यमुं तव।
अपरं स तथापि भूषणं भवतो येन विशिष्य पूज्यसे ॥ ४ ॥."

निगडरूपम् अपरं भूषणम् इत्युक्त्या स्वदेशसेवाव्रतं प्रथमं भूषणम् इति अवसीयते। रूपकमेतत्।

अथवा निगड एव श्रीमन्तं तिलकं नमस्कृत्य धन्यो बभूव इति सचमत्कारं कथयति कविः—

"अपतद् भवतः पदाम्बुजे निजपुण्यस्य विपाकतोऽद्य सः।
यदपास्य जगत्यवद्यतां निगडः साधुतमत्वमागतः ॥ १४ ॥"

अतिशयोक्तिपरिपुष्टः तद्गुणालङ्कारः अयम्। रसिकैः समग्रम् एव पठनीयं प्रत्यक्षर-रसोद्गारि काव्यम् एतत्। अत्र च तिलकविषयकः रतिभावः परां पुष्टिं संप्राप्तः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(२) अप्पाशास्त्री — गद्यनिबन्धलेखपटुः ।

चन्द्रिकायाः पञ्चम-खण्डीय-प्रथमाङ्कात् एव 'आत्मावलम्बनम्' इति निबन्धः अप्पाशास्त्रिभिः प्रकाशयितुं प्रारब्धः । अस्मिन् निबन्धे परावलम्बित्वस्य – पारतन्त्र्यस्य धिक्कारः कृतः । परावलम्बनेन जायमाना भारतीयानां हानिः प्रदर्शिता । विदेशीय-वस्तूनां मीमांसा कृता । स्वावलम्बनस्य सर्वथा समुन्नायकत्वं च प्रतिपादितम् । एवं परावलम्बनं तिरस्कृत्य अन्यच्च तत्संबन्धि किञ्चित् अभिधाय प्राहुः श्रीअप्पाशास्त्रिणः — 'नूनम् इदं परावलम्बनं नाम प्राणिनां निगूढनार्थं बन्धनम् ।' इति । परावलम्बनस्य इदं विवरणं तदानीन्तनाङ्ग्लशासनम् एव उद्दिश्य वर्तते इति को न मन्येत ?

'आशा' इत्याख्यः अपरो निबन्धः पञ्चमखण्डे दृग्गोचरो भवति । संदृश्यतां तावत् आशा-ग्रह-ग्रस्तस्य यत्किञ्चित्कारिता —

"आशया खलु मानुषो निःसारेष्वपि वस्तुषु प्रणयं कुरुते, पविपात-दुःसहान्यपि दुरात्मनां वचांसि सोढुं पारयति, दर्शनविभीषणान्यपि काननानि संचरति, किम् अधिकं भसितबहुलमप्यूषरमाधमति, बीभत्सेष्वपि वस्तुषु निकामम् अनुरागं बध्नाति, रुग्णशय्यामधिशयानोऽपि धनं धनं धनम् इति जञ्जप्यमानः शतशोऽपि क्रोशान् पलायते, न तु गणयति सुदुर्लभान् अपि प्राणान् । अहो प्रभाव आशायाः ।"

'विज्ञप्तिः' इत्याख्य-सुमधुर-संपादकीय-लेखस्य कोऽप्यंशः प्राक् एव समुल्लिखितः । इदानीं पुनः वीक्ष्यतां 'कृतज्ञता वत्सरान्ते विज्ञप्तिश्च' इत्याख्यलेखस्य कोऽप्यंशः —

"इदं च मया न विस्मरणीयं नापि विस्मरिष्यते यावज्जीवं यदकारणबन्धुता मूर्तिमतेव स्नेहेन शरीरम् आस्थितेनेव परमवैदुष्येण प्रथितयशसा कल्याणभाजनेन अपरेणेव मदीयेन बहिश्चरेण जीवितेन कलिकातानगरवासिना सुगृहीतनाम्ना श्री ५ जयचन्द्रसिद्धान्तभूषण-भट्टाचार्येण सानुकम्पं मय्यनुगृहीतं संस्कृतचन्द्रिकां समर्पयता । सर्वथा अनेकशः प्रशंसनीयम् अस्यौदार्यम् अभिनन्दनीयं प्रेमोपश्लोकनीयं च दूरदर्शित्वम् । विनयावनतेन च मौलिना वहाम्येतत्कृतानुपकारान् ।"



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिच्छेदोऽयं श्रीजयचन्द्रपण्डितविषयिणीम् अप्पाशास्त्रिणां श्रद्धापद्धतिं विद्योतयति।

**(३) अप्पाशास्त्री — शास्त्रार्थविचक्षणः।**

अप्पाशास्त्रिणां 'सामान्यधर्मप्रदीपः' इत्याख्यनिबन्धस्य प्रथमो भागः चन्द्रिकायां पञ्चमे खण्डे विद्यते। अत्र हि सामान्यधर्मेषु प्रथमभूतायाः अहिंसायाः स्वरूपनिर्धारणं प्रपञ्चितम्।

**(४) अप्पाशास्त्री — समालोचकः।**

अप्पाशास्त्रिणां समालोचनलेखाः सुबहुला एव विद्यन्ते। समालोच्य-ग्रन्था अपि नैकविषयकाः सन्ति। तत्र तावत् पठ्यतां काव्य-समालोचनायाः कोऽपि परिच्छेदः —

"**भगवच्छतकम्** — अत्र किलाभिनवेऽपि काव्ये दोषान्वेषणबद्धपरिकरेणापि मया प्रायो नैव दृष्टं दिदृक्षितम् इति नूनं प्रशंसार्होऽसौ महात्मा तर्कचूडामणिः। विरलाः खल्विदानीम् एवंविधाः सरसपद्यप्रणेतारो दार्शनिकप्रवराः। महीयान् हि दार्शनिकत्व-कविप्रवरत्वयोर्दृश्यते विरोधः। अस्य तु दार्शनिकप्रवरस्यापि कविप्रकाण्डस्य काव्ये तत्र तत्र गोचरीभवन् अलौकिकः प्रसादः, विलक्षणं माधुर्यम्, अपूर्वश्चालङ्कारोपन्यासो मनोहरो युक्तिवादप्रयोगो हृदयङ्गमश्च भावाविष्कारः कस्य वा सचेतसश्चेतो न प्रसादयेत्? कस्य च प्रेक्षावतस्तनुं न पुलकयेत्? कं च रसिकं स्वमात्रव्यासक्त्या तिरस्कृतान्यव्यापारं न विदध्यात्? सर्वथाऽशक्यम् एवंविधं काव्यं नव्यैर्निर्मातुं विशेषतस्तु दार्शनिकैः।"

अनेन खलु सरसकाव्यसमीक्षणधोरणी विज्ञायेत अप्पाशास्त्रिणाम्।

**(५) अप्पाशास्त्री — वेदान्तमर्मवेत्ता।**

आधुनिकैः वेदान्तसूत्रादीनां कृतम् अर्थान्तरं समवलोक्य तत्रोक्तम् अप्पाशास्त्रिभिः —

"इदं किल ब्रह्मविद्याशास्त्रं नामातिनिर्मलं नीरं, तच्च परिशीलयितुः श्रद्धाया य आकारस्तदात्मनैव परिणमते। अत एवास्याध्ययनेन पारमार्थिकं रूपम् अवबोद्धुम् अधिकारिविशेष एव प्रभवति न तु सुधारक-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धौरेयवर्गीयोऽनिगृहीतेन्द्रियोऽप्रशान्तात्मा सर्वः श्रुतीनां प्राकृतः शत्रुरिति प्रतिपाद्यत एव ब्रह्मविद्याविशारदैः। यथा नीरं मृदादिसमानं वर्णमधिगतवत् अपि कतकसंयोगादशेषमपि कालुष्यमपास्य पारमार्थिकमेवात्मनोरूपम् अवलम्बते। एवं तत्तन्मतानुयायिनां बुद्धिर्वैभवानुरूपं तत्तद्रूपमवलम्बमानं ब्रह्मविद्याशास्त्रं प्राचीनैर्ब्रह्मविद्यायाः पारमार्थिकं स्वरूपम् अवगच्छद्भिः विद्वत्तमैः आस्तिकैः प्रणीतानां प्रबन्धानां परिशीलनेन कालुष्यान्मोचयितुं शक्यम्।"

अनेन च वेदान्तशास्त्रीय-प्रमेयेषु निश्चितमतित्वम् अप्पाशास्त्रिणां स्फुटीभवति।

## (६) अप्पाशास्त्री — साहित्यमर्मविदां वरः।

कस्यचित् काव्यस्य समालोचनाविषयकपत्रस्य उत्तरप्रदानसमये विलिखितम् अप्पाशास्त्रिभिः —

"समाधिविषयेऽप्यत्र किञ्चिद् वक्तुमिच्छामः। प्राचीनो वामनाचार्योऽर्थदृष्टिः समाधि इति (३।२।७) समाधिलक्षणमभिधाय अर्थो द्विविधोऽयोनिरन्यच्छायायोनिर्वा (३।२।८) इत्यर्थस्य द्विविधतां प्राह। ......... महाकविकाव्यानां छायोपजीवनं न समाधिः किन्तु काव्यहेतुः शिक्षाविशेष इत्यपि वाग्भट्टादयो मन्यन्ते। तद्यदिच्छायोपजीवनमपि गुणस्तदा पादद्वयत्रयोपजीवनादयोऽपि गुणतामेवापद्येरंस्ततश्च स्व-प्रतिभया काव्यनिबन्धोऽकिञ्चित्करः कवित्वं च अनायाससाध्यं भविष्यतीत्यभिप्रेत्यैव समाधेर्गुणवत्तां नाङ्गीकुर्वते विश्वनाथादयो नव्याः। एवं समाधेस्तत्र च वामनसंमतस्य गुणत्वसंसिद्धौ भूयान् प्रत्यूहः।" अनेन साहित्यशास्त्रीयं विस्तृतवाचनं मननं च अप्पाशास्त्रिणां स्फुटीभवति।

## (७) अप्पाशास्त्री — संशोधकः चरितलेखकश्च।

महात्मनां जीवनचरितप्रणयनं प्रतिज्ञातम् अप्पाशास्त्रिभिः। तदनुसृत्य चन्द्रिकाया अस्मिन् पञ्चमे खण्डे १. श्रीशंकराचार्याः, २. महाकविः श्रीगुणाढ्यः, ३. कविवरः श्रीधनञ्जयः, ४. कविवरः श्रीवेङ्कटाध्वरी, ५. श्रीविश्वनाथकविराजः, ६. श्रीरघुनाथशिरोमणिः, ७. पं. कान्ताचार्याः इत्येतेषां सप्तानां परिचयं व्यलिखन्। प्रबन्धेषु एतेषु प्राचीनानि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

च अर्वाचीनानि च सुबहूनि प्रमाणानि परीक्ष्य कविकालनिर्णयः कृतः एतैः। क्वापि पुनः परमुख-प्रेक्षित्वम् एतेषां नैव दृष्टिगोचरीभवति। प्रबन्धेषु एतेषु कविकालादिनिर्णयः प्रबन्धसमीक्षणं च विद्यते।

एषु प्रबन्धेषु प्रथमारब्धोऽपि श्रीशंकराचार्याः इति प्रबन्धः अपूर्णः एव विद्यते। कालनिर्णयसरणिः पुनः अत्रत्या भारतीयप्रमाणपद्धतिम् आलम्बते। तत्र हि शिवरहस्येति पौराणग्रन्थं जिनविजयेति सौगतग्रन्थं च आश्रित्य द्वयोः एकवाक्यतया कलेर्वत्सराणां द्वाविंशशताब्दीय-षष्ठदशकान्ते (२१५७) आचार्याणां प्रादुर्भावः इति निर्णीतम्। (अर्थात् शकात् प्राक् १०२२ वर्षाणि।) प्रतिपाद्य च इत्थम् अन्ते प्राहुः श्रीअप्पाशास्त्रिणः —

"यत्तु हण्टरादयो भारतेतिहास-निबन्धारः शङ्कराचार्याणां ख्रिस्तीय-षष्ठ-शतकोद्भूतत्वं प्रतिपादयन्ति तन्नाश्चर्यास्पदम्। निसर्गो हि अयं यूरोपीयाणां यदेतेऽस्मद्देशीय-विदुषां प्राचीनतमानाम् अपि प्राचीनत्वं न सहन्ते। ते हि चतुःसहस्रवर्षेभ्यः प्राग्जगदेव नासीत् इति सिद्धान्तयन्ति तदावश्यकत्वमेव तेषां मतस्यैवंविधत्वम्। अन्यथा हि तत्-सिद्धान्तहानिः। अस्मद्-देशीयैः पुनः किमर्थम् अनुचितम् अप्येतन्मतम् आदरणीयम् इति न जानीमः।"

(८) अप्पाशास्त्री — वृत्तान्तनिबन्धननिपुणः।

चन्द्रिकायाः पञ्चमे खण्डे 'श्रीमती विद्यासुन्दरीदेवी,' 'अरण्ये रोदनं', 'प्रमोदलहरी' च इति वृत्तान्तत्रयं विस्तरेण प्रकाशितम्। भर्तुः मरणम् अवबुध्य विद्यासुन्दरीनामिका बाला प्रेतम् एतं पर्यष्वजत्। साऽपि स्वप्राणान् त्यक्तवती। दम्पतीयुग्मम् एतत् विशकलयितुम् अशक्नुवानाः बान्धवाः मिथः समाश्लेष-कृत-दृढावस्थम् एव मिथुनम् एतत् चितायाम् आरोपयामासुः। अरण्ये रोदनम् इत्याख्ये वृत्तान्तप्रबन्धे भूकम्पस्य महामार्यादिरोगाणां च वृत्तम् उपवर्ण्य तत् निदानं चिन्तितम्। प्रमोदलहरी इत्याख्ये वृत्तलेखे शाकुन्तलनाटकस्य संस्कृतभाषया कृतः अनुवादः प्रशंसितः। स्वदेशहितचिन्तकाख्या काचित् नाटकमण्डली कोल्हापुरे अवर्तत। तया शाकुन्तलाभिनयः कृतः। इति तम् एतं निशम्य परमानन्दपुलकिताः समभवन् अप्पाशास्त्रिणः। संस्कृतवाण्याः प्रचारायैव हि सर्वोऽपि प्रयासः आसीत् एतेषाम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(९) अप्पाशास्त्री — ललितनिबन्धकारः ।

अप्पाशास्त्रिणां 'संमार्जनी-शलाका' इत्याख्यो ललितनिबन्धः चन्द्रिकायाः पञ्चमे खण्डे नयनानन्दं वितनोति। जीर्ण-संमार्जनी-शलाकां संवीक्ष्य तादृशीम् एव जीवनसरणिं समालम्बमानानां क्षुद्राणां सकारुण्यम् अवहेलनम् अस्मिन् कृतम्। भूयोभिः एव प्रशंसितः अयं निबन्धः। दृश्यन्तां तावत् शलाका-दर्शनोद्भूत-विचाराः —

"इदानीं चैताम् अवलोकमानस्य मे सुदीर्घम् उष्णं च निःश्वसितं प्रादुर्भवति। चेतश्चात्यन्तम् औदासीन्यम् आलम्बते। एवंभूते च क्षणात्केऽपि नराधमाः स्वीयेनाचरितेनैतां संमार्जनीशलाकाम् अपि विडम्बयन्तोऽस्माकं मनस्याविर्भूय काम् अपि कारुण्यलहरीम् उत्पादयन्ति। मन्ये येषां किल नराधमानां संमार्जनी-शलाका-संवादिन्येवाकृतिर्धिक् तेषां जन्मेति।"

(१०) अप्पाशास्त्री — आयुर्वेदविज्ञः ।

वृक्षायुर्वेदः इति प्रबन्धः रोगतन्निदानादि प्रतिपादयति। नव्यत्वेन संभाव्यमानाः च मानुषाणां वृक्षाणां च केचिद् योगाः प्राचीनाः एव इत्यपि प्रतिपादितम् अस्मिन्। आयुर्वेदेऽपि मानुष-पशु-वनस्पति-प्रभृतीनां चिकित्सायाः ग्रन्थेषु परिचयः आसीत् अप्पाशास्त्रिणाम्। किं च पाश्चात्य-संस्कृति-प्रभावात् तिरस्कृतस्वाभिमानेषु सत्त्वोत्पादनम् अपि आसीत् अप्पाशास्त्रिणाम् उद्देश्यम्। तत् अपि प्रबन्धैः एतादृशैः शक्यम् अभवत्।

(११) अप्पाशास्त्री — कथालेखकः ।

अस्मिन् पञ्चमे खण्डे धर्मस्य सूक्ष्मा गतिः, मणिकुण्डलोपाख्यानं च इति द्वे कथे प्रकाशिते। वर्णनं, भावाविष्करणं, संवादादि च अत्रत्यं हृदयङ्गमम् एमेव।

(१२) अप्पाशास्त्री — ज्योतिःशास्त्रज्ञः ।

"ग्रहणम्" इत्याख्यः प्रबन्धः अत्र श्रीअप्पाशास्त्रिणां प्रकाशितः। अत्रहि विन्यस्य श्रुतिवचनानि, उद्धृत्य च ज्यौतिषविषयकग्रन्थवाक्यानि, संतोल्य च आधुनिकं विज्ञानं विचारितं साकल्यतो ग्रहणम्। एतत्खलु ज्योतिःशास्त्रीय-सूक्ष्मेक्षिकाम् अप्पाशास्त्रिणां स्पष्टयति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

### ( १३ ) अप्पाशास्त्री — नाटककारः ।

'नाटकान्तं कवित्वम्' इति हि साहित्यिकाः प्राहुः । अप्पाशास्त्रिभिश्च 'अधर्मविपाकम्' इत्याख्यं नाटकं प्रणीतम् । अस्य च नाटकस्य द्वौ एव अङ्कौ प्रकाशितौ । विषयः पुनः अस्य नामतः एव स्फुटीभवति । अधर्मस्य दुष्परिणामः, धर्मस्य सुखानुबन्धित्वम् अत्र प्रतिपाद्यते । रचना किल नाटकस्यास्य प्रबोधचन्द्रोदयस्येव ।

### (१४) अप्पाशास्त्री — विनोदपटुः ।

विनयशालि त्रिविधविषयकं श्रीअप्पाशास्त्रिणां वैदुष्यं विनोदपटुत्वेन रसरसितम् आसीत् । चन्द्रिकायाम् एतेषां भूयांसो विनोदलेखाः प्रकाशं गताः । अत्र तावत् एक एव कश्चित् विनोदलेखः प्रदीयते । सोऽयम् —

"कदाचित् कोऽपि धूर्तः कस्यचिद् विदुषां पुरस्कर्तुः समीपमागत्य प्राह स्म । भोः परीक्षतां मां भवानिति । स चैनं विद्वांसं मन्वानः समुचित आसन उपवेश्य सविनयमुपरचिताञ्जलिः प्रोवाच । किमधीते भवानिति । धूर्तः — सर्वम् । पुरस्कर्ता — तत्कुत्र विषये भवन्तं परीक्षेय । धूर्तः — तद् भवानेव चिन्तयतु । ( ततः व्याकरण - न्याय - तर्क-सांख्य - योग-मीमांसा - ब्रह्मविद्या - साहित्येति - विषयेषु परिचयविषये पृष्टः धूर्तः 'न, न' इत्युत्तरितवान् । ततश्च — ) पुरस्कर्ता-कतमस्तर्हि वेदोऽधीयते भावेन ? धूर्तः — (क्रोधमभिनीय) किमेवमन्यदेव मां पृच्छसि ? केन नाते प्रोक्तं मया व्याकरणादिकम् अधीतम् इति येन वृथा प्रश्नैरात्मानं मां चायासयसि । पुरस्कर्ता— ननूक्तमेव भावेन सर्वम् अधीय इति । धूर्तः— कथमेतदपि न जानासि । न मया वेदः शास्त्रं वा किमप्यधीतं किन्तु नवीनोऽहं संस्कृतभाषाया अध्येता शब्दरूपावलिं पठन् सर्वशब्दम् अधीय इत्यत एवाब्रवं सर्वम् अधीय इति, भवान् पुनरन्यदेव पृच्छति । "

एतेन विनोदप्रियत्वं तादृश-लेखन-कुशलत्वम् अपि अप्पाशास्त्रिणां स्फुटीभवति ।

एवं नैकविधविषयेषु सुमधुरसरण्या विलिखन्तः श्रीअप्पाशास्त्रिणः 'सिद्धहस्तो लेखकः' इति प्रतिष्ठां प्रपेदिरे । स्वकीयप्रतिज्ञाम् अनुसृत्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लेखनप्रकाशनादि अप्पाशास्त्रिणां वैशिष्टयम् आसीत्। तथापि ग्राहकेभ्यो मूल्यानधिगमात् एव भूयसा चन्द्रिकायाः प्रकाशनम् अन्तरितम्।

१३. पं. कान्ताचार्य-चरितम्।

नैकविधप्रबन्धलेखनेन रसिकमनांसि रञ्जयत्सु श्रीअप्पाशास्त्रिषु वृत्तमेकं दुःखप्रदायि संवृत्तम्। एतेषां किल व्याकरणाचार्याः पं. कान्ताचार्याः शकस्य १८१९ वर्षे भाद्रे दिवंगताः। श्रुतवृत्तैः अप्पाशास्त्रिभिः खिन्नान्तरङ्गैः अपि कर्तव्यमिति श्रीगुरुवर्याणाम् एतेषां जीवनचरितम् आलिखितम्। संक्षिप्तस्तु एतेषां परिचयः प्रदत्तपूर्वः एव। इदानीं पुनः अप्पाशास्त्रिणाम् अमृतमयशब्दैः किमपि आवेद्यते ---

"न जाने संसारः किममृतमयः किं विषमयः॥

सहृदयवाचकाः, यः किल जगति लब्धजन्मा मानुषः स सर्वोऽपि सकृदपि सर्वत्र संचारितदृष्टिर्निपुणं विभाव्योपरितनमेव कवेर्वचनम् उच्चरेत्। ......... अहो विषमता संसारस्य। अहो दुरुल्लङ्घनीयता नियतेः। अहो दुरवगमता समयपरिपाकस्य।

महाशयाः। अद्य किलोपनतमशस्तं दिनं यदेवंविधेनैव केनचित् विषयेणाकृष्टम् अस्मदीयं चेतः। .. ..... एतेन च समयदुर्विपाकेन मन्दोत्साहाः स्मः। किन्तु यस्य महात्मनः प्रसादात् संस्कृत-भाषालेखने लब्धप्रवेशेयं लेखनी तस्यांशतः कृतज्ञताप्रदर्शनम् इदानीम् अत्यन्तम् आवश्यकम् इति कथञ्चिदत्र प्रवर्तामहे।

× × × × ×

महात्मनाऽनेनात्मनो गुणसौरभेण बहूनां किल प्रेमिकाणां सुरभीकृतान्यन्तरङ्गाणि। कोल्हापुरे खल्वयं महात्माऽसाधारणो वैयाकरणः। आदित एव निःसारशरीरोऽसौ महाभागो वत्सरेऽस्मिन (१८१९ शाके) नानाविधैरामयै रभिभूतः परां निःसत्त्वताम् आपेदे। अस्मिश्च वत्सरे श्रावणे मास्ययम् आमातिसारेणाभिभूतो निकामं निःसहतां प्रापत्। परेशस्य तात्कालिकया कृपया स आमयः श्रावणावसाने निवृत्तप्राय इवालक्ष्यत। निःशक्तता तु न विजहावमुं महाभागम्। अथ भाद्रे मासि भगवन्तं गजवदनम् अभ्यर्च्य महाशयोऽयं देशोपशयार्थम् आधुनिकैः समीचीनतयोद्घोष्यमाणं मिरजग्रामं प्रययौ। तत्र चास्यासौ रोगो निवृत्तिं मनागप्यलभ-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मानः सविशेषं वर्धितुम् आरेभे। अथोपस्थिते भाद्रवदि, तृतीयायां तिथौ महात्मायमतिमात्रमग्लायत्। सवितरि गगनमध्यम् उपारूढे च नानादुरितसंकुलं भूलोकम् अपहाय स्वर्गलोकप्रणयितां भेजे। अहो दुर्भाग्यं कोल्हापुरस्य। हा कोल्हापुरास्पदे व्याकरणविद्ये निरवलम्बासि।

भवतु न दैवोपनतं प्रतिनिवर्तत इति कथञ्चिदपि समाधाय सृष्टिस्थितिप्रलयकर्तारं भगवन्तम् ईश्वरं प्रार्थयामः। भगवन् स्वर्लोकेऽप्यनुरूपेण पदेन योजयामुं महाभागम् इति।

**१४. अप्पाशास्त्रिणि दीप्येत मन्ये संस्कृतचन्द्रिका।**

**— श्रीमहेशचन्द्रतर्कचूडामणिः।**

श्रीअप्पाशास्त्रिणां संपादकत्वे सर्वाङ्गीणेन लावण्येनेव सौष्ठवेन समुपेतया चन्द्रिकया विद्वत्प्रकाण्डानां भूयिष्ठाः प्रशंसाः प्राप्ताः। तत्र तदानीन्तनवङ्गीयविद्वच्चक्रवर्तिनां श्रीमहेशचन्द्रतर्कचूडामणिमहाभागानां संस्कृतचन्द्रिकायाः शुभाशंसा यथा —

**"चन्द्रिका रत्नमुकुरे सङ्क्रान्ता संस्कृता भवेत्।**
**अप्पाशास्त्रिणि दीप्येत मन्ये संस्कृतचन्द्रिका॥ १**

**एषा संस्कृतचन्द्रिका नवनवान् भावान् समुद्भावये-**
**दालोकं पथि दर्शनं च वितरेद् भिन्द्यात् तमोऽप्यान्तरम्।**
**पीयूषैर्विबुधान् रसैरनिमिषान् कुर्यादपीत्यादिका**
**आशा नः शतमुत्थिता मनसि याः सिध्यन्तु ताः सांप्रतम्॥ २**

**निष्क्रान्ता जयचन्द्रतो द्विजपतेर्निर्लाञ्छनादुद्यताद्**
**अप्पाशास्त्रि-सरस्वती-रस-सुधा-माधुर्य-धुर्यच्छटा।**
**आशाः पूरयतात् पवित्रचरितैर्विद्वच्चकोराशया**
**नित्यं संस्कृतचन्द्रिका विजयतां निन्दत्यपीन्दुप्रभाम्॥ ३**

इमानि प्रशंसापद्यानि चन्द्रिकायाः पञ्चमवर्षस्य तृतीयेऽङ्के प्रकाशितानि। अनेनैव विज्ञायेत विचक्षणैः चन्द्रिकायाः अप्पाशास्त्रिसंपादनस्य यशस्विता। तत्रत्य-पद्येषु टिप्पन्येका संलिखिता। सेयम् —

"एवं खलु सुबहूनि स्वयमुपनतानि प्रशंसापत्राण्यात्मप्रशंसाभयात् प्रकाशयितुं न शक्यन्ते। अस्य तु कवेर्वागियम् अतीवमनोहरा वाचकानां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मनःप्रीणनोपेक्षितुमनर्हेत्यात्मप्रशंसादोषमङ्गीकृत्यापि प्रकाशिता। अन्ये तु पत्रिकान्तरेष्वेव चन्द्रिकाप्रशस्तिं प्रकाशयन्त्विति।"

अहो विनय-सुषमा वैदुष्यस्य। अनेन किल श्रीअप्पाशास्त्रिणां कीर्तिचन्द्रिकायाः निष्कलङ्कचन्द्रोज्ज्वलत्वं समुद्द्योतितम्।

१५. प्रथमवर्षस्य सिंहावलोकनम्।

यद्यपि श्रीअप्पाशास्त्रिणां संपादकत्वे पञ्चमं वर्षमुद्भासितं संस्कृतचन्द्रिकया तथापि तत्संपादनस्य प्रकाशनस्य च अयम् एतेषां प्रथमः एव वत्सरः। चन्द्रिकायाः मुद्रणं वाईक्षेत्रे मोदवृत्तयन्त्रालये भवति स्म इति प्रोक्तपूर्वम् एतत्। तस्य स्वामी श्रीकाशीनाथशास्त्री लेलेमहोदयः मोदवृत्तं नाम साप्ताहिकं पत्रं महाराष्ट्रभाषया प्रचालयति स्म। तस्य च (१३-५-९७। ३-६-९७ इति अङ्कद्वये प्रकाशितलेखेषु राजकीयैः राजद्रोहारोपः कृतः) दण्डितः च असौ महात्मा। विपन्नः च अयम् इदानीं श्रीअप्पाशास्त्रिणां मित्रवरेण्यः चन्द्रिकायाः मुद्रकः। संवीक्ष्य पुनः व्यसनम् एतस्य अप्पाशास्त्रिणः साहाय्यकम् अस्य यावच्छक्यं प्रत्यजानन् प्रावर्तयन् च तत्र चन्द्रिकाग्राहकान् अपि।

प्रकाशनप्रारम्भे श्रीजयचन्द्रमहाभागनिकटस्था एव ग्राहकतालिका स्वीकृता श्रीअप्पाशास्त्रिभिः। किन्तु यथा किल निवेदितपूर्वं 'संपादकीये निर्वेदे' तथा तादृशः एव अनुभवः पदे पदे अप्पाशास्त्रिणां सत्काराय सिद्धः इव आसीत्। चन्द्रिकाग्राहकेषु भूयांसः एव मूल्यप्रदाने उदासीना आसन्। दृष्ट्वा च पुनः प्रवृत्तिम् एतेषां विज्ञापितम् अप्पाशास्त्रिभिः—

"मूल्यप्रदाने निकामम् उदासते भवन्तः। ......... न तेषां तैः सुबहुलैः अपि साधुवादैः प्रशस्तिपत्रिकाणां वा राशिभिः कार्यं निर्वाहयितुं शक्यम्। सर्वोऽपि ह्यारम्भः प्रथमं द्रव्यम् एवापेक्षते।

तत्र च न वयम् आत्मनो दग्धजठरस्य परिपूर्तये काकिणीमप्येकाम् अभिलषामः। अपि तु केवलम् अस्याः संस्कृतचन्द्रिकायाः संस्कृतभाषाया वा परिचरणायैव। एतदवगच्छन्तोऽपि ग्राहका मूल्यप्रदान उदासत इत्यहो दुर्भाग्यं संस्कृतचन्द्रिकायाः। ......... अपरे तु व्ही. पी. द्वारा प्रेरितामेनां परावर्तयन्तीत्यहो भाग्यम् उदयमानायाश्चन्द्रिकायाः। न जानीमः पुनः कतमोऽयं प्रकार औदार्यस्येति।"

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवंविधाः प्रलापाः प्रायः प्रतिवर्षं द्वित्रवारं कर्तव्या अभवन्। वङ्गीयशासनं चन्द्रिकायाः शतम् अङ्कान् क्रीणाति स्म। सुबहुलैः पुनः ग्राहकैः आरम्भतः मूल्यं नैव दत्तम्। अपि तु व्ही. पी. द्वारा प्रेरितो दशमाङ्कोऽपि तिरस्कृतः। एतेषां व्ही. पी.-परावर्तक-खलानां संख्या प्रायो द्विशतम् आसीत्। अहो निष्करुणत्वं च गर्दभरुचित्वं च खलानाम्। एतादृशानां भूयिष्ठानां नामानि प्रकाशितानि अप्पाशास्त्रिभिः।

अस्मिन् वर्षे चन्द्रिकायाः नियमितप्रकाशनं न जातम्। तत्र निदानं तु संनिपातादिरोगप्रसारः, मुद्रणमन्दिराधिपतीनां संकटम् इत्यादि। प्रतिवत्सरं प्रायो धनाभावात् एव चन्द्रिकायाः अनियमितत्वम् आसीत्।

**१६. निवासस्थान-परिवर्तनं कथानुवाद-योजना च।**

शकस्य १८१९ तमे वर्षे कोल्हापुरे गो-रक्षण-सभायां श्रीअप्पाशास्त्रिभिः 'गोरक्षणचन्द्रिका' इत्याख्यो निबन्धः पठितः। यः खलु उपरिष्टात् चन्द्रिकायाः नवमे खण्डे प्रकाशितः। शकस्य १८२० वर्षीय-चैत्रमासात् आरभ्य अप्पाशास्त्रिणः कोल्हापुरे वरुणतीर्थे भाटकेन गृहं स्वीकृत्य तत्र वासं प्रारभन्त। श्री. तोरो बालशास्त्री ज्यौतिषिकप्रवरः तेषां सुहृद्वर्यः अपि तत्रैव निवसति स्म।

चन्द्रिकायाः १८२० शाकवर्षीय चैत्राङ्के अप्पाशास्त्रिभिः चन्द्रिकाविषयिणी अभिनवा काचित् योजना प्रकटीकृता। 'ग्राहकेषु त्रिशतमहाभागानां यदि संमतं स्यात् तर्हि चन्द्रिकायां प्रतिमासम् अष्टपृष्ठानां वृद्धिर्भवेत् तत्र च क्रमशः 'अरेबियन् नाइट्स' इत्याख्यदीर्घकथायाः संस्कृतानुवादः प्रकाश्येत। अभिलाषुकेभ्यः एव सानुवादः अयम् अङ्कः दीयेत, तैश्च एकादशानकाः प्रतिवर्षम् अधिकाः प्रदातव्याः। अन्यैश्च यथापूर्वम्।" इति। एतद्विषयकम् आङ्ग्लभाषामयम् अपि विज्ञापनम् एकं चन्द्रिकायाः षष्ठवर्षीये प्रथमाङ्के प्रकटीकृतम् एतैः। चन्द्रिकायाः षष्ठवर्षीय-षष्ठाङ्कतः (ऑक्टो. १८९८) मुद्रणं कोल्हापुरे एव समर्थमुद्रणालये प्रारब्धम्। प्रकाशनं तु वरुणतीर्थात् एव।

**१७. कर्णाटके प्रतिवर्षं संचारः।**

श्रीअप्पाशास्त्रिणां कर्णाटकस्थाः सुहृद्वर्याः श्रीलिङ्गेशशर्मपण्डित-श्रीपुणेकरप्रभृतयः चन्द्रिकायाः पाठकाः आसन्। संमुदितैः तैः एतैः स्व-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वनगरं प्रति महोत्सवाद्यर्थम् अप्पाशास्त्रिणः समाहूताः। १८२०शकवर्षतः अप्पाशास्त्रिणां धारवाड-हुबळीप्रदेशेषु प्रातिवार्षिक-प्रस्थानम् आरब्धम्। धारवाड-नगरे 'व्हिक्टोरिया थिएटर्' इत्यत्र प्रतिवर्षं व्याख्यानमालाः आयोज्यन्ते स्म। तासु अप्पाशास्त्रिणां व्याख्यानानि आध्यक्ष्यादि च मुहुर्मुहुः भवति स्म। तत्रत्य-श्रीशङ्कराचार्य-संस्कृत-पाठशालायाः प्रधानाध्यापकाः उप्पिनबेटगेरी-ग्रामवासि-पण्डित श्री. श्रीकृष्णशास्त्रिविद्वद्रत्न-महोदयाः अप्पाशास्त्रिणां स्निग्ध-सुहृद्वर्याः संवृत्ताः। धारवाड-वास-समये एतेषाम् एव सदनम् अप्पाशास्त्रिणः समलङ्कुर्वन्ति स्म। ततश्च तेषामेव परिचयवशात् हुबळचां श्रीशंकराचार्यमहोत्सवार्थम् अपि गच्छन्ति स्म अप्पाशास्त्रिणः। तत्रापि तेषां व्याख्यानादि समायोजनं बभूव। अप्पाशास्त्रिणाम् एकः छात्रः श्रीचिन्तामणिसहस्रबुद्धेमहोदयः कर्णाटकस्थ-नरगुन्द-ग्राम-निवासी आसीत्। ततश्च अप्पाशास्त्रिणां धारवाड-हुबळी-भागः द्वितीयम् इव निवासस्थानम् आसीत्।

## १८. कथाकल्पद्रुम-विज्ञापनम्।

चन्द्रिकायाः षष्ठवर्षीयाष्टमाङ्के (१८२० शाकमार्गे) 'कथा-कल्पद्रुमः' इति आङ्ग्लभाषामयं विज्ञापनं प्रकाशितम्। 'अरेबियन् नाइट्स' इति ग्रन्थस्य संस्कृतानुवादः प्रकाश्येत तच्च पुस्तकं प्रतिमासम् अष्टपृष्ठात्मकम् एकादशानकात्मक-वर्षमूल्येन लभ्येत इति विज्ञापितपूर्वम् एव एतत्। तथापि नाद्यावधि तत् संघटितम्। पूर्वोक्तानुवादपत्राणि चन्द्रिकया सहैव प्रदेयानि इति आसीत् अभिलाषः अप्पाशास्त्रिणाम्। इदानीं तु कथा-विषयकं स्वतन्त्रम् एव मासिक-पत्रकं प्रचालनीयम् इति अप्पाशास्त्रिणः अमन्यन्त। संस्कृत-चन्द्रिका मासिक-पत्रत्वेन प्रकाश्यमाना आसीदेव। तथापि तस्याः यानि २४ पृष्ठानि तानि चन्द्रिकायाः उद्देश्यपूर्तये आवश्यकानि एव आसन्। अत एव कथानुवादाद्यर्थम् अन्यैव पत्रिका प्रकाशनीया इति स्यात् अभिलाषः अप्पाशास्त्रिणाम्। यद्यपि चन्द्रिकायाः संकीर्णविभागे अनुवादोऽपि उद्दिष्टः, तथापि कथा-विभागस्य विस्तरः अपि पाठकानां रुचये अपेक्षितः आसीत्। ततश्च केवल-कथापत्रिका-प्रकाशनस्य संकल्पः कृतः। अत एव चन्द्रिकायाः १८२० वर्षीयमार्गाङ्के प्रकटनपत्रम् एकं प्रकाशितम् एभिः। तत्रत्यः कोऽप्यंशो यथा —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

" We have intended to publish a monthly named ' Katha. Kalp-Drum if 300 subscribers are available. It will contain free translation of ' Arabian nights ' in Sanskrit; with necessary changes suitable to Hindus ......... As to the beauty of the language in it, Sanskrit-Chandrika is itself the proof of it. ......... It is greatly hoped that all the patrons of Sanskrit will pay regard to this and help us in the noble work. "

आङ्ग्लभाषायाः अपरिचितानां कृते अस्य विज्ञापनस्य भावार्थम् अनुवादयितुम् अभिलष्यामः । सोऽयम् —

" कथाकल्पद्रुमः इति-नाम्नीं मासिकीं पत्रिकां प्रकाशयितुं कामयामहे, यदि संपद्येत ग्राहकाणां त्रिशती । अस्यां हि भारतीयानां पद्धतिम् अनुसृत्य आवश्यकपरिवर्तनैः सनाथः ' अरेबियन् नाईट्स ' इति ग्रन्थस्य संस्कृतभाषामयः प्रमुक्तः अनुवादः प्रकाश्येत । अत्रत्य-भाषा-सौष्ठवार्थं संस्कृतचन्द्रिकैव स्वयं निदर्शनम् । सर्वेऽपि संस्कृतप्रणयिनः संमानयेयुः इमं व्यवसायं प्रयच्छेयुः च साहाय्यम् अस्मभ्यं भव्ये अस्मिन् कर्मणि इति बलीयसी नः आशा " इति ।

अयं कथा-कल्पद्रुम-प्रवर्तनात्मकः अप्पाशास्त्रिणां मनोरथः स्वात्मन्येव जीर्णः इति भाति । यतः तत्संबन्धि एतस्मात् विज्ञापनात् अन्यत् किमपि नोपलभ्यते । केवलं तत्रत्यायाः ' Aladin and wonderful lamp ' इत्यस्याः कथायाः एतैः अनुवादः कृतः इत्येव अवगम्यते वार्ता ।

**१९. चन्द्रिकायाः षष्ठखण्डीयं वाङ्मय-वैभवम् ।**

नूनं निर्वर्णितमेव पाठकैः श्रीमताम् अप्पाशास्त्रिणां प्रतिभायाः सर्वङ्कषत्वं, लेख्यविषयाणां वैविध्यम्, भाषायाः सौष्ठवं, प्रतिपादनस्य कौशलं, वाक्सरणेः च रमणीयत्वम् । एतदर्थं हि विस्तारदोषं स्वीकृत्यापि परिचायितः प्राक् कियद्भिः परिच्छेदैः पञ्चमः खण्डः । अयं खलु प्रारम्भभूतः एव श्रीअप्पाशास्त्रिणां संपादकत्वस्य इति । पञ्चम इव षष्ठोऽपि रमणीयः एव । रमणीयतर एव वा । किम् अधिकम् ?

' दिने दिने सा ववृधे शुक्लपक्षे यथा शशी । ' इत्येतद् वर्णनं साधुश्रेष्ठिनः कलावत्याः इव संस्कृतचन्द्रिकायाः अपि शोभते । षष्ठ-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

खण्डारम्भात् प्रत्यङ्कं चन्द्रिकायाः मुखपृष्ठे नवीनोऽयं श्लोकः प्रकाशम् आसादितवान् —

"**प्रबन्धपीयूषरसप्रवर्षिणी निपीयतां संस्कृतचन्द्रिका बुधैः ।**
**जगत्समग्रं सितयन्त्यपीष्यते चकोरकैरेव हि चन्दिरप्रभा ॥**" इति ।

'चकोराः एव हि चन्द्रिकायाः रसज्ञाः । अत एव यैः संस्कृत-चन्द्रिका परित्यक्ता न तैः एतस्याः रसो ज्ञातः इति अरसिकेषु एतेषु न अस्माकं रोषः ।' एवमेतादृशम् अप्पाशास्त्रिणां भाववैशद्यवैशारद्यम् ।

अस्मिन् हि षष्ठे खण्डे पूर्ववत् एव ततोऽपि वा श्रेष्ठतमा अप्पाशास्त्रिणां नैके विषयाः प्रकाशिताः । 'मूर्तिपूजनम्' इति निबन्धः धार्मिक-विषयस्य, भागीरथीमाहात्म्यम्, दधीच्युपाख्यानम् इति निबन्धौ च पौराणिकविषयस्य अत्र प्रकाशिताः । प्राचीनविज्ञानविषयकः 'प्राचीनानां वृष्टिपरिमापनयन्त्रम्' इति निबन्धः, पूर्वतः प्रक्रान्तस्य 'अधर्मविपाकम्' इति नाटकस्यांशः 'वर्णलेखनप्रचारः' इति संशोधनात्मको निबन्धः च षष्ठवर्षीय-चन्द्रिकायाम् अवस्थानं लेभिरे । अत्र पुनः 'श्रीकण्ठपदभूषणम्' इत्याख्यं काव्यं प्रकटीबभूव । श्रीमदप्पय्यदीक्षितः पण्डितराजः श्रीजगन्नाथः, (अपूर्णः) इति द्वौ चरितसमीक्षणात्मकौ प्रबन्धौ विभ्राजितौ । नैकाः ग्रन्थादिसमालोचनाश्च प्रकाशिताः । षष्ठखण्डीयप्रथमाङ्के श्रीअप्पाशास्त्रिभिः स्वप्रणीत-गोकर्ण-महाकाव्यस्यापि समुल्लेखः कृतः । अतः प्रणीतम् एतद्विषयकं काव्यम् एतैः इति प्रतीयते । किन्तु क्वापि प्रकाशनम् एतस्य न नयनानुग्रहं विदधाति । तथापि तत्रैव ( ६।१ ) अयं श्लोकः समुल्लिखितोऽस्ति ।

"**अनेकरत्नद्युतिदीपमालिका निराकृतेऽशेषतमस्यनारतम् ।**
**महेभ-यूथानि चरन्ति कानने नृणामिह ध्वान्तधियं वितन्वते ॥**"

अयमपि सुप्रसन्नः श्लोकः । किमप्यरण्यवर्णनम् इदम् । अत्र पुनर्भ्रान्तिः । दिवाऽपि घननिबिडतया दुष्प्रवेशप्रकाशे कानने तमसः अत्यन्त-निराकरणं तत्रत्यरत्नतेजोभिः जायते इत्युक्त्या उदात्तालङ्कारोऽपि ।

२०. मुग्धाः पाठकाः ।

एवं दिनानुदिनं समुद्दीप्यमानेन श्रीमताम् अप्पाशास्त्रिणां कीर्ति-चन्द्रिकामहसा समावर्जिताः भूयांसः एव रसिकविद्वत्तमाः । विद्वद्गरिष्ठैः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रसिकश्रेष्ठैः स्तुतीनां वृष्टिः कृता । दृश्यतां तावत् अयं प्रशंसावर्षः —

१. संस्कृत-पत्रिकायाः प्रथम-प्रतिष्ठापकस्य विद्योदय-संपादकस्य पं. हृषीकेशशास्त्रिणः —( १८९९ जानेवारी विद्योदये )

"नव-सहकारिसंपादकसंस्पर्शेन प्राचीनाया अप्यस्याः किमप्यभिनवत्वम् अनुभूयत इव । ततश्च सहृदयैश्चन्द्रिकेयं सादरं सेवनीयेत्यस्माकं सनिर्बन्धानुरोधः ।"

२. श्री. देवीचन्द्रशास्त्रिणः — (सं. चं. ६।७)

"निसर्ग-संसर्गमवाप्य भारते सुभारती संस्कृतचन्द्रिका सदा ।
विबोधयन्ती बुधबन्धुवर्गान् विराजतु ज्ञाननिधानपेटिका ॥"

३. श्रीमदाचार्यचक्रवर्तिसंपत्कुमारनरसिंहाचार्यस्य-(चं. ६।६-९)

"सुरुचिरा बहिरावरणारुणा सुविशदा वपुषा च कलापुषा ।
असितवर्णवराङ्कयुतान्तरा हरिरिवैजति संस्कृतचन्द्रिका ॥
अनेकदेशिद्विजराजलेखाः समाः समाहृत्य समेधमाना ।
सभास्विवार्कोऽनति भारतेऽस्मिन् संस्थावती संस्कृतचन्द्रिकेयम् ।

४. श्री. पं. विधुशेखरभट्टाचार्याणाम् — ( चं. ६।७ )

"मासे मासे विलसितदृशोः पद्धताविन्दुबिम्बे
प्राप्य स्पर्शं करकमलजं कस्यचित् संस्कृता हि ।
अस्माकं स्रावयति हृदयं चन्द्रकान्तोपमं या
सैषा नित्यं जयतु रुचिरा चन्द्रिकाऽलं चरन्ती ॥"

२१. चन्द्रिकायाः मण्डनम् ।

संस्कृतचन्द्रिकायाः प्रबन्धेषु यथा भूयांसः एव मुग्धाः लुब्धाः एव आसन् विद्वांसः, तथा केचित् दोषान्वेषणतत्पराः अपि आसन् । तत्र ग्वाल्हेरनिवासी विद्वत्कलासभामन्त्री श्रीशिवरामकृष्णशास्त्री अन्यतमः । अयं तु प्रथमं चन्द्रिकादूषणान्वेषी दोषान् कांश्चित् प्रादुर्भावयामास । तान् च दोषान् अदोषान् समर्थयितुं बद्धपरिकरेषु श्रीअप्पाशास्त्रिषु शिवरामशास्त्री विनम्रः सुहृत् अभवत् । तदेतत् निवेदितम् अप्पाशास्त्रिभिः केरलदेशीय-मानविक्रमनृपाय प्रेषिते पत्रे —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"**मासिकपत्र्यामस्मत्प्रकाशितायां कुतोऽपि दुर्दैवात् ।**
**दोषप्रदानदक्षा अभवन् शिवरामशास्त्रिणः पूर्वम् ॥**
**ते च मया संवीक्ष्य प्रकाशिताः खण्डिताश्च निजपत्र्याम् ।**
**तत्खण्डनोत्तरं मेऽविचलं तैरघटि भूपते !' सख्यम् ॥**" इति ।

एतान् शिवरामशास्त्रिणो दोषान्वेषिव्यवसायान् प्रेक्ष्य केरलीयः पण्डितवर्यः **श्रीकृष्णमाचार्यः** नाम सहृदयासंपादकोऽपि दोषान् समुद्धूल्य चन्द्रिकायाः सौन्दर्यवत्त्वमेव दृढीचकार । एतदपि तत्रैवाभिहितम् —

"**अथ तानवेक्ष्य दोषान् मर्मज्ञः कृष्णमाचार्यः ।**
**धूलीचकार मह्यं न्यवेदयच्चापि तत्कृत्यम् ॥**' इति ।

एवं समुद्भावितानां दोषाणां प्रतिक्षेपं विधाय श्रीमदप्पाशास्त्रिणो निवेदयन्ति —

'तथा च सति तूष्णींभावोऽयमस्माकं नूनं हानिकर इत्याकलय्य च ग्राहकाणां मतिवैपरीत्यं निराकर्तुं दोषान् प्रकाश्य तन्निराकृतिलेखमपि प्रकाशयितुं प्रवृत्ताः स्मः । ............

सहृदयाः पाठकप्रवराः, न खलु वयं केषामपि गुणेषु मनागपि दोषानारोपयितुम् इच्छामो नापि वा कांश्चिदप्यवमन्तुम् अभिलषामः ।

(सं. चं. ६।७–८)"

एवं बहुविधैः उपायैः चन्द्रिकां चारुप्रवरां विधातुम् उत्सहन्ते स्म श्रीअप्पाशास्त्रिणः ।

## २२. संस्कृतचन्द्रिकायाः प्रचार-प्रयासः ।

इत्थं चन्द्रिकायाः संपादनकौशल्येन वशीकृत-रसिकवृन्दाः अपि अप्पाशास्त्रिणः एतस्याः प्रचारे न मनाक् अपि निरवधानाः अभवन् । अपि तु यावच्छक्यं वैयक्तिकपरिचयम् अपि चन्द्रिकायाः एव कृते संपादयामासुः । ग्वाल्हेरनगरवासिनः विद्वत्कलासभामन्त्रिणः **श्रीशिवरामशास्त्रि**महाभागाः अप्पाशास्त्रिणां सुहृद्वर्याः अभवन् इति निवेदितम् एव पूर्वम् । तैश्च केरलदेशीयस्य **श्रीमानविक्रमाख्यस्य** भूपस्य संस्कृत-प्रियत्वम् अप्पाशास्त्रिभ्यो निवेदितम् । ततश्च १८२० शाकवर्षीय-फाल्गुन-सुदि प्रतिपदायां श्रीअप्पाशास्त्रिभिः केरलीयमानविक्रमभूपाय प्रथमं पत्रं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रहितम्। तदारभ्य बहुवर्षाणि यावत् पण्डितनराधिपयोः एतयोः पत्रापत्रि प्रावर्तत्। अस्मिन् प्रथमे पत्रे चन्द्रिकाम् उद्दिश्य यत् लिखितं तदेतत् पाठकेभ्यः समुपहर्तुम् इच्छामः, येन ज्ञायेत श्रीमदप्पाशास्त्रिणां विनयित्वं सरलत्वं, कृतज्ञत्वं, समुद्यमशीलत्वं चेति। तद् यथा —

'मयाऽप्यत्र काचित् संस्कृतचन्द्रिका नाम संस्कृतभाषामयी मासिकपत्रिका प्रतिमासं प्रकाश्यते। यस्यां नानाविषयकाः प्रबन्धाः खण्डकाव्यानि च प्रकाश्यन्ते। तस्याश्चैतन्मासिकी सङ्ख्याद्य श्रीमद्भ्यः प्रेर्यते। विलोक्य तां निवेद्यतां चन्द्रिकायाः समीचीनत्वं तदितरत्वं वा। एषा किल प्रथमं कलकत्तानगरे **श्रीजयचन्द्रसिद्धान्तभूषणभट्टाचार्यनाम्ना** पण्डितप्रकाण्डेन प्राकाश्यत। आदितः प्रभृति तस्याः पाठकोऽहम् आसम्। संपादकेन श्रीजयचन्द्रमहाशयेन च चतुर्थवत्सरे सा मह्यं प्रादायि। मयापि पञ्चमवत्सरात् प्रभृत्यसावत्रैव संपाद्यते प्रकाश्यते च।

कृतज्ञतामात्रम् एतद् यदस्यां संपादकस्थाने श्रीजयचन्द्रशर्मण एव नाम निर्दिश्यते। ........

यद्यसौ रोचेत श्रीमतां मनसे तदा ऐषमस्तनीः सर्वा अपि संख्याः प्रेषयिष्यामि। ......... भवद्देशे नास्त्येवास्याः प्रचारः। तन्निवेद्यतां कृपया तत्रास्याः प्रचाराय को वोद्यमो मयास्थेय इति। एतेन च शक्यम् अवगन्तुं पाठकैः कियान् विनयः श्रीअप्पाशास्त्रिणाम् इति। वस्तुतस्तु भूयोभिरेव रसिकपण्डितोत्तंसैः प्रशसितपूर्वा एव चन्द्रिकेयम् अप्पाशास्त्रिणाम्। एवं च सति 'भूयोभिः एव प्रशंसिता ममेयं पत्रिका मत्प्रणीताः वा ते ते प्रबन्धाः नैकविधाः' इति भूयांसः आत्मानम् एव श्लाघन्ते। अनुष्ठितस्तु तादृशो व्यापारः अप्पाशास्त्रिणां यथार्थत्वम् एव अकथयिष्यत् इत्यत्र नैव सन्देहः। तथापि प्रत्यनुयुक्तम् एव एतैः 'निवेद्यतां चन्द्रिकायाः समीचीनत्वं तदितरत्वं वा' इति। अहो वैदुष्य-सामानाधिकरण्य-दुर्लभं विनयसारत्वं श्रीअप्पाशास्त्रिणाम्।

केरलीयभूपेन **श्रीमान्विक्रमेण** सह कृतोऽयं पत्रव्यवहारः न केवलं भूपम् एव, अपि तु अन्यान् अपि बहूनेव केरलीयान् पण्डितान् वशीचकार। केरलेषु पट्टाम्बिनगरे **विज्ञानचिन्तामणिः** इति संस्कृतपत्रिका प्रकाश्यमाना आसीत्। तस्याः संपादकः महाविद्वान् **श्रीपुन्नःशेरिनम्पि-नीलकण्ठ-**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शास्त्री अप्पाशास्त्रिणां सौहार्दभाजनं बभूव। तेनैव च सह अभिनवभट्ट-बाणाद्युपाधिमन्तः चक्रवर्तिनः **श्रीकृष्णमाचार्याः**, विद्यानिधि-**श्रीकृष्णमाचार्याः** (सहृदया-संपादकाः) इत्यादयः सुबहुला एव केरलदेशीयाः मैत्रकक्षायां समागताः। बेळगांवनिवासिनः पं. **अण्णाशास्त्रिणः अर्जुनवाडकरोपाख्याः** अपि सुहृत्-श्रेष्ठाः समभूवन्। अन्ये च ये ये नाम परिचयं प्राप्नुवन् तेषां तेषां चन्द्रिकाप्रचारार्थम् एव सहयोगः प्रार्थितः श्रीअप्पाशास्त्रिभिः। एवम् एतेषां संस्कृतचन्द्रिका एव जीवितस्य परमं लक्ष्यं बभूव। येन किल चन्द्रिकाकारत्वेन सुप्रथिता अभवन् अप्पाशास्त्रिणः।

**२३. हन्त! मण्डितः संस्कृतभारत्याः संसारः।**

एवं नानाविध-प्रबन्ध-प्रणयनेन, संपादनवैचक्षण्येन, प्रचार-चातुर्येण, वैदुष्येण विनयेन च श्रीअप्पाशास्त्रिणः संस्कृत-वृत्त-पत्र-सृष्टेः आधुनिक-संस्कृत-विश्वस्य च असाधारणः अलंकारः इव अभूवन्। नानाविधविषयेषु गद्ये च पद्ये च लेखनं कुर्वद्भिः अप्पाशास्त्रिभिः अचिरात् एव संपादितं सुमहत् यशः। यस्यैव प्रभावात् सपद्येव समुपनतानि बहूनि एव प्रशंसा-पत्राणि। कानिचित् च चन्द्रिकायाः अङ्केषु मुद्रितानि अपि।

शकस्य १८१९–२० वर्षयोः चन्द्रिकायाः पञ्चम-षष्ठ-खण्डयोः प्रकाशितेषु प्रबन्धेषु दृश्यते श्रीअप्पाशास्त्रिणां भाषा-प्रभुत्वस्य बहुमुखत्वम्। अल्पिष्ठे एव समये एतैः कवित्वं, नाटक-प्रणेतृत्वम्, संशोधकत्वं, समीक्षकत्वं, कथाकुशलत्वं, शास्त्रीयप्रबन्धकत्वम् इत्यादीनि स्वकीयवैशिष्ट्यानि निर्दर्शितानि। एषां लेखनेषु स्वधर्मे स्वदेशे च प्रगाढश्रद्धासमेतः स्वाभिमानः दृग्गोचरो बभूव। एतेन सह पत्रिका-प्रचार-कुशलत्वम् अपि प्रकटीभूतम्। प्रबन्धसंकलने विवेचकत्वं, मार्गदर्शकत्वं चेत्यादिगुणगणैः सह मधुरप्रकृतित्वम् अपि श्रीअप्पाशास्त्रिणां पण्डितपाठकरसिकानां हृदये निखातम् इव अभूत्। संस्कृतप्रचारे नूतन-प्रबन्ध-विनिर्माणे च पटिष्ठम् एतं श्रीअप्पाशास्त्रिसंज्ञकं विद्वांसम् अवाप्य भारतीयाः संस्कृतज्ञाः सानन्दं साभिमानं च समान्दोलित-मूर्धानः समभवन्। विशेषतश्च वङ्गीयाः तत्रापि श्रीजयचन्द्रशर्मणः स्वस्थापितायाः चन्द्रिकायाः समुत्कर्षे यशस्वितया प्रयतमानेषु श्रीअप्पाशास्त्रिषु दृढम् एव प्रणयभावम् आदधुः।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**२४. वङ्गीयविबुधमण्डल्यां 'विद्यावाचस्पतिः ।'**

शकस्य १८२१ वर्षे चैत्रे मासि वङ्गेषु संस्कृतपण्डितानां संमेलनम् एकम् आयोजितम् आसीत् । संमेलनार्थं भूयांसः समुपस्थिताः विद्वांसः । पण्डितप्रवरैः श्रीजयचन्द्रशर्म-सिद्धान्तभूषणभट्टाचार्यैः स्वकीय-सुहृद्वर्येभ्यः श्रीअप्पाशास्त्रिभ्योऽपि पण्डितपरिषदि समुपस्थानार्थं निमन्त्रणं प्रदत्तम् । स्वीकृत्य पुनः एतत् समुचितेऽवसरे कृतं पदं श्रीअप्पाशास्त्रिभिः कलकत्तानगरे । प्रार्थनाम् अङ्गीकृत्य समागताः श्रीअप्पाशास्त्रिणः इति नासीत् श्रीजयचन्द्रादि-पण्डितवर्याणां हर्षस्य अवसानं नाम । ततश्च पण्डितसभायाः साफल्यम् एव मन्वानाः पण्डिताः अप्पाशास्त्रिमहाभागान् सुतमां बहु मेनिरे ।

एतत्समये च संघटिता काचित् कथा वृद्धैः आवेद्यते । सेयम्—

कलिकातायां श्रीमदप्पाशास्त्रिणाम् अभ्यवहारविषयकः प्रश्नः समजनि । तदानीं तु 'न वयं द्राविडाः गौडान्नम् उपभुञ्ज्महे' इति उक्तवतां तेषां भोजनसामग्री तण्डुलादिपदार्थरूपेण संपन्ना । तेषु किल पदार्थेषु वङ्गीयाचारानुसारेण केचित् मत्स्याः अपि आसन् । एतैः उक्तम्—'न वयं मत्स्याहारं कुर्मः । शास्त्रनिषिद्धत्वात्' इति । तदा च वङ्गीयाः ऊचुः—'अत्र नास्ति कोऽपि निस्तारः । शास्त्रनिषिद्धत्वेऽपि मत्स्यभक्षणे विद्यते प्रमाणं सांप्रदायिकः आचारः । तत् को दोषः ?' इति । तदा श्रीमदप्पाशास्त्रिणः अवोचन्—'विद्यते मत्स्याहारपरंपरा केषुचिद् गौडेषु । नास्मत्प्रदेशे' इति । वङ्गीयाः अवदन्—'तर्हि युष्माकं प्रदेशे (महाराष्ट्रेषु) ब्राह्मणैः लशुनपलाण्डूनां भक्षणं क्रियते तत् अविरुद्धं वा धर्मशास्त्रस्य ?" अप्पाशास्त्रिणः अवदन्—'नहि नहि । विरुद्धमेव । नाम शास्त्रनिषिद्धमेव लशुनाद्यशनम् । तथापि देशाचारवैशिष्टयम् इदं यत् शास्त्रनिषिद्धं लशुन-पलाण्ड्वाहारं विदधानाः अपि वयं मत्स्याहारं न कुर्मः । मत्स्यान् अभ्यवहरद्भिः अपि युष्माभिः पलाण्ड्वाद्यशनं न कर्तव्यम् इति ।" अस्तु नामैतत् । अनेन पुनः वाचोयुक्ति-पाटवेन श्रीमदप्पाशास्त्रिणां वाग्मित्वं सिद्धमेव अभूत् ।

अद्य यावत् अप्पाशास्त्रिणां केवलं नामैव प्रबन्धादिकमेव च पठितम् आसीत् जयचन्द्रप्रभृतिभिः । वङ्गप्रभवायाः संस्कृतचन्द्रिकायाः महाराष्ट्रेषु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एव समुल्लासनं प्रतिविधातुं वाचस्पतिः इव समर्थाः श्रीअप्पाशास्त्रिणः इत्येव तावत् विदितम् आसीत् एतेषाम् । अत एव दृशोः अमृतीकर्तव्यः तावत् विदुषां धुरीणः अयम् इति स्वाभाविकी एव बभूव इयं श्रीजयचन्द्रप्रभृतीनाम् अभिलाषा । तत एव च पूरयितुम् एनां परिषन्निमन्त्रणं निमित्तभूतं समुपलब्धम् एतैः । अप्पाशास्त्रिणां च संदर्शनेन समाहितम् एव समभूत् अन्तरङ्गं श्रीजयचन्द्रशर्मणाम् । तादृशम् एव ततोऽपि वा समधिकम् आनन्दसन्दोहम् अविन्दन् अप्पाशास्त्रिणः । नूनं चन्द्रिकाजनयितॄणां संवर्धयितॄणां च एषः संगमः सकलेन्द्रियनन्दनः मिथः समुल्लासकः समभवत् । वाचाम् अगोचरः पुनः अयं व्यतिकरः ।

श्रीअप्पाशास्त्रिणां समागमनेन कोऽपि विशिष्टः संमोदः संमेलनायोजकैः प्राप्तः इति प्राप्तरूपम् एतत् । अखिल-भारतीय-प्रतिष्ठायाः संस्कृतचन्द्रिकायाः संपादन-प्रकाशन-निपुणः पण्डितप्रवरः परिषदो गौरवस्थानम् एव इति । प्राप्तिः पुनः अप्पाशास्त्रिणां यथा विबुधानां संमोदम् अजनयत्, तथैव विस्मयमयं कमपि वेपथुम् अपि समुत्पादयामास । तत् एवम्—

संकल्पित-संस्कृत-पण्डित-परिषदः भाषणादि-कार्यकलापः सर्वः अपि वङ्गीयभाषामयः हिन्दीभाषामयः च आसीत् । न पुनः अत्र क्वापि समदृश्यत संस्कृतभाषणस्य अवस्थानम् । इयं स्थितिः अप्पाशास्त्रिणां मनसि कामपि व्याकुलतां विचिकित्सां च समुद्भावयामास । तदा किल श्रीमदप्पाशास्त्रिभिः 'किमिति संस्कृतभाषया नोपन्यस्यते ?' इति पृष्टम् । प्रश्नोऽयं भूयसामेव अन्तरङ्गे नानाविधान् कल्लोलान् उत्थापयामास । न हि तदवधि क्वापि एतादृशसभायां केवलसंस्कृतभाषयैव परिषन्निर्वहणं संवृत्तम् आसीत् । अतश्च सुबहुकालं संस्कृतभाषयैव निखिलोऽपि व्यवहारः कर्तव्यः इत्ययं विचारः प्रतिप्रश्नम् उद्भावयाञ्चकार—'कथं नाम शक्यम् एतत् ?' इति । एतदेव अभिप्रेत्य कैश्चित् महत्तरैः विज्ञापिताः श्रीअप्पाशास्त्रिणः—'श्रीमद्भिः एव समुपक्रम्यतां संस्कृतोपन्यासः' इति ।

विज्ञापनेयं भगवत्याः सुरसरस्वत्याः आदेशः एव इति मन्यमानानां महानेव प्रादुर्बभूव समुत्साहः मनसि श्रीअप्पाशास्त्रिणाम् । समुपस्थिताः ते ते भूयिष्ठाः एव विद्वत्प्रकाण्डाः अप्पाशास्त्रिणाम् अत्र प्रतिक्रियां निरी-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्षन्ते स्म । परिषदः पुनः उपक्रमः अप्पाशास्त्रिणां संस्कृतभाषणेनैव संजातः । यत् पुनः कुतूहलं श्रोतॄणां चेतःसु समुदितम् आसीत् । तत्तु सकलमेव कर्णकुहरेषु एव कृतदृढावस्थानम् अभूत् । तदानीं श्रीमदप्पाशास्त्रिणां वदनारविन्दतः निरर्गलं प्रवहत् नानाविधतन्त्रसारगर्भं वक्तृत्वपीयूषं पिबताम् एतेषां तृप्तिः नासीत् । यत्सत्यं चित्रार्पित इवालिखित एव समभवत् सर्वतः सभारङ्गः ।

प्रथितयशाः सिद्धहस्तो लेखकः इति प्रथममेव संस्कृत-विद्वत्सु संमाननाभाजनम् आसन् अप्पाशास्त्रिणः । इदानीं पुनः यथा लेखनं तथैव सरसं वक्तृत्वम् अपि तिरस्कृत-वाचस्पति-वाक्प्रसरम् इव अन्वभूवन् पण्डिताः । यत्सत्यं वाचस्पति एवायम् इति अमन्यन्त भूयिष्ठाः एव । अतश्च विविध-सरस-लेखनेन चन्द्रिका-संपादन-नैपुण्येन च समावर्जितैः, पुनः मध्येसभं गीर्वाणवाणी-सुधारसं निपाय विस्मय-मुग्धैः समान्दोलित-मूर्धभिः एतैः विद्वन्मूर्धन्यैः सपदि एव '**विद्यावाचस्पतिः**' इति उपाधिः समर्पितः श्रीअप्पाशास्त्रिभ्यः । एवं वङ्गीयविबुधमण्डलीं सरसवाग्मितया संतर्प्य लब्ध्वा च तस्याः सकाशात् महान्तम् एव संमानं श्रीमतः अप्पाशास्त्रिणः गौरवस्य परां काष्ठाम् अन्वभवन् । न केवलं विद्यावाचस्पतिमानपत्रम् एव प्रायच्छत् वङ्गीय-विद्वन्निकुरम्बः, अपि तु और्णं महावस्त्रं, सुवर्णपदकं, रजतमयानि कमण्डलु-दर्वी-पानपात्राणि इति एवंविधम् अपि मानार्हपारितोषिकं श्रीअप्पाशास्त्रिभ्यः समर्पितवान् असौ । अप्पाशास्त्रिणः च ताम् एतां सत्कारविभूतिं स्वीकृत्य कोल्हापुरं प्रतस्थिरे । आगत्य च अत्र सप्तमवर्षीयं चन्द्रिकायाः प्रथमं वैशाखाङ्कं ( १८२१ तम शक-वर्षस्य ) ग्राहकेभ्यः प्रेषितवन्तः ।

**२५. कोल्हापुरे विद्यावाचस्पतिसत्कारः ।**

अप्पाशास्त्रिणां विनम्रः स्वभावः आत्मप्रशंसां नैव सहते स्म । अतः खलु न प्रकाशितम् एतैः वङ्गीयैः कृतं संमाननम् । किन्तु कोणेऽपि समाच्छाद्य निगूढं स्थापिता कस्तूरी न शक्नोति गूहितुं सौरभम् आत्मीयम् । तत् नैतत् आश्चर्यं वङ्गेषु समुद्भूतः सत्कारः शीघ्रमेव कोल्हापुरीय-महत्तराणां श्रुतिपथातिथिः बभूव इति । प्रथम् एव अप्पाशास्त्रिणां गुणगणेन प्रीताः कोल्हापुरीयविद्वांसः सत्कार-वार्ताम् एनाम् आकर्ण्य परां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुदम् अविन्दन् । ततश्च सुप्रीतैः अधिकारिभिः विद्वद्भिः च सभाम् एकां समायोज्य संकल्पितः श्रीमदप्पाशास्त्रिणां सत्कारसमारोहः। सत्कार-समारम्भः च अयं श्रीमत्-पन्तामात्य-बावडेकराणां जामातुः श्रीराजोपाध्ये-महाभागस्य प्रासादे समभूत् । कोल्हापुरीयन्यायाधीशाः **श्रीविश्वनाथराव-गोखले** महाभागाः, पण्डितप्रवराः **श्रीगणेशशास्त्रि-ढकडीकर**महोदयाः, अध्यापकर-**खुपेरकरबाळशास्त्रि**-प्रभृतयः, अन्ये च कोल्हापुर-नगरस्थाः प्रतिष्ठिताः अस्मिन् महति समारोहे समुपस्थिताः आसन् । एवं च कोल्हापुरीय-विद्वद्-गुणि-वृन्द-मण्डितायाम् अस्यां महीयस्यां परिषदि १८२१ शकवर्षस्य, वैशाखसुदिद्वादश्यां श्रीअप्पाशास्त्रिमहाभागानां महान् सत्कारः संजातः। सभास्थमहत्तरैः वङ्गीयविद्वद्भिः समर्पितानि रजतमय-पात्राणि, महावस्त्रं, सुवर्णपदकं, विद्यावाचस्पति-मानपत्रं च एतत् सकलम् अपि पुनरपि महता गौरवेण समादरेण च अप्पाशास्त्रिभ्यः समुप-हारीकृतम् । राशिवडेकर श्रीअप्पाशास्त्रिणः च इतःपरं 'विद्यावाचस्पतिः' इति पदेनैव सर्वत्र प्रथिताः अभूवन् । प्रतिवृत्तं चैतस्य विद्यावाचस्पति-पदप्राप्तेः संस्कृतचन्द्रिकायाः सप्तमवर्षस्य द्वितीये (ज्येष्ठमासीये) अङ्के प्रकाशितम् । तद्यथा—

"सादरं स्वीकारः ।

संस्कृतचन्द्रिकागतान् प्रबन्धानवलोक्य प्रीतैस्तत्रभवद्भिः कैश्चिद् वङ्ग-देशनिवासिभिर्महामहोपाध्यायाद्युपाधि-विराजितैः पण्डितप्रवरैराधि-करणिकैश्च संस्कृतचन्द्रिकायाः सहकारिसंपादकाय सबहुमानं विद्यावाच-स्पतिरित्युपाधिः प्रादायि । स च कोल्हापुरवर्तिभिरपि आधिकरणिकैः पण्डितैश्च सप्रमोदं सभामाहूय पुरस्कारपुरःसरं पुनस्तस्मै व्यतारि।"

**२६. अभ्युदयो विनिवेद्यः सखिभ्यः ।**

प्रोक्तपूर्वमेव एतत् यत् केरलीयः **मानविक्रमाख्यः** नृपवर्यः अप्पा-शास्त्रिभिः पत्रद्वारा सौहार्दभाजनं कृतः इति । तेन च सह भूयान् पत्रव्यवहारः संवृत्तः अप्पाशास्त्रिणाम् । गद्यमयानि पद्यमयानि च एतस्मै प्रहितानि पत्राणि रसवत्तराणि वर्तन्ते । १८२१ शकवर्षस्य ज्येष्ठसुदि-पूर्णिमायां नृपवर्याय पद्यमयम् एकं पत्रम् अप्पाशास्त्रिभिः विलिखितम् । तस्मिन् पत्रे नृप-मित्र-मणये सत्कारवृत्तान्तः अयं निवेदितः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स यथा —

" प्रेष्ठवराभिन्नहृदे भवते विनिवेदयामि किमपीदम् ।
कलिकातानगरगतैर्व्यधायि यद्बुधवरैः कृत्यम् ॥
ते चन्द्रिकां मदीयाम् अवलोक्य प्रीतमानसा विबुधाः ।
' विद्यावाचस्पति'रिति मह्यमुपाधिं सखे व्यतरन् ॥
सत्पत्रप्रतिरूपं प्रहीयते श्रीमतेऽद्य सुहृदे ते ।
अभ्युदयो विनिवेद्यः सखिभ्य इति जानता वचनम् ॥ "

इति । एतेन विद्यावाचस्पति-मानपत्र-प्रतिलिपिः नृपवर्याय प्रेषिता अप्पाशास्त्रिभिः इति प्रतीयते । अयं च मानविक्रमनृपः न केवलं संस्कृतज्ञातॄणां धुर्यः अपि तु सरसकविः अपि आसीत् । प्रेषितानि खलु एतेन स्वोपज्ञकवितापुस्तकानि अप्पाशास्त्रिभ्यः ।

इदमेव श्रीअप्पाशास्त्रिभिः **मानविक्रमाय** प्रेषितं पत्रं वीक्ष्य श्री. **आर्. व्ही. कृष्णमाचार्यैः** स्वीये संस्कृत-जर्नल् ( १८९९ ई. पट्टाम्बि) इत्याख्ये पत्रे प्रशंसिताः अप्पाशास्त्रिणः —

" अचिरप्रेषितं च श्रीकविराजकुमारेभ्यो भवदीयं पत्रमवालोकिषम् । यत्र हि लिखितः शब्दः पद्यरूपतामश्नुते । अहो निरर्गला भवतां कविता । यदीदृशे विषये प्रगल्भमानापि पद्यमयी भवतां वाणी न केवलं मां न वा परं तान् कविमणीन् श्रीकविराजकुमारान् परमपरानपि पश्यतः सर्वानपि चमत्करोति । " इति ।

## २७. विद्यावाचस्पतेर्वाचस्पत्यस्य वृद्धिलाभः ।

अभूतपूर्वेण अनेन सत्कारेण सरसप्रबन्धैः वशीकृतपूर्वम् अपि संस्कृत विश्वं श्रीमदप्पाशास्त्रिभ्यः सविशेषं स्पृहयामास । श्रीमदप्पाशास्त्रिणाम् अपि लेखनी कृतकृत्यताम् अनुभवन्ती अपि मनाक् अपि नैव विश्रान्तिम् अङ्गीचकार । इयं पुनः शतगुणोत्साहा पूर्ववत् एव ततोऽपि वा समधिकवैविध्यमाधुर्यरसमयान् प्रबन्धान् प्रस्रवन्ती नितान्तम् आवघ्नात् स्वान्तं वाचकानाम् । परिचितमेव तावत् वैविध्यं श्रीअप्पाशास्त्रिणां वाङ्मयस्य । ततःपरस्तात् वैयक्तिक-पत्र-लेखन-पटुत्वमपि पाठकैः विदितमेव स्यात् अप्पाशास्त्रिणाम् । विद्यावाचस्पतित्व-संप्राप्तेः परम् अप्पाशास्त्रिणां वाङ्मयसंसारः यथा सुसमृद्धः बभूव तथा सुहृद्वृन्दः अपि समधिकामे

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वृद्धिं प्राप्नोत् । नैकविधविषयलेखनतर्षः श्रीमदप्पाशास्त्रिणां संस्कृतचन्द्रिकया यद्यपि प्रशान्तः भवति स्म, तथापि रसिकवाचकानाम् अनुरागेण साकम् अयमपि पराम् एव काष्ठां प्राप्तवान् । संस्कृतचन्द्रिका अप्पाशास्त्रिणां प्रबन्ध-प्रणयन-तर्ष-शमनाय यथा किमपि प्राभवत् तथा संस्कृत-पत्रिका-विश्वस्य समुज्ज्वलनाय च पृथु-यशस्-संपादनाय च निजनाम्नः अमरत्वाय च । यतः खलु अद्यतनः सर्वोऽपि संस्कृतसंसारः अप्पाशास्त्रिणां वाङ्मयी मूर्तिः आदर्शस्य प्रतिष्ठा एव इति प्रतिपद्यते । कथम् एतत् ? कीदृशं चैतत् ? किं पुनः एतद् इत्यादि अशेषम् अपि निर्वर्ण्यताम् अग्रेतने उत्तम-पर्वणि संस्कृत-स्वान्तःप्रवरैः ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## उत्तमपर्व ।

### १. श्रीअप्पाशर्मा विद्यावाचस्पतिः।

"विद्यावाचस्पतिः" इति उपाधिलाभोत्तरम् संपादकः, प्रकाशकः, कविः, लेखकः इति सर्वविधः अपि राशिवडेकरः श्रीअप्पाशास्त्री "अप्पाशर्मा विद्यावाचस्पतिः" इति प्रथितः अभवत् । वङ्गेषु सत्कृतानाम् अप्पाशास्त्रिणां प्राक्तनं सुहृन्मण्डलं स्निग्धतमम् अभूत् । विशेषतश्च ऋतुकोटि-ग्राम-वास्तव्यस्य पण्डितलिङ्गेशशर्मणः सौहार्दं प्रगाढम् अजायत । अयं किल महात्मा धारवाड-मण्डलान्तर्भूतस्य 'कुर्तकोटि' इति ग्रामस्य अधिकारी सन् अपि न्याये व्याकरणे अद्वैत-वेदान्ते आङ्ग्लभाषायां च परं निपुणः आसीत् । अनेन सह असकृत्पत्रप्रेषणेन प्रत्यक्षदर्शनेन परस्परनिवासस्थान-सान्निध्येन च सप्रणय-व्यवहारः श्रीअप्पाशास्त्रिणां प्रावर्तत । **मानविक्रमेभ्यः** प्रेषिते पत्रे पं. **लिङ्गेशशर्मणां** भूयसी प्रशंसा कृता अप्पाशास्त्रिभिः । पं. **लिङ्गेशशर्माणः** एव पश्चात् **डॉ. कुर्तकोटिशंकराचार्या** इति प्रसिद्धाः अभवन् ।

### २. विविधलिपीनां नैकभाषाणां च आभासः ।

अप्पाशास्त्रिणां जन्मभाषा महाराष्ट्री, तस्याश्च लिपिद्वयं बालबोध-मोडीत्याख्यं बाल्ये एव अभ्यस्तम् एतैः । संस्कृतभाषायां प्रभुत्वं तु वादातीतम् एव । वयसः आसन्नविंशे वर्षे आङ्ग्लभाषाभ्यासः प्रक्रान्तः । तत्रत्य-काव्यानां समालोचनैतिह्यप्रबन्धानां च पठनम् एभिः कृतम् । वङ्गवासिनां सहवासेन वङ्गीयलिपेस्तद्भाषायाश्च परिचयः समधिगतः एतैः । वङ्गीय-वाङ्मये बङ्किमचन्द्रमहाभागेन प्रणीतानाम् उपन्यासानां वाचनं विहितम् । तैलङ्ग-लिपिः अपि समभ्यस्ता अप्पाशास्त्रिभिः । १८२१ शकवर्षस्य चैत्रे मासि **मानविक्रमं** प्रति विलिखिते पत्रे अप्पा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शास्त्रिभिः 'अवैमि तैलङ्गलिपि सवङ्गजाम्' इति प्रोक्तम् । ततः पुनः **मानविक्रम**-नृपेण कानिचित् पुस्तकानि प्रहितानि । तानि केरलीयलिपि-मयानि आसन् । अतः तानि पठितुम् अशक्नुवानैः अप्पाशास्त्रिभिः प्रार्थित केरलीयो नृपः—

**भवद्देशीयवर्णानामस्ति चेत् कोऽपि बोधकः ।**
**प्रबन्धः प्रेष्यतां येन तज्ज्ञाने प्रभवाम्यहम् ॥**

अहो बहुलिपि-ज्ञाने नैकभाषा-ज्ञाने च अभिरुचिः । **मानविक्रम**-साहाय्येन च केरलीयलिपिः अपि आमसात्कृता विद्यावाचस्पतिभिः । हिन्दीभाषा तु महाराष्ट्र्या लिपिदृष्ट्याऽपि समानैव इति सुलभतयैव सेयं विज्ञाता तैः । तामिल-लिपेः तद्भाषायाः अपि विद्यावाचस्पतिभिः परिचयः कृतः । आसु लिपिषु संस्कृतभाषामय-वाङ्मयस्यैव प्रायः पठनम् आसीत् अप्पाशास्त्रिणाम् । महाराष्ट्री-वङ्गीय-हिन्दीभाषासु आङ्ग्ल-भाषायां च सर्वविध-विषयक-वाङ्मयस्य परीशीलनं कृतम् एतैः । अवगत-लिपि-भाषा-पत्रिकाणां तु पठनं नियमेन कुर्वन्ति स्म अप्पाशास्त्रिणः । एवं विषय-वैविध्येन सह भाषा-वैविध्यं तेन च सह लिपि-वैविध्यम् अपि विद्यावाचस्पतिषु विद्योतते स्म ।

### ३. कोल्हापुरे ग्रन्थिज्वर इति राशिवडेग्रामे निवासः ।

सर्वथा चन्द्रिकासौन्दर्यसंवर्धननिमग्नानाम् अप्पाशास्त्रिणाम् अकाण्डे एव कोल्हापुरत्यागस्य संकटं प्राप्तम् । तत्र हि १८२१ शकवर्षीय भाद्रपदमासासन्नकालो ग्रन्थिज्वरः (प्लेग) समुद्भूतः । अत एव परित्यज्य नगरं लोकाः वनप्रायदेशे न्यवसन् । अप्पाशास्त्रिणः स्वजन्मस्थानं राशिवडेग्रामं प्रति आगताः । चन्द्रिकाकार्यालयश्च तत्रैव स्थापितः एतैः । तत एव च सर्वोऽपि पत्रव्यवहारः प्रारब्धः ।

राशिवडेग्रामे सप्ताहस्य द्विः पत्राणां समागमः भवति स्म । पत्र-प्रापणभृत्यः कोल्हापुरात् सोमवारे गुरुवारे च प्रस्थाय राशिवडे-ग्रामे भौमवारे शुक्रवासरे च समुपस्थितः भवति स्म । आगत्य च प्रथमं पत्रवाहकः अप्पाशास्त्रिणाम् एव सन्निधौ गच्छति स्म ।

राशिवडेग्रामेऽपि ग्रन्थिज्वरः प्रादुर्भूतः । अतोऽप्पाशास्त्रिणः ग्रामात्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बहिः नदीतटाके वसतिम् अकुर्वन् । तदेतत् १८२१ वर्षस्य फाल्गुने मासि पं. लिङ्गेशशर्मणे पत्रद्वारा निवेदितम् एतैः—

'कोल्हापुरे समुद्भूतो ग्रन्थिज्वर इति विहाय तन्नगरमिहोपयातानाम् अस्माकमितः प्रस्थानम् अधुना प्रसक्तम् । दुर्भाग्यवशादिदानीमत्रापि समुद्भूतः स आमयः 'प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः' इत्यभियुक्तोक्तं स्मारयति । अत इदानीं ध्रुवाङ्गनाम्नि सरित्तीरे निर्माय कुटीरं तत्रैव वसामः । कोल्हापुरे सम्प्रति यद्यपि प्रशान्तप्रायोऽसौ रोगः तथापि नगरं न प्रविष्टा लोकाः । नाद्यापि सद्यो निर्जले तस्मिन् नगरे प्रवेशो युक्तः । अतोऽधुनाऽत्रैव ग्रामाद् बहिर्न्युष्यते ।' इति ।

**४. चन्द्रिकायाः प्रशंसाश्च त्यागश्च ?**

शकस्य १८२१ वर्षे चन्द्रिकायाः सप्तमखण्डीय-तृतीयाङ्कम् आरभ्य समाचार-प्रकाशनम् आरब्धम् । यथा किल प्राक्तनं वत्सरद्वयम् एवम् अस्मिन् अपि वत्सरे चन्द्रिकया भूरि भूरि समर्जितं यशः प्रशंसनं च । तत्र तावत् दृश्यतां कतिपयानि प्रशंसापद्यानि—

**१ चण्डमारुताचार्यस्य—**

**मनोज्ञव्याहारा महितपदविन्यासमधुरा**
**मनाग्वृत्तोद्गारैरपि च मदयन्ती सहृदयान् ।**
**प्रयच्छत्यक्लेशं प्रगुणरमणीयं स्वहृदयम्**
**प्रसन्ना वो वाणी चुलुकयति चेतः सपदि नः ॥**

**२ केरळ-भाषा-पण्डितस्य नेट्टा शंकरशर्मणः—**

**कलाधरसमुद्भूता चन्द्रिका हृदयङ्गमा ।**
**जगद् भासयते नित्यं निर्धूय ध्वान्तसन्ततिम् ।**

**३ कुडकोडस्थ-राजकीय-विद्यालय-प्रधानाध्यापकस्य—**

**न ग्रस्ता तमसा न चाहिमलिना नो पाक्षिकश्रीर्नवा**
**प्रोद्भूता जलधेर्न चापि विकला सद्वृन्दसंमोदिनी ।**
**निर्दोषा सरसा च संस्कृतमयी सच्चन्द्रिका शारदीं**
**ज्योत्स्नामप्यतिशय्य राजतितराम् अप्पाभिधानाद् बुधात् ॥**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४ ति. अ. वि. कुमारताताचार्याणाम्—

दोषाकरेण नहि योगमुपैति जातु मित्रे न दर्शयति हन्त पराङ्मुखत्वम्।
येनातनोति न कदापि च जाड्यमेषा रीतिर्मनो हरति संस्कृतचन्द्रिकायाः॥

५ केरलीयस्य इ. के. रविवर्मराजस्य—

सा काव्यमालाङ्ग्यकरोद् यदागमाद् उदीतभीः प्रक्रमभङ्गमात्मनः।
तुष्टूषुरेवास्म्यहमुल्बणैर्गुणैरुपस्कृतां संस्कृतचन्द्रिकामिमाम्॥

असावुक्तस्योक्तौ भवति पुनरुक्तिर्भवति चा—
प्रयुक्तं नामैतत् स्वयमकथितस्यापि कथने।
इतीत्थं नश्चिन्ता हृदि पुनरनन्ता सपदि तत्
स्तुतौ जिह्वां प्रह्वां विरचयति किं वा वितनुमः।

एवं रसिकपण्डितानां दिनानुदिनं मनांसि विनोदयन्ती चन्द्रिका रमणीयतमा बभूव। अस्मिन् चन्द्रिकायाः सप्तमे खण्डे श्रीमदप्पाशास्त्रिभिः प्रणीताः महत्त्वपूर्णाः लेखास्तु— १. पण्डितराजः श्रीजगन्नाथः। २. वर्ण-लेखनप्रचारः। ३. पतितोद्धार-मीमांसाखण्डनम्। ४. मल्लिका-कुसुमम्। ५. कुसुमस्तबकः। ६. दावानलविलासः इत्यादयः। तत्र प्रथमः पूर्वतः प्रक्रान्तः सन् समापितः। द्वितीयः संशोधनात्मकः। तृतीयः धर्मशास्त्रीयः खण्डनात्मकः। अन्त्यास्तु खण्डकाव्यात्मकाः। एवं विद्यावाचस्पतीनां सुमधुरां परिपाटीं शास्त्रार्थ-कर्कशत्वं च प्रेक्ष्य, प्राधान्येन काव्यसरणिं समीक्ष्य च वङ्गीयैः विबुधैः प्रशंसा कृता 'प्रसादगुणसुग्रहा चमत्कारिणी कवित्वशक्तिः' इति। प्रशंसकेषु **श्रीमहेशचन्द्रतर्कचूडामणि-जयचन्द्र-सिद्धान्तभूषणादयः** प्रधानाः।

एवं भूरि भूरि प्रशंसिता चन्द्रिका नैकैः एव रसिकपण्डितप्रकाण्डैः। अनेन सुष्ठु बुध्येत यत् 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति॥' इति यत् जगदम्बिकायाः वर्णनं कृतं तत् संस्कृतचद्रिकायां समन्वितम् अभूत् इति। एवमपि तादृशाः अपि भूयांसः एव रसविदां धुरीणाः आसन्, औदार्यशालिनां प्रवरा अवर्तन्त, व्यवहारनिपुणानां श्रेष्ठाः अविद्यन्त, संस्कृतप्रणयिनां निदर्शन-भूताः समभवन्, ये किल सप्तमखण्डं संपूर्णम् एव ग्रसित्वा व्ही. पी.-द्वारा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रेषितां संख्याम् अपि परावर्तयन् । एतादृशाः पुरुषधौरेयाः प्रायः द्विशत-संख्याका। अहो अमीषां रसास्वादचातुर्यम् !

इदं पुनः निवेदितपूर्वम् एव यत् पञ्चमे वर्षे कोल्हापुरे समागतां चन्द्रिकां द्विशतमेव ग्राहकाः तिरस्कृतवन्तः इति। अस्मिन् च सप्तमे वर्षे पुनरपि द्विशतग्राहकैः चन्द्रिका प्रतिक्षिप्ता इति चन्द्रिकाग्राहकेषु चतुः-शत-रसिकाः क्षयं गताः। हन्त, यावन्तः किल तदानीम् अन्यपत्रिकाणां निखिलग्राहकाः आसन्, तावन्तः इदानीं चन्द्रिकां मुक्तवन्तः। अनेन खलु चन्द्रिकायाः प्रेष्ठत्वेऽपि विपद्ग्रस्तत्वं विज्ञायेत।

### ५. ग्राहकाणां नैकविधाः निष्फलाः अनुनयाः।

पत्रिकानुवाचनप्रवीणानां धुरीणाः! स्वयमेव एतत् निदिध्यायतां श्रीमद्भिः, कथंकारं ग्राहकैः पुनः पुनर्वञ्चिता चन्द्रिका यापितवती स्वकीयान् दिवसानिति। ग्राहकेषु कतिपये द्विगुणशुल्कप्रदातारः अपि आसन् किंतु ग्राहकप्रदत्तधनेन केवलं चन्द्रिकायाः मुद्रणव्ययः एव पार्यते स्म। तदितरः तु व्ययः व्यवसायान्तरैः समुपार्जितधनेन निर्वाह्यते स्म। प्रार्थिताः अपि बहवः ग्राहकाः समाश्वासनप्रदाने कोविदाः एव आसन्। समुपस्थिते पुनः मूल्य-प्रदान-प्रसंगे ते एते व्ही. पी. -द्वारा समागतां चन्द्रिकां परावर्त्य मण्डयन्ति स्म निस्तुलेन औदार्येण आत्मानम्। एषा पुनः अवस्था अप्पा-शास्त्रिषु भूयिष्ठाम् एव उद्विग्नताम् उत्पादयामास।

यदा पुनः इयं चन्द्रिकायाः निकृष्टा अवस्था केषांचित् रसिकपण्डित-वर्याणां श्रुतिपथं प्राप्ता, तदा भूयांसः एव खेदम् आपन्नाः। श्रीमदप्पा-शास्त्रिणां संपादन-नैपुण्ये सुबहुलाः एव पाठकाः लेखकाश्च समर्पित-मनोरथाः अविद्यन्त। प्रबन्धप्रणेतारः खलु निखिलभारते सुप्रथितायां चन्द्रिकायां स्वकीय-रचनाप्रकाशनार्थम् अतीव उत्कण्ठिताः समभवन्। अतश्च तादृशैः कैः अपि मध्ये मध्ये चन्द्रिकायाः समुत्थानाय हस्तावलम्बः प्रदत्तः। 'ये ग्राहकाः योग्य-समये चन्द्रिकामूल्यं प्रयच्छेयुः तेभ्यः उपहारः प्रदीयेत' इत्यपि समुद्घोषितम्। ग्राहकाणां यथाशक्त्यधिकारं चतुःश्रेणी-व्यवस्था कृता। यथाशक्यं भूयोभिः एव विविध-विधा-कलापैः अनुनीताः ग्राहकाः। ये चैवं चन्द्रिकायाः साहाय्यकर्तारः, तेषु कतिपयानां नामानि यथा— आचार्यमहावीरप्रसादद्विवेदी, अभिनवभट्टबाणश्रीकृष्णमाचार्यः,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सरसुढलदेवमहाराजाः, संपत्कुमारनृसिंहाचार्याः, नातू त्र्यम्बकरायः, सररमेशचन्द्रमित्रमहाभागः, रासविहारीमुखोपाध्यायः, पुल्लानिवासी-मार्कण्डेयशर्मा, कोटीश्वरशास्त्री, गुरुदत्तशर्मा व्रजरत्नभट्टाचार्यः, शठ-कोपाचायः इत्यादयः । एषु महोदारमहाभागेषु भूयिष्ठाः एव चन्द्रिकायाः लेखकाः विद्यन्ते । एते पुनः आसेतुहिमाचलं निवासिनः सन्ति महाभागाः । यद्यपि महोदयैः एतैः रसिकपण्डितप्रकाण्डैः विभिन्नप्रदेशवास्तव्यैः नैक-विधानि प्रलोभनानि ग्राहकेभ्यः समुपहृतानि तथापि नैतानि अभिलषित-पूर्तये प्रबभूवुः ।

**६. अभिलष्यामः समस्यापूर्तिखण्डं पृथगेव प्रकाशयितुम् ।**

एवं हि विधाय अपि नैकविधान् उपायान् यद्यपि न परिपोषम् अवाप्तम् आर्थिकं वैभवं, तथापि नेदम् अजीगणत् मनाक् अपि विद्या-वाचस्पतीनां प्रतिभा । समस्यापूर्तिः, यथार्थपूर्तिः इति चन्द्रिकायाः विषय-स्तम्भः इदानीं परिपुष्टः एव आसीत् । भूयांसः एव रसिकभूपालाः समस्यापूर्ति-स्पर्धाम् आयोजयन्ति स्म । प्रयच्छन्ति स्म च विजेतृभ्यः पारितोषिकम् । अनेन च व्यापारेण भूयांसः एव कविपण्डिताः काव्यम् आरचयन्ति स्म । तेषु च काव्यकदम्बेषु सरसमधुराः कविताः उपर्युक्ते स्तम्भे प्रकटीभवन्ति स्म । प्रमाणं पुनः आसां समस्यानां तथावृद्धिं गतं, यथा लघीयसी चन्द्रिका सर्वासां प्रकाशनाय पर्याप्ता नाभवत् । अत एव समस्यापूर्तिखण्डं पृथगेव प्रकाशयितुम् अभिलषितवन्तः अप्पाशास्त्रिणः । तस्य विज्ञापनं च चन्द्रिकायाः सप्तम-खण्डस्य द्वादश-संख्यायां (शाक-१८२२ वर्षस्य चैत्रे मासि । मार्च १८९९) प्रकाशितम् । तदेतद् विस्पष्ट-यति मनोरथं च सर्वाङ्गीणम् उद्देशं च अप्पाशास्त्रिणाम् इति समग्रमेव अत्र प्रदीयते । इत्थम् एतत्—

"अयि भोः सहृदयाः ! विदितमेवेदं श्रीमतां यदिदानीम् अधिष्ठिते साम्राज्ये चरमयुगे तद्बलादेवोत्सन्नप्रायायां गीर्वाणभाषायां तिरोभूतेषु च प्रायेण तदासेवकानां प्रोत्साहेषु, दूरमपेतायां च संपदि समङ्कुरितुम् इच्छन्त्योपि बहूनां कवीनां प्रतिभाः सलिलसेकविनाकृता वीरुध इव प्रति-दिनम् अधिकाधिकं परिम्लायन्ति । एवंविधेऽपि समये परिस्फुटत्प्रतिभाः केचन कविप्रवराः प्रणयन्तोऽपि सन्ति काव्यानि द्रविणाभावव्याकुलीकृता

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न पारयन्ति मुद्रयितुं प्रबन्धम् आत्मीयम्। अतः पल्लवयितुं कवीनां प्रतिभालता अभिलष्यामो वयम् आगामिनो वत्सरात् प्रभृति सहैव चन्द्रिकया प्रतिमासं षोडशपृष्ठात्मकं समस्यापूर्तिखण्डं पृथगेव प्रकाशयितुम्। किन्तु यदि चन्द्रिकया साकमपि केचन संजिघृक्षेयुः, तथा प्रेषयितुं शक्येत। मूल्यं तु सार्धैकरूपकः। प्रापणभृतिस्तु पृथङ न देया। चन्द्रिकया सहैव ये क्रीणीयुस्तैः प्रतिवत्सरं वत्सरादौ सार्धरूप्यकद्वयं प्रेर्यम्। प्रापणस्ययस्तु न पृथक्। खण्डं त्वेतत् संमिलितेषु ४०० ग्राहकेषु प्रकाशयितुम् आरभ्येत।

यदि स्वीकृत्यैतत् प्रोत्साहयेयुरस्मान् महाभागास्तदान्यदपि संस्कृतं पुस्तकं प्रकाश्य यावच्छक्यं संस्कृतभाषां पुनः संजीवयितुं प्रयतिष्यामहे। आशास्महे च साहाय्यदानेनास्य संपादयेयुः संस्कृतभाषायाः पुनरुज्जीवनजन्यं श्रेयः सहृदया इति। ग्राहकैस्तु सत्वरं पत्रेण सूचनीया वयम् इति शिवम्।" इति।

विज्ञापनलेखम् इमं पठन्तः जानीयुः एव संस्कृतसमर्पितसर्वस्वम् अप्पाशास्त्रिणां व्यवसायम्। किन्तु यथा पूर्वोक्तं कथाकल्पद्रुम-प्रकाशनं विहायसि चित्रायितम्, तथा तामेव दशां समालिङ्गितवान् समस्यापूर्तिखण्डोऽपि। कुतः पुनः आसादयेत् स्वाविर्भावं नवीनम् 'अन्यदपि किमपि संस्कृत-पुस्तक-प्रकाशनम्'? हा धिक् सर्वथा वामप्रवृत्ति विधेः।

### ७. गीर्वाणभारत्या ऋणापहारी ऋणमग्नः।

निवेदितपूर्वम् एव अस्माभिः चन्द्रिकायाः केषांचित् ग्राहकाणां निर्मर्यादम् औदार्यम्। तत एव च दिनानुदिनं क्षीयमाणम् आर्थिकं वैभवं चन्द्रिकायाः पोषणाय नालं बभूव। अत एव च तस्याः संजीवनाय धनिकमहाशयेभ्यः प्रत्यर्पणसमयेन कियदपि धनं जगृहुः वाचस्पतयः। अयं च ऋणभारः प्रायः १९०० तमे ई. वर्षे १५० रूप्यकात्मकः आसीत्। तदानीन्तनकाले धनम् एतावत् बहुमूल्यमेव आसीत्। अप्पाशास्त्रिणां वार्षिकः आयः अपि तावत् शतरूप्यकं नैव अतिशेते स्म। अतश्च नैतत् आश्चर्यं यत् ऋणमेतत् आजीवनं नैव अमुञ्चत् अप्पाशास्त्रिणां पृष्ठम् इति। अत एव च चन्द्रिकायाः अनियमितप्रकाशनम् अपि शिलारेखायितम्। तथा च चन्द्रिकाप्रकाशनस्य नियतत्वाभावात् एव पूर्वनिर्धारितः वत्सरारम्भमासः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिवृत्तः । नवमखण्डस्य समाप्तिसमयः १८२४ शाकवर्षीयः चैत्रः आसीत् किंतु विपदां प्रभावतः नवम-खण्ड-संपूर्तिः १८२४ वर्षीयाश्विने जाता । इमाम् एव अवस्थां पं. लिङ्गेशशर्मणे प्रेषिते पत्रे स्पष्टीकुर्वन्ति अप्पा-शास्त्रिणः । यथा—

"वत्सरेऽस्मिन् (१८२२) शतद्वयं ग्राहकाणां प्रतिप्रैरयच्चचन्द्रिकाम् इति यत्सत्यं कम्पते मे चेतः । एकैः किन्तु महाभागैः प्राप्तवद्भिरपि सप्तमखण्डं न तन्मूल्यं प्रादायीत्यहो सौजन्यम् ! ततश्च चन्द्रिकाया महीयसी हानिः संवृत्तेति न जाने कथम् असावष्टमे वत्सरे निर्बाधम् एव प्रचलिष्यति । इति ।

एतदेव निदानं पूर्वोक्तस्य ऋणभारस्य । एतदपि ऋणग्रस्तत्वम् अप्पाशास्त्रिभिः पत्रद्वारा पं. लिङ्गेशशर्मणे निवेदितम् । तेन तु पण्डित-महाभागेन 'ऋणं सर्वथा मया अपाक्रियते' इति आश्वासिताः अप्पा-शास्त्रिणः । इदं तु तस्य चिकीर्षितं निषेधन्तः अप्पाशास्त्रिणः १८२२ शाकवर्षीय पौषवदि नवम्यां तस्मै प्रेषिते पत्रे लिखन्ति —

"एतावतैव कृतार्थोऽस्मि यदहम् ऋणनिर्यातननिश्चयेनाश्वासितः श्रीमद्भिः । किन्तु नैवं परमार्थतः श्रीमद्भिरनुष्ठेयम् इति साञ्जलिबन्धम् अहम् अभ्यर्थये । एतच्चानुष्ठितं मां कर्तव्यालस्येन योजयेत् । भवादृशानाम् अविरतं प्रेमैव मया प्रार्थ्यते न तुकिमप्यन्यद् नादिकम् । तद्धि स्वं स्वम् उद्यमम् आस्थायैव संपादनीयं सर्वैरपीत्येषः सरलः पन्थाः ।" इति अहो सरलतानिष्ठत्वम् !

इमाम् एव चन्द्रिकासंसारचिन्तां कस्याञ्चित् समस्यापूर्तौ प्रकटयति श्रीमान् शठकोपाचार्यनामा कविः—

"न ददति मूल्यं बहवो ग्राहकसुधियस्तथापि कृच्छ्रेण ।
जागर्ति चन्द्रिकेयं सैकतसेतुः कियच्चिरं ध्रियते ।। "

चन्द्रिकायाः विद्यावाचस्पतेः चेयं विपन्नावस्था कवीनां काव्यस्यापि विषयो बभूव इत्यस्मादेव विज्ञेयः तदानीन्तनः सोऽयं व्यसनपरिपाकः पाठकैः ।

प्रतिमासं नियमिततया चन्द्रिकाप्रकाशनं यदा अशक्यप्रायम् अभूत् तदा चन्द्रिकायाः अष्टमवर्षस्य नवमेऽङ्के अप्पाशास्त्रिभिः 'इतःपरं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चन्द्रिका त्रैमासिकी भविष्यति ' इति प्रकटीकृतम् । एतदेव निवेदनम् अनुसृत्य परस्तनोऽङ्कः १०-११-१२ इति अङ्कत्रयात्मकः एव प्रकाशितः ।

८. " अतीव निःसारोऽस्मि संवृत्तः । "

शकस्य १८२२ वर्षे चन्द्रिकायाः अष्टमः खण्डः प्रारब्धः । अस्मिन् वर्षे ज्येष्ठे मासे मानविक्रमाय लिखिते पत्रे प्राहुः श्रीअप्पाशास्त्रिणः—

" आक्रान्तोऽवग्रहेणायं प्रदेशो भूभृदीश्वराः
सह धैर्येण लोकानां व्यनशत् सरितां जलम् ॥
ग्रन्थिज्वरः प्रशान्तः कोल्हापुर इति पुरैव वो विदितम् ।
संप्रति विषूचिका तु प्रादुर्भूता भयंकरी तत्र ॥
कवलीक्रियते प्रतिदिनमनया संवर्तसमयसोदरया ।
दुर्भाग्योपहतानां शतं नराणां विशेषतो यूनाम् । इति ।

रोगसंक्रान्तिभयात् परित्यज्य कोल्हापुरं राशिवडेग्रामं प्राप्ताः अपि अप्पाशास्त्रिणः व्याधिग्रासात् न मुक्ताः । यद्यपि ग्रन्थिज्वरो विषूचिका वा नैतान् ग्रसितुं प्राभवत् तथापि आषाढमासे शीतज्वरेण समाक्रान्ता एते । ततश्च ज्वरदार्ढ्येन संप्राप्ता महीयसी दुर्बलता । अथापि सुहृद्भ्यो वृत्तान्तनिवेदनतत्परता प्रावर्तयत् एतान् पत्रलेखने । निर्वर्ण्यतां तावत् एतत् पं. लिङ्गेशशर्मणे प्रेषितं पत्रम्—

श्रीशिवः शरणम् ।                                        राशिवडेग्रामात् ।

स्वस्ति । पण्डितलिङ्गेशशर्मविद्याभूषणेषु— सानुरागमावेदकः ।

प्रेष्ठाः

अधिगतानि वः सर्वाणि पत्राणि । अलमन्यथा संभाव्य । अहं खलु अतीते मासद्वये शीतज्वरेण निकाममभिभूतो नाद्याप्यस्म्युल्लाघः । अतीव निःसारोऽस्मि संवृत्तः । पञ्चषा अपि पङ्क्तीर्लिखतः परिश्राम्यति मे पाणिः । एतदेव निदानमुत्तरप्रेषणे । क्षम्यताम् आगः । प्रशान्तव्याधिः सर्वेषाम् अपि पत्राणाम् उत्तराणि प्रेषयिष्यामि । एधताम् अनुकम्पेति शिवम् ।—

विनीतः

१८२२ शाकश्रावणसुदि १५ तिथौ ।                    अप्पाशर्मा विद्यावाचस्पतिः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

९. शून्यम् इदानीं जीर्णारण्यप्रायं मे भवनम् ।

न केवलम् अप्पाशास्त्रिणः एव आमयेन अभिभूताः, किंतु एतेषां सहधर्मचारिणी अपि । सा हि अस्य १८२२ शाकवर्षस्य आरम्भतः एव पाण्डुरोगेण समाक्रान्ता आसीत् । तत्रापि व्यराजत अस्याः गर्भिणीत्वम् । श्रावणे च मासि प्रसूतेयम् । शिशुः पुनः अयं मृतः एव जातः । अहो अनर्थपरंपरा! अन्वर्थमेव इदम् उच्यते — 'छिद्रेष्वनर्था बहुलीभवन्ति' इति । मृतापत्या पुनः एतेषां पत्नी दिनानुदिनं समधिकाम् एव व्याकुलताम् अन्वभवत् । इयं पुनः असाधारण-प्रीतिस्थानम् आसीत् अप्पाशास्त्रिणाम् । विकलायां खलु अस्यां महत्तमम् एव कष्टम् अनुभूतम् अप्पाशास्त्रिभिः । एवम् एतस्यां गुणगणशालिन्यां प्रेष्ठायां भार्यायां शय्याम् आश्रितायां या किल स्यात् अवस्था अप्पाशास्त्रिणां सेयं रसिकैः स्वयमेव विचिन्त्यताम् ।

सर्वथा प्रशान्ते ग्रन्थिज्वरादिरोगे १८२२ वर्षीये आश्विनमासान्ते अप्पाशास्त्रिणः कोल्हापुरे समागताः । तत्रागत्य च स्वस्मिन् भार्यायां च साधु चिकित्सा कारयितव्येति व्यचिन्तयन् एते। अत्रान्तरे ग्रन्थिज्वरविषूचिकादिरोगग्रस्तत्वात् कोल्हापुरस्य त्यागः, ततश्च चन्द्रिकामुद्रणप्रकाशनप्रतिबन्धः, आत्मीयो व्याधिः, भार्यायाः रुग्णत्वम्, मृतशिशोः प्राप्तिः, पुनरपि चन्द्रिका-प्रकाशाय कोल्हापुरागमः इत्याद्यनर्थ-परंपरा-हतानां श्रीअप्पाशास्त्रिणां विपत्-प्रतिकारमग्नानाम् एव प्रध्वस्तं व्योम, शून्यम् अभूत् विश्वं, निर्जीवः अजायत जीवलोकः, क्वापि विलीनः संमोदः, विषण्णा प्रसन्नता, प्रमुग्धं वैदुष्यं, वञ्चितः अन्तरात्मा, विदीर्णं हृदयम्, प्रस्रुतं बाष्पम्, प्रवृत्तो विलापः । अपहृतः खलु अन्तक-हतकेन प्रेयसीजनः । हा धिक् !

१८२३ वर्षस्य चैत्रः अयं मासः । पल्लवितो वसन्तः । विपल्लूनं स्वान्तः । मुग्धा सृष्टिः । मोहमापन्ना दृष्टिः ।

१८२३ शकवर्षीय-चैत्र-वदि चतुर्थ्यां पं. लिङ्गेशशर्मणे निवेदितम् अप्पाशास्त्रिभिः — "अहो क्रूरता कृतान्तस्य यदेष पश्यत एव मे समाकृष्टवान् स्वर्गाय प्रेयसीम् । सर्वथा हतोऽस्मि दुर्भगः । शून्यम् इदानीं जीर्णारण्यप्रायं मे भवनम् ।" इति ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतदेव श्रीमानविक्रमनृपाय चैत्रवदि प्रेषिते पत्रे विलिखितम् —

"प्रेष्ठमहाराजाः! समतिक्रान्तो बहुतिथः समयः समधिगतस्य श्रीमतां कृपापत्रस्य। किन्तु पत्रागमनावसरे प्रेयस्याः सहधर्मिण्या अतिमात्रम् आमयाभिभवेन व्याकुलितान्तःकरणस्तदुत्तरं मे दुर्भाग्यवशात् तस्याः परलोकप्रयाणेन दुःखाकुलहृदयो नाद्यावधि श्रीमत्पत्रिकायाः प्रत्युत्तरं प्रेरयितुं प्राभूवमिति क्षम्यतामिदमागः। प्रेष्ठाः! यत्सत्यम् उद्विग्नोऽस्मीदानीं संसारात्। भार्यैव हि गुणवती प्रधानम् अवलम्बनं संसारवर्तिनां पुरुषाणां, विशेषतश्च मादृशानां दरिद्रधुर्याणाम्। सर्वथा हतोऽस्मि वामप्रवृत्तिना विधिहतकेन। का गतिः?" इति।

## १०. नवो विवाहो जघटे नृपेन्द्राः!

एवम् अतीव उद्विग्नावस्थायां वर्तमानानाम् अप्पाशास्त्रिणां मनःस्वास्थ्यं निकामं दुर्लभम् आसीत्। इमां चोद्विग्नतां दूरीकर्तुं सुहृत्प्रवरस्य पं. लिङ्गेशशर्मणः कुर्तकोटिनामकं ग्रामम् इमे प्रातिष्ठन्त। तत्र च निवसद्भिः मानविक्रमाय पत्रद्वारा निवेदितम् एतैः — 'समवधारयामि च अयुक्ततां शोकस्य तथापि परिग्रसते मामयं निर्घृणानां धुर्यः। अपाकुर्वन्ति पुनरमुं भवादृशानां वचनानि च समागमाश्च। अत एव च सुहृत्समागमार्थं ग्रामम् इमम् अनुप्राप्तोऽस्मि।' इति।

पं. लिङ्गेशशर्मविद्याभूषणस्य सहवासेन प्रतिरुद्धः इदानीं शोकपारावारः अप्पाशास्त्रिणाम्। कानिचित् एव दिनानि तत्र न्युष्य पुनः अपि कोल्हापुरम् उपाजग्मुः एते। तदैव पुनः अप्पाशास्त्रिणां तातचरणाः श्रीसदाशिवशास्त्रिणः महता ज्वरेण समाक्रान्ताः। प्रशान्ते च तस्मिन् स्वस्थेषु च सदाशिवशास्त्रिषु अप्पाशास्त्रिणां पुनरपि दारसंग्रहस्य वार्ता प्रस्तुता। ततश्च मातापितॄणां सुहृदां च महता आग्रहेण द्वितीयदारसंबन्धे मनः कृतम् एतैः।

विज्ञातपूर्वम् एव इदं पाठकैः यत् पं. कान्ताचार्याणां बाबूशास्त्रिगुळवणी इत्याख्यः कोपि अपरः एव शिष्यः आसीत् इति। तस्य भार्यायाः कनीयसी भगिनी एव इदानीम् अप्पाशास्त्रिणां द्वितीयभार्यात्वं संप्राप्ता। १८२३ शाकवर्षीये ज्येष्ठमासे कृष्णपक्षे कोल्हापुरनगरे केसरीकराणां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हर्म्ये विवाहोऽयं संवृत्त । विवाहसमारम्भार्थं पुनः अप्पाशास्त्रिणां सुहृत्-प्रवराः पं. लिङ्गेशशर्मविद्याभूषणमहोदयाः आसन् एव समागताः । इयमेव विवाहवार्ता नृपमित्रमणये मानविक्रमाय न्यवेदि श्रीअप्पाशास्त्रिभिः —

"ज्वरेण मे कालसहोदारेण प्रेयान् समाक्रम्यत तातदेवः ।
व्यथां यदीयामनुपश्यतोऽभून्ममान्तरात्मा शतधा विदीर्णः ॥
शनैः शनैर्व्याधिरमुष्य सोऽयं यदा प्रशान्त्युन्मुखतामवापत् ।
सुहृद्भिर्निर्बन्धवशात् तदा मे नवो विवाहो जघटे नृपेन्द्राः ॥" इति ।

**११. महामण्डलेन चन्द्रिका मुखपत्रिका कृता ।**

१८२२ शाकवर्षे अष्टमखण्डस्य नवमाङ्के चन्द्रिका त्रैमासिकी भविष्यति इति निवेदितम् । १०, ११, १२ इति अङ्कत्रयम् एकत्रैव मुद्रयित्वा प्रकाशितं च । किंतु तस्मिन्नेव अङ्के 'वत्सरान्ते विज्ञप्तिः' इति शीर्षके प्रबन्धे समुल्लिखितम् अप्पाशास्त्रिभिः—

'निवेदितपूर्वम् अस्माभिः अतःपरं प्रतिमासत्रयमेव चन्द्रिकां प्रकाशयिष्याम' इति । किं तु द्विगुणेऽपि शुल्के वयमवश्यं ग्रहीष्यामश्चन्द्रिकां प्रतिमासं न तु मासत्रयं यावदस्या विरहं सोढुं प्रभविष्याम इति बहूनां वाचकमहाभागानां पत्रिकाः समधिगत्य परिवर्तित-संकल्पाः प्रतिमासम् एवातःपरं चन्द्रिकां प्रकाशयितुम् इच्छामः ।" इति । अनेन चन्द्रिकायां पाठकमहाभागानां प्रणयातिरेकः प्रकाशितो भवति ।

चन्द्रिकायाः अष्टमे खण्डे श्रीमदप्पाशास्त्रिभिः स्वीयो गरिष्ठो महाप्रबन्धः 'महाकविः श्रीकालिदासः' इति शीर्षकः प्रकाशयितुं प्रारब्धः । पतितोद्धारमीमांसाखण्डनं सप्तमखण्डात् एव क्रमशः प्रकाश्यते स्म । तस्यापि कश्चित् अंशः अस्मिन् खण्डे प्रकाशितः अभवत् । अधिकमासे निर्णयः, हरितालिका-व्रते तृतीया-निर्णयः इति द्वौ प्रबन्धौ नव्यतया प्रकाशितौ । वाचस्पतीनां बह्व्यः कथाः अस्मिन् एव खण्डे प्रकाशम् आसादयामासुः । सनातन-धर्म-प्रणयित्वं श्रीमदप्पाशास्त्रिणां प्रबन्धैः दृढीकृतमेव आसीत् । शास्त्रार्थ-कौशल्यं धर्ममण्डन-निपुणत्वं, विरुद्धमत-खण्डन-कर्कशत्वम् अपि एतेषां सुप्रथितं बभूव । सुललितलेखनप्रभाववशात् प्रचारणकुशलधुरीणत्वम् अपि हठात् प्रकटीबभूव श्रीअप्पाशास्त्रिणाम् । एतैश्च गुणगणैः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रीतेन वाराणसेय-भारतधर्म-महामण्डलेन "चन्द्रिका" स्वकीयमुखपत्रम् इति स्वीकृता। तेन खलु विद्यावाचस्पतीनां गुरुत्वं गौरवितं समभवत्। ततश्च सनातनधर्मानुयायिनां नेतृत्वम् अपि विद्यावाचस्पतिश्रीमदप्पाशास्त्रिषु समागत्य विश्रान्तम् इव।

**१२. मातः संस्कृतभारति! त्यज निजोद्वेगं चिरप्रोदितम्।**

१८२३ शाक-वर्षीय-ज्येष्ठ-सुदि-चतुर्दश्यां श्रीअप्पाशास्त्रिणाम् **'एकादशी-श्राद्ध-विधि-निर्णयः'** इत्याख्यः प्रबन्धः स्वतन्त्र-पुस्तक-रूपेण प्रकाशितः। अस्य तु प्रकाशनस्य निदानं कस्यचित् अन्यस्य प्रबन्धः आसीत्। तस्य प्रबन्धस्य हि खण्डनात्मकः अयम् अप्पाशास्त्रिणां प्रबन्धः। खण्डनीय-प्रबन्धस्य तावत् अयं प्रथमः श्लोकः —

**"श्रीपतिं पूर्णबोधेऽयं संप्रणम्य हरेर्दिने।**
**श्राद्धस्याकरणे द्वैत-सिद्धान्तं ब्रूमहे वयम्॥"**

इत्ययम् आसीत्। प्रबन्धे च अत्र श्रीमदप्पाशास्त्रिणां श्रद्धास्पद-विषयाणां मान-हानि-कारकं भूयिष्ठम् एव आसीत्। अत एव खण्डितः अयं प्रबन्धः एतैः। खण्डयित्वा च एतं प्रबन्धम् अन्ते प्रोक्तम् एभिः —

**"विपक्ष-कक्ष-क्षपणे न वयं बद्ध-कङ्कणाः।**
**स्वपक्षापतितं किन्तु मार्ज्यतेऽलीक-दूषणम्॥"** इति।

अस्यैव वत्सरस्य आषाढे मासे शुक्ल-पक्षे द्वादश्यां द्वारका-शारदा-पीठे श्रीजगद्गुरु-शंकराचार्यचरणानाम् आरोहणं निमित्तीकृत्य किमपि अभिनन्दनपत्रं प्रकटितम् अप्पाशास्त्रिभिः। जगद्गुरुचरणास्तु एते श्रीमन्-माधवतीर्थसंज्ञकाः। एतैः च स्वामिवर्यैः पूर्वं सनातन-भारत-धर्म-महापरिषदः अध्यक्षपदं भूषितम् आसीत्। पीठारोहणाय बडोदादि-नरेशानां जनानां च संमतिः आसीत् एव। एतेषां पुनः धर्मनेतॄणां पीठारोहणं श्रुत्वा धर्म-प्रियं संस्कृत-प्रियं च अप्पाशास्त्रिणां स्वान्तं प्रमोदेन समुच्चलितम् इव। अभिनन्दन-पत्रिकायां चास्याम् अन्तिमे परिच्छेदे प्रार्थितम् एतैः —

"हन्त! सर्वथा समुदयमानम् इवेदानीं पश्यामो भागधेयं सनातन-धर्मस्य यदेष श्रीमत्-करकमलायत्ततां भजते। ....... श्रीमतां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पीठाधिरोहण-महोत्सव-समवलुलोकिषाक्रान्तचरान्तःकरणोऽपि, कुतोऽपि हीन-सुकृत-सुलभतः प्रतिबन्धकतोऽनवाप्तफलाभिलाषो गत्यन्तराभावात् हृदयसंगम एव सुसंगम इति संस्मरन्, पुरस्तादवस्थापि श्रीमत्-प्रतिमूर्तिः, प्रणयभरावनतचूडो भूयो भूयः प्रणम्य सुधासरोऽवगाढ इव किमपि निर्वृतान्तःकरणो बलवता लब्धप्रसरेण प्रेम्णेव मुखरीक्रियमाणः, शिरसि निहिताञ्जलिसंपुटः, समभिनन्दतितमां श्रीमतां द्वारकापीठाधिरोहणं कोऽप्ययं शरीरमात्रेण सुदूरवर्त्यपि मनसा सुसंनिहितः शिष्यजनः। आशंसते चैकान्तिकम् अभ्युदयं श्रीमज्जगद्गुरुचरणानां तद्द्वारैव च श्रीसनातनधर्मस्य तपस्विन्याः संस्कृतभाषायाश्चेति।" इति।

इतःपरं च श्रीमज्जगद्गुरु-शंकराचार्याणाम् एतेषां प्रशंसापराः पञ्चश्लोकाः संमुद्रिताः। तत्र तावत् श्लोकद्वयम् अत्र समुल्लिख्यते —

"पातालं व्रज नव्यशिक्षितमत, क्वापि प्रलीयस्व रे
चार्वाक, श्रुतिसौनिकाः कुपुरुषा अम्भोनिधौ मज्जत।
अद्योद्दण्डमतिप्रचण्डकिरणः सद्धर्मदीक्षागुरुः
श्रीमान् माधवतीर्थदेशिकवरः कामं समुज्जृम्भते॥
मातः संस्कृतभारति त्यज निजोद्वेगं चिरप्रोदितं
वेदा मुञ्चत साध्वसं भव समाश्वस्तः पुराणव्रज।
अद्वैतामृत संजहाहि मनसः क्लान्ति यदद्य प्रभुः
श्रीमन् माधवतीर्थदेशिकमणिः पीठं समारूढवान्॥"

## १३. सह्य-शैल-शिखरैक-मण्डने —

यथा किल उक्तपूर्वम् एवं प्रतिमासं चन्द्रिकायाः प्रकाशनं प्रतिश्रुतम् अप्पाशास्त्रिभिः। किन्तु कालस्य कौटिल्यात् नेदम् अघटिष्ट। १८२३ शाकवर्षे यदा चन्द्रिकाया नवमखण्डः प्रारब्धः तदा अप्पाशास्त्रिणां प्रथमपत्नी दिवं गता। तातदेवः ज्वरेण अभिभूतः। ततश्च यावत् एतेषां सोऽयं पिता नैरुज्यम् अवापत् तदा द्वितीयो विवाहः संवृत्तः। यावच्च कौटुम्बिकः सुखलेशः प्राप्यते, तावत् एव पुनरपि कोल्हापुरे दुर्भिक्षं च ग्रन्थिज्वरश्च विषूचिका चैतेषां नृत्यं प्रारब्धम्। तत्रैव वाचस्पतीनां माताऽपि व्याधिजर्जरा बभूव। १८२३ वर्षीये श्रावणे मानविक्रमाय निवेदितम् अप्पाशास्त्रिभिः —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"जननी किन्तु मदीया ज्वराभिभूताऽधुना नितराम् ।
संलग्ना शय्यायां हृदयं पर्याकुलीकुरुते ।।
श्रीमृत्युञ्जयकृपया नूनमसावचिरमेव गदमुक्ता ।
संमदयेद्धृदयमिति प्रतीयते विबुध संसेव्य ।।
नाद्यापि शुष्कसस्या क्षितिरिह भृशमयि तथापि जनतेयम् ।
दुष्प्रशमेव पिपासा भवेदिहोच्छुष्ककासारे ।।
देशेषु केषुचित्तु प्रायो नोप्तानि सस्यानि ।
बलवदवग्रहभीतैः कृषीवलैर्विप्रतीपविधिहतकैः ।।
अतिवृष्टिनष्टविभवः केरलदेशः पुनर्महाराष्ट्राः ।
वृष्टिविनाकृतिनिहता अहो महन्नियतिवैषम्यम् ।।" इति ।

तदूर्ध्वं च सदाशिवशास्त्रिणः कासश्वासादिरोगैः पुनरपि संपीडिताः। ग्रन्थिज्वरः अपि कोल्हापुरे प्रवृद्धः । प्रवृत्तं च तत्र तस्य भीषणं ताण्डवम्। अत एव परित्यज्य कोल्हापुरं श्रीअप्पाशास्त्रिणः परिवारेण सह मित्र-भूपवर्याणां श्रीपन्तामात्यानां राजधान्यां गगनबावडा-नगर्यां समागताः। तत एव पुनः कार्तिके मासि मानविक्रमाय सर्वोऽपि वृत्तान्तः निवेदितः एतैः । सोऽयम् —

"निर्वृत्ते ननु तत्र (नवे विवाहे) मित्रमणयस्तातः पुनर्मामकः
कासश्वासमुखैर्नितान्तमभवत् पर्याकुलो व्याधिभिः ।
हा धिक्कष्टमिदं नितान्तमिह यत् त्वारोग्यमेकान्ततो
नैवामुष्य विलोकितुं नयनयोर् अद्यापि भाग्योदयः ।।
यावत् स्वास्थ्यमयं मनाक् समयते तावत्तु कोल्हापुरे
संवर्तकसहोदरः समजनि ग्रन्थिज्वरो भीषणः ।
येनाक्रान्तमुपागमत् पुरमिदं संत्यक्तकल्पं जनैः
क्वापि क्वापि परेतराजनगरीशाखापुरैकप्रभाम् ।।

× × × ×

मन्दिरमयि सुरमन्दिरसुन्दरमपहाय साम्प्रतं लोकाः ।
निवसन्ति भीतभीता अगणितशिशिरातपाः कुटीरेषु ।।
व्यतिकरेऽत्र महीपशिखामणे, पुरमिदं व्यजहां सकुटुम्बकः ।
बहुषु सत्स्वपि वस्तुषु देहिनां प्रियतरं ननु जीवितमेव यत् ।।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सह्यशैलशिखरैकमण्डने चारुनीरसुसमीरराजिते ।
संप्रतीह निवसामि पत्तने सत्सुहृद्-गगनबावडाभिधे ॥" इति ।

गगनबावडानगरं प्राप्तानाम् अप्पाशास्त्रिणां स्वान्तं किमपि स्वास्थ्यं लेभे । एतेषां पितृचरणानां व्याधिः प्रशान्तः अभवत् ।

एवं प्रिय-सुहृत्-प्रवराणां नृपवर्याणां गगनबावडाधीश्वराणां श्रीमत्-पन्तामात्यानाम् अवसथे विश्रम्य समासादितः अप्पाशास्त्रिभिः कोऽपि प्रसादः । प्रशान्ते ग्रन्थिज्वराद्युपघाते च पुनरपि कोल्हापुरम् आगत्य संलग्नाः एते स्वीये कर्मणि । चन्द्रिकायाः प्रकाशनम् इदानीं षण्मास-विलम्बितम् अभूत् ।

## १४. अयि निर्धनते दयावति !

चन्द्रिका-प्रकाशने ऋणभारः, मातापित्रोर्व्याधिः, प्रथमपत्न्या सापत्यायाः निधनं, द्वितीयो विवाहः, रोगभयात् सपरिवाराणां स्थानान्तरम् इत्यादिविपद्भिः श्रीमदप्पाशास्त्रिणः संत्रस्ताः संजाताः । तथापि संस्कृत-संजीवनव्रतस्य परिपालनाय बद्धकङ्कणैः एतैः सर्वाः अपि विपदः तिरस्कृत्य प्रारब्धं संस्कृतचन्द्रिकायाः प्रकाशनम् । धन-विरह-समुद्विग्नानां वाचस्पतीनां दशां निदर्शयति तत्प्रणीतं 'निर्धनविलापम्' इत्येतत् काव्यम् । एतच्च चन्द्रिकायाः नवमखण्डीय-तृतीयाङ्के प्रकाशितम् । तत्र हि प्रोक्तम् एतैः —

"अयि निर्धनते दयावति क्षणमप्येष विमुच्यतां जनः ।
विहितो हि निकामसंस्तवो विरसत्वं मनसः प्रयच्छति ॥"

× × × ×

तदलं प्रणयेन ते सखि त्यज मां निष्प्रतिपत्तिमानतम् ।
नय वा न चिराद्दयाकुला चरणाम्भोजयुगं परेशितुः ॥
यदि मयि तव प्रेमैवास्ते नितान्तमनोरमम्
सह सखि मया कैलासाद्रौ चिराय निवत्स्यसि ।
जनन-मरण-क्लेश-च्छेद-प्रवीण-निरीक्षणे ।
शशधरकलामौलौ रागात् समादधता मनः ।" इति ।

अहो निष्कारुण्यं दरिद्रतायाः ! अहो कठोरत्वं निर्धनतायाः ! अहो कौशल्यं विनोदप्रियतायाः । अहो अनुनयः प्रियतमायाः ! अहो प्रकर्षः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परेशभक्तेः ! समनुभूयताम् अवस्थासामरस्यं च माधुर्यं च रसिकैः।

इदानीं चन्द्रिकायाः मूल्यं मनागिव अभिवर्धितं वाचस्पतिभिः। तत्तुच्छात्राणां कृते १ रू. ६ आनकाः। अन्येषां च कृते १ रू. १२ आनकाः।

## १५. तान् प्रति नैष यत्नः !

पुनरपि महता उत्साहेन चन्द्रिका-प्रकाशने व्यवसितानां श्रीअप्पाशास्त्रिणां पूर्ववत् एव केऽपि आक्षेपकाः प्रादुरभवन्। श्रुत्वा च तेषां विप्रलापान् नवमखण्डस्य प्रथमाङ्के एव गर्जितम् एतैः —

ये पुनर् अकारणम् एव सुदूरम् उत्सार्य सौजन्यं मात्सर्यमात्रम् अवलम्बमानाः पण्डितम्मन्याश्चन्द्रिकां तिरस्कुर्वन्ति, परोक्षे वा वितथ-दोषव्याख्यानया कृतार्थम् आत्मानं मन्यन्ते, ये च सर्वाङ्गीण-यौवनभरालसाया वामाक्ष्याः सौन्दर्यम् अपहाय पूय-क्लिन्न-व्रणमात्रम् अन्विष्यन्त्या मक्षिकायाः सरणिम् अनुसरन्तो दोषमात्रदर्शिताम् आलम्बन्ते, ये वा चन्द्रिकेति नामश्रवणमात्रत एव सनासासंकोचं मुखं परावर्तयितुम् इहन्ते, येऽपि वा तृणच्छन्नकूपोपमया वचसि माधुर्यं सारल्यं च मनसि पुनर्नैकान्तिकं काटवं कौटिल्यं पिशुनतां च स्थिरीकृत्यैव चन्द्रिकया साकं व्यवहरन्ति, तान् किल —

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्तु ते किमपि तान् प्रति नैषयत्नः।'

— इति श्रीमद्भवभूतेः,

"यथा यूनां तद्वत् परमरमणीयाऽपि रमणी।
कुमाराणाम् अन्तःकरणहरणं नैव कुरुते॥"

— इति श्रीहर्षदेवस्य वा वचनेन प्रत्युत्तरयन्ती चन्द्रिका यथापूर्वं सप्रमोदं सोल्लासं च प्रणयिनां मनांस्यनुरञ्जयितुं कामयते।" इति। अयम् एव अभिप्रायः मासावतरणिकायाम् अपि कस्याञ्चित् प्रकटीकृतः अप्पाशास्त्रिभिः —

"दिशि दिशि मरुदुच्चैः केतकीगन्धबन्धुः
विसरति जगदेतज्जीवनं विन्दति त्वत्॥
इति किमपि नभस्य श्लाघनीयं यशस्ते
श्रुतिकटुरटितोऽयं भेक एकः क्षिणोति।" (भाद्र. १८२४)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१६. यथाप्रतिज्ञं प्रबन्धावतारः ।**

चन्द्रिकायाः सर्वाद्ये अङ्के यथा किल प्रतिज्ञातम् अप्पाशास्त्रिभिः, तथैव प्रतिवर्षम् अद्यावधि कर्तुं प्रयतितम् एतैः । अस्मिन् अपि नवमे खण्डे तादृशा एव नानाविधाः प्रबन्धाः प्रकाशिताः समभूवन् । श्रीमदप्पाशास्त्रिणां च बन्धाः समधिकं वैविध्यसहोदरं रमणीयत्वं सनाथयन्ति । तथा हि—

**काव्ये** — निर्धनविलापम्, उद्वाहमहोत्सवं सुभाषितानि च ।
**कथा** — बकचापलम् ।
**क्षेत्रवर्णनम्** — पलाशाम्भः शिवलिङ्गम् ।
**समीक्षाप्रबन्धः** — महाकविः कालिदासः । ( पूर्वतः प्रक्रान्तः । )
**चरित्राणि** — श्रीनिवासदीक्षितः, श्रीकृष्णमाचार्यः, श्रीपन्त-रायामात्यः ।
**धर्ममीमांसा** — पतितोद्धारमीमांसाखण्डनं ( पूर्वतोऽनुवृत्य समाप्तम् ), महालयश्राद्धकालः, गोरक्षणचन्द्रिका, निर्णयप्रकाशः ।
**आयुर्वेदः** — ग्रन्थिज्वरचिकित्सा ।
**राजकीयम्** — तिलकमहाशयस्य शासनविभागीयोऽभियोगः, लार्ड-लॉमिंग्टनमहोदयः ।
**विज्ञानकलाशास्त्रम्** — संख्याकुतूहलम्, भारतवर्षे काचपात्राणि, अपि नाम विदितमार्याणां मुद्रणशिल्पम् ?

एतद्विभिन्नाः पुनः शङ्कासमाधानानि, समालोचनानि, समस्यापूर्तिः इत्यादयः नैके वाचस्पतिवाचां विलासाः खण्डेऽस्मिन् समुल्लसिताः । एतेन व्यतिकरेण यथा श्रीमद्अप्पाशास्त्रिणां यशः प्रवृद्धं तथा संस्कृत-भाषायाः वैभवम् अपि समुद्भासितम् ।

**१७. श्रीश्रीनिवास दीक्षितमहाभागः प्रतस्थे परं लोकम् ।**

विद्यावाचस्पतीनाम् अभ्युदयं वर्णयन्ती अस्माकं लेखनी इदानीं किमपि कटुतरं निवेदयितुम् उत्सहते । हा धिक् धाष्टर्यम् एतस्याः । किन्तु का गतिः ? श्रूयताम् ।

निवेदितपूर्वम् एव इदं यत् अस्मिन् वर्षे चरित्रप्रबन्धेषु श्रीनिवास-दीक्षितम् अधिकृत्य विलिखितः एकः प्रबन्धः श्रीअप्पाशास्त्रिभिः इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अयं किल श्रीनिवासदीक्षितो नाम नासाधारणः पण्डितः, किन्तु तदानीन्तनानां दक्षिणदेशीयपण्डितानां मूर्धन्यतमः । अयं परमशिवभक्तः, चुलुकीकृत-संस्कृतविद्या-महासागरः अपि नैकासां भाषाणाम् अभिज्ञाता, धार्मिकप्रवरः अपि जनतायाः कल्याणे अतिमात्रम् आसक्तः 'ब्रह्मविद्या-' नामक-संस्कृत-मासिक-पत्रस्य संपादकः प्रकाशकः स्वामी चासीत् । अद्वैत-वेदान्ताभिमानिना अनेन अद्वैत-मण्डनार्थम् एव उपर्युक्तं मासिक-पत्रकं प्रचारितम् । सनातनधर्मानुयायिनां प्रवराः, शिवभक्तश्रेष्ठाः, अद्वैत-वेदान्ते गरिष्ठ-श्रद्धा-शालिनः च आसन् अप्पाशास्त्रिणोऽपि । अत एव एतेषां दीक्षित-महाभागेन साकं मैत्र्यसम्बन्धः साहजिकः एवासीत् । 'समान-शील-व्यसनेषु सख्यम्' इति हि प्राहुः ।

अयं श्रीनिवासदीक्षिताख्यः महात्मा परित्यज्य मर्त्यलोकम् अलंचकार दिवम् इति वार्तेयं **विज्ञानचिन्तामणि**-नामक-केरलीय-संस्कृत-मासिकपत्रात् उपश्रुत्य भृशं विषण्णाः अप्पाशास्त्रिणः तदीयं परिचयं चन्द्रिकायां प्रकाशयामासुः । तेषाम् एव शब्दैः अंशतः अयं वृत्तान्तः पाठकेभ्यः उपाहर्तुम् इच्छामः । सोऽयम् —

**"हा संस्कृतभारति । निरवलम्बासि ।**
**अकलितमहिमानः केतनं मङ्गलानां**
**कथमपि भुवनेऽस्मिंस्तादृशाः सम्भवन्ति ॥**

सहृदयाः । संस्कृतचन्द्रिकाप्रणयिनः । कियन्तो वात्र निरन्तर-परिवर्तन-शालिनि संसार-महाम्बुधौ नोत्पद्यन्ते पुरुषाः कियन्तश्चोत्पन्ना नोपयान्ति पञ्चत्वम् । किन्तु किं तैर्भुवो भारायमाणैर्जननी-यौवन-परिक्षय-मात्रहेतुभिर्जीवद्भस्त्रिकायमाणैर्नरपाशैः । त एव किलात्र जाता इत्युच्यन्ते येषां विमलतमेन कीर्तिपटलेनानुलिप्यन्ते दिगङ्गनानां गात्राणि । स्वभावत एव हि विनश्वरं भौतिकं गात्रम् इत्यवश्यम्भाविनि तत्परिक्षये संघटितेऽपि नास्त्येव शोक-हेतु-लेशोऽपि । अपरिक्षयिष्णु हि शरीरं यशोरूपम् आकल्पमेव महात्मनां जागर्ति । तद्धि निरन्तरं यौवनम् एवासेवते । अतिक्रान्तेष्वपि परःसहस्रेषु वत्सरेषु नांशतोऽपि वैवर्ण्यं भजते, नोपयाति नैबल्यं, नावाप्नोति हीनत्वं, न चापि स्तोकम् अपि चलाचलभावम् आसादयति । अत एवाभिधीयते कैश्चित्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ इति ।

...... ये चैवंविधा महात्मानस्तेष्वेव गणयितुं युक्तः श्रीमान् अशेष-पण्डित-मण्डलीमूर्धन्यः कविप्रवरो महाशाम्भवकुलतिलकः परमदार्शनिकः प्रियसुहृत्प्रवरोऽस्माकं ब्रह्मश्री श्रीनिवासमखी। अस्य च महात्मनो नाशेषतो विदितं वृत्तम् अस्माभिः। अभिनवम् एव ह्यमुना संघटितं सौहार्दम् अस्माकम् । ...यावद् विदितं चरितम् अस्य न किल नोपहर्तव्यम् अस्माभिः। अत एवैतन्निवेदनेनात्मानं कृतार्थीकर्तुम् इच्छामः। सोऽयं परममाहेश्वरो महात्मा कौण्डिन्यगोत्रम् आत्मनो जन्मना मण्डयामास। उपनीतात्मा गुरुकुले निवसन् उपचतुर्दशवर्षात्मके वयसि किलायं पाणिनीय-सिद्धान्त-कौमुदीम् अधीते स्म । दुर्निवारत्वात् तु भवितव्यता-विलासानाम् अस्मिन्नेवावसरे दिवं गतोऽस्य महात्मनो जनकः। ... विनिश्चितम् एतेन यद् अवबुध्य भगवतीं शिवाद्वैतविद्यां कृतार्थीकरणीयं जन्म, पवित्रीकरणीयम् आत्मनः कुलं, सफलीकरणीयं च जीवितम् इति। इत्थं अवधारितवता च कल्याणाभिनिवेशिनाऽनतिक्रान्तबालभावेनापि प्रौढमतिना तत्कालम् एव शरणं प्रपद्य निवेदिताः स्वीयं मनोरथं दयालवः शिवाद्वैतविद्याचार्याः श्रीमन्तो गुरुचरणाः। ...

सुप्रथितम् एव निखिलेष्वपि प्रदेशेषु श्रीशिवाद्वैतविद्या-प्रतिष्ठापनाचार्याणां श्रीमदप्पय्यदीक्षितेन्द्राणां नाम। तेषाम् एव किलान्वये समधिगतजन्मानो नानाविध-प्रबन्ध-निर्माण-प्रथितयशसो महामहोपाध्याया श्रीमन्तस्त्यागराजाध्वरीन्द्रा नाम सम्प्रत्यपि परिमण्डयन्ति तञ्जोर्-विभागीयां मन्नारगुडीं नाम पुरीम् । तेषामेव च महाभागानां छात्रोऽस्मदीयः प्रियसुहृत्-श्रीनिवासाध्वरी। ... प्रद्रुतान्तःकरणास्त्यागराजाध्वरीन्द्रा अशेषत एवैनम् अन्वग्रहीषुः। एनं च प्रथमतः श्रुतिसूक्तिम् अपाठयन् आचार्याः। सह शैवसिद्धान्तैः शब्दानुशासनादीन्यध्यापयामासुः। एवं वत्सराष्टकं यावद् अनुभूतश्रीसद्गुरुचरण-परिचर्यासुखस्तदुपदिष्ट-श्रीपरमशिवोपासनापथानुयायी कथं कथमपि परितत्याज श्रीमदाचार्यकुलम् ।

एवं गुरुकुलान् निवृत्तो वशीकृत-नानाविधविद्यः श्रीनिवासमखीन्द्रः सरस-संस्कृत-भाषा-निबद्धान् परःशतान् प्रबन्धान् प्राणैषीत्। ... एष

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुनर्महाभाग एकम् आयतनं सकलगुणानाम् आलम्बनं श्रीमत्याः संस्कृताया वाचो रमणीयतमं विहारभवनं विविधानां प्राचीनविद्यानाम् असाधारणश्च प्रभवः सौजन्यस्य । ...... तस्य हि यदेव धर्मशास्त्रप्रबन्धेषु तदेव वाचि, यदेव वाचि तदेव लेखन्यां यदेव लेखन्यां तदेव मनसि यदेव च मनसि तदेव खल्वाचरितेऽपि बभूव । ..... एष किल महाभाग अहिताग्निः सोमेनेष्टवान् इति श्रूयतेऽस्माभिः । किमधिकं मूर्त एवायम् आसीद् धर्म इत्यपि वचो नातिशयोक्तिम् अवगाहेत ।

जनपदमङ्गलेऽप्यतिमात्रम् आसक्तोऽयं महोद्यमः । महात्मायं मद्रपुरीय-हैन्दव-धार्मिक-प्रबन्ध-परिषदः ( Hindu Tract Society, Madras ) सहकारिसभापतिरासीत् । प. प. शृङ्गेरी-पीठाधिष्ठितैः श्रीश्रीजगद्गुरुचरणैर्दक्षिणप्रान्ताचारविचारेऽधिकृतोऽयं पण्डितोत्तंसः । एतेनैव च केरलान्तर्वर्तिनि श्रीकालटीक्षेत्रे श्रीमताम् आदिशंकराचार्याणां जयन्तीमहोत्सवः प्रावर्ति । ......

एतेनैव च महामतिना केवल-धार्मिक-विषय-समुल्लसिता संस्कृत-द्राविडोभय-भाषामयी **ब्रह्मविद्या**-मासिक-पत्रिका प्राकाशि । ...... एतन्मुद्रणाय च ब्रह्मविद्याख्यो मुद्रणालयोऽप्यवस्थापित एतेन । ......

अस्ति किल सुप्रचारो दाक्षिणात्येषु पराशरमाधवस्मृतितत्त्वादिवत् विद्वज्जनसम्माननीयो निस्तुलो धर्मशास्त्रीयः प्रबन्धः **स्मृतिमुक्ताफलं** नाम । स चायं व्याख्यानसापेक्ष इत्याकलय्यामूलान्तं सम्यग् व्याख्यातः श्रीमद्-दीक्षितमहाभागेन । सोऽयमुपहारीकृतो वत्सरेऽस्मिन्नेवास्मभ्यं प्रिय-सुहृदा । अत्र यदुक्तं श्रीशृङ्गेरीजगद्गुरुचरणैस्तदेव प्रियपाठकमहाशयानां नयनयोर्गोचरीकर्तुम् इच्छामः । यथा—" अस्मदत्यन्तप्रियशिष्य**कौम्भघोण श्रीनिवासशास्त्रि**विषये श्रीनारायणस्मरणपूर्वक-विरचिताशिषः समुल्लसन्तुतराम् । साम्प्रतम् । विरलप्रसराण्येतर्हि मुनीशितॄणां मूलसूत्राणि गरीयसा श्रमेण संपाद्य विनिर्मिता विवृतिरियम् अतिश्लाघनीयेति मोमुद्मः । " इति ।

श्रीशिवाद्वैतं नाम श्रीमदप्पय्यदीक्षितानां मतम् अनुसरता चैतेन सविस्तरं व्याख्याता अष्टोत्तरं शतम् उपनिषदः प्रस्फुटयन्ति वेदान्त-मीमांसादि-दर्शनेषु परं प्रावीण्यं **श्रीश्रीनिवासदीक्षितेन्द्रस्य** । साहित्येऽपि परां प्रतिष्ठाम् अधिगतवता महाशयेनामुना कियन्ति वा काव्यानि,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कियन्ति च नाटकानि, कियन्तश्च प्रबन्धा नाग्रथ्यन्त। अलौकिकं चास्य पद्य-ग्रथन-सामर्थ्यम्। सर्वथा विरलाः खल्विदानीम् एवंविधाः सहृदयोत्तंसाः। इङ्ग्रेजीभाषायाम् अपि सुष्ठु प्रविष्टा मतिरेतस्येति तैस्तैरेतत् प्रणीतैः प्रबन्धैः प्रेरितैः पत्रैश्च शक्यते संभावयितुम्।

वेद-मार्ग-विरुद्धं प्रजल्पतां तद्द्वेषमात्रनिष्ठानां शिवाद्वैतद्वेषिणां च खण्डने महीयान् उत्साह एतस्य। समर्थश्चायं मतम् अमीषां विध्वंसयितुम्। एतच्चात्मनो व्रतम् एवेत्यमंस्तायम्। अत एवोक्तमेतेन—

'वेदविप्रशिवाद्वैतद्वेषिणो द्वेषिणो मम।
तन्निग्रहो यथामेधं स्थितं नक्तंदिवं व्रतम्॥ इति।

एष किल वर्तमानवत्सरे (१८२४ शाके) भगवतीं वाराणसीं प्रस्थातुं कामयामास। निरचैषीच्च श्रावण एवात्मनो मनोरथम् इमं पूरयितुम्। प्रत्यज्ञायि चामुना मित्रप्रकाण्डेन काशीतः प्रतिनिवृत्तोऽवश्यं कोल्हापुरम् आगमिष्यामीति।

सहृदयाः। अस्वतन्त्राः किल प्राणिनः। अतश्च नैतदाश्चर्यं यत् सर्वथा विनिश्चितकोल्हापुरागमनो निर्णीत-वाराणसी-प्रस्थानदिवसश्च श्रीश्रीनिवासदीक्षितमहाभागः परित्यज्यावश्यकान्यप्यात्मनः कार्याण्यविगणय्य च परमसुहृदां सौहार्दम् उज्झित्वा चात्मैकजीविताम् आशावतीं भगवतीं गिरां देवीं प्रतस्थे परं लोकम्। सर्वथा हताः स्मो वयं दुर्विधिना यदनवरतम् एवानेन कवलीक्रियन्ते पण्डितरत्नानि नैव पुनरपराण्युत्पाद्यन्ते। का गतिः? सम्प्रति पुनः कथं कथम् अपि निरुध्य दुर्निवारतमं सर्वतोमुखप्रसरम् इमं सुहृन्निधनशोकानलं प्रयच्छतु भगवान् गिरीन्द्रजा-जानिः समुचितं पदम् एतस्मा इति प्रत्याशास्य च दुर्भागधेयविपाकम् इव प्रबन्धम् इमम् उपसंहर्तुम् इच्छामः।" इति।

ईदृशः खलु आसीत् अयं महात्मा श्रीनिवासशास्त्रिमहाभागः। भूयिष्ठम् एव अवर्तत श्रीमताम् अप्पाशास्त्रि-विद्यावाचस्पतीनां महाभागेऽस्मिन् भक्तिसमेतः स्नेहः इत्येव तच्चरितविस्तरः अयम् अत्र प्रकटीकृतः। दुर्भागधेय-विपाक-निवेदनम् इदं मध्ये एव आपतितं क्षम्यतां प्रियपाठकमहोदारैः। प्रक्रान्तपूर्वं पन्थानम् इदानीम् अनुसरामः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१८. अतःपरं चैत्र एवारम्भमासः।**

नैकविधैः विपज्जातैः संयतानाम् अप्पाशास्त्रिणां संस्कृतचन्द्रिका अनियमितत्व-राहुणा ग्रस्ता अभवत्। यो नवम-खण्डः १८२३ शाक-वर्षीय-वैशाखम् आरभ्य १८२४ शकवर्षस्य चैत्रे परिसमाप्तुं योग्यः स किल इदानीं १८२४ तमस्य वर्षस्य आश्विने मासि परिसमाप्तः। १८२५ शाक-चैत्रे च नियमानुसारं दशमः खण्डः पूरयितव्यः। किन्तु नासीत् ग्राहकाणां परिपूर्णं साहाय्यम्। अवशिष्टे वत्सरार्धे प्रतिमासम् अङ्कद्वयं कथं प्रकाशनीयम्? नियतः मुद्रणालयश्च कथं स्थिरीभवितव्यः? कौटुम्बिकचिन्ता चेत्यादि-प्रतिबन्धकवशात् सोऽयं विचारः त्यक्तः अप्पाशास्त्रिभिः। नवमखण्डस्य किल संपूर्ति-निवेदने सुबहु समुपदिष्टाः ग्राहकाः। प्रकाशितम् एतेषां दातृत्वम्। तत्र च प्रोक्तम् अप्पाशास्त्रिभिः।

"सोऽयमस्याभिप्रायो ग्रन्थेष्यते संस्कृतचन्द्रिकाया अनियतसमयं प्रकाशनं सर्वथाऽस्माभिरेव दोषभाजनीभवितुम् इति। विना हि द्रविणं दुःसाध्यम् एव नियतकालं प्रकाशनं तस्याः। द्रविणं च नाम प्रियपाठक-महाभागानां कृपापाङ्गपरिपातम् अन्तरा सुदुर्लभम् एवैतस्याः। न किल वयं ब्रूमो न खलु कैश्चिदपि समर्प्यते मूल्यम् एतस्या इति। किन्तु प्रतिश-तकं पञ्चषा अपि नैवंविधा उपलभ्येरन् ये किल विनापि प्रार्थनां नियत-समयं मूल्यप्रदानेनागृह्णन्त्येनाम्। भूयांसः पुनर्द्वित्रिः प्रार्थिता अपि दृढ-तरनिबद्धमुष्टय एव निकामम् एवोदासते तत्प्रदानाय। अन्ततश्च व्ही.पी. द्वारा प्रेरितां षष्ठोत्तरां यां काम् अपि संख्यां स्वीकृत्य कृतार्थीकुर्वन्तु अस्माकम् आयासम्। एतेष्वपि पुनर्भूयांसस्तथाविधा एव यैः किल पूर्व-संख्याजातं स्वीकृतवद्भिरुपलब्धवद्भिश्चास्मदीयानि मूल्य-प्रार्थना-पत्राणि व्ही. पी. कृतां संख्यां प्रत्याचक्षाणैः कदर्थ्यमानानां प्रतिवत्सरम् एव प्रतिहन्यमानो नितान्तं लघूभवत्युत्साहोऽस्माकम्।

अन्वभावि किलामीषाम् अनेन लीलायितेन महीयसी हानिर् अस्माभिः। अत्र च हेतुभूतानां महोदाराणां नामान्यवश्यम् आगामिनीं संख्याम् आरभ्य यथावकाशं प्रकाश्येरन्। अवहीनाश्चन्द्रिकायाः कियत्य-श्चित्संख्याः। ताः पुनः सत्येवंविध एव समये न शक्येरन् संपादयितुम् इति तत्प्रयासं परित्यज्य पुनरपि चन्द्रिकाया वत्सराम्भमासं परिवर्तयितुम्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इच्छामः। अर्थाद् अतःपरं चैत्र एवारम्भमासोऽस्या इत्यवबोध्यम्।" इति। चन्द्रिकायाः वर्षमूल्यम् अपि दशमं खण्डम् आरभ्य पूर्ववत् एव न्यूनं संपन्नम्। तत् किल छात्रेभ्यः १ रु. ३ आ. तदन्येभ्यः च १ रु. ८ आ. इति।

१९. भारं लघूकर्तुम् ऋणस्य—

१८२४ शकवर्षस्य आश्विने मासि चन्द्रिकायाः नवमः खण्डः अप्पाशास्त्रिभिः पूरितः। दशमखण्डस्य प्रथमाङ्कः १८२५ वर्षीये चैत्र-मासे प्रकाशनीयः आसीत्। अर्थात् मध्ये षण्मासात्मकः अवधिः संप्राप्तः। समयः अयं नैकविधाभिः आपद्भिः पीडितैः क्वापि निर्जनस्थाने कोणे निपत्य वा अन्यं वा स्वीकृत्य नातिभारसहं व्यवसायं व्यतियापितः स्यात् अप्पाशास्त्रिभिः इति पाठकेषु भूयांस एव मन्येरन्। किन्तु कुतो नाम आस्ताम् एवंविधं विश्राम-भागधेयम् एतेषाम्?

चन्द्रिकाप्रकाशननिमित्तेन कौटुम्बिकापद्भिः च संजातम् ऋणं मूर्धानम् एषां संचूर्णयति स्म। अत एव परित्यज्य स्वाभिप्रेतं सरस-संस्कृत-प्रबन्ध-लेखनं मध्ये मध्ये व्यवसायान्तरम् अपि समाश्रितम् अप्पाशास्त्रिभिः।

निवेदितपूर्वम् एव १८१८ तमे शाकवर्षे श्रीमतः कालिदासस्य मालविकाग्निमित्रं नाम नाटकं व्याख्यातम् एतैः इति। तदेतत् १८२४ तमे शाकवर्षे मुम्बय्यां वेङ्कटेश्वर-मुद्रणालयाधिपतिना प्रकाशितम्। ऋणपरिहाराय खलु विक्रीतम् एतत् तस्मै। व्याख्या-समेतस्य पुस्तक-स्यास्य परिचयः प्रदत्तपूर्वः एव।

धनलाभार्थं द्वितीयोऽपि एतैः कश्चित् आरब्ध समुद्यमः। अयं च नाम पुराणानां महाराष्ट्रभाषया अनुवादः। वाई-क्षेत्रे **पुराण-प्रकाशन-मण्डली** नाम एका संस्था आसीत्। अस्याः कृते श्रीविष्णुपुराणस्य महा-राष्ट्र-भाषानुवादः प्रारब्ध एतैः।

धनलाभार्थं यथा किल केऽपि उद्यमाः प्रक्रान्ताः अप्पाशास्त्रिभिः तथैव संस्कृत-चन्द्रिकायाः नियमावली अपि मनाग् इव परिवर्तिता। नवमखण्डीय-चन्द्रिकायाः प्रवृद्धं मूल्यं दशमखण्डे पूर्ववत् एव जातम् इति कथित-पूर्वम्। तत्रत्याः केचित् प्रधानाः नियमाः यथा —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

" (अ) ये तु छात्रत्वेन चन्द्रिकां जिघृक्षन्ति तैरात्मनश्छात्रत्वे यस्य कस्यापि राजपुरुषस्य प्रमाणपत्रं प्रेर्यम् । यश्च गुरोः सकाशाद् अधीते स एव च्छात्रः । यस्तु राजकीयादिकर्मसु नियुक्तः स न च्छात्रत्वेन स्वीक्रियेत यद्यप्यधीयमानः । अतः प्रमाणपत्र एतदवश्यं निर्देश्यम् ।

(ई) राजभिर्महाराजैः सांस्थानिकैर्ग्रामणीभिश्च देयं चन्द्रिकामूल्यं दशरूपकतो न न्यूनम् ।

(उ) य एकत्र दशखण्डानि क्रीणीयात् स विनामूल्यम् एकं खण्डं विन्देत ।

(ए) साम्प्रतं सुपरीक्ष्यैव चन्द्रिका प्रेर्यते । तथापि यदि कथंचित् केनचिन्न लभ्येत तदा तेनापरां संख्यां प्राप्य द्विसप्ताहाभ्यन्तर एव सूचनीया वयम् अन्यथा विनामूल्यं संख्या न लभ्येत । " इति ।

एवं ग्राहकाणां कृते नियमान् संस्कृत्य विज्ञापन-प्रकाशन-नियमाः अपि व्यवस्थापिताः । तेन इतःपरं संस्कृतचन्द्रिका काम् अपि परिष्कृताम् अवस्थां प्राप्नोत् ।

## २०. "A First Class Journal" "**प्रथमश्रेणीका पत्रिका**"

संस्कृतचन्द्रिकास्थान् विलोक्य प्रबन्धान् यथा वङ्गीय-विद्वद्भिः **विद्यावाचस्पतिः** इति बिरुदम् अप्पाशास्त्रिभ्यो वितीर्णं, यथा च वाराणसेय-**भारत-धर्म-महामण्डलेन** चन्द्रिका 'मुखपत्रम्' इति स्वीकृता, तथा आङ्गलभाषापण्डितेषु अपि संस्कृतप्रेमिकाणां मनांसि प्रमोदितानि अभूवन् । मद्रासनगर्यां प्रकाशिते 'हिन्दु' इति आङ्गलभाषामये पत्रे श्रीमान् टी. रङ्गस्वामी अय्यङ्गारमहोदयः चन्द्रिकाम् अधिकृत्य समुल्लिखति स्म ।

"The articles published in it are very interesting and will do honour to a first class Journal in England by the variety and range of the subjects treated in them " इति ।

अस्यायं भावः —

" चन्द्रिकायां प्रकाशिताः प्रबन्धाः सुतरां रोचकाः सन्ति आवहन्त्येव च विषयाणां वैविध्येन च व्यापकत्वेन च इङ्गलण्डदेशे प्रकाशितानां प्रथमश्रेणीकानां पत्रिकाणां गरिमाणम् । " इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन बहु-विषय-व्यापिनी समृद्धा पत्र-प्रचार-कला अपि विद्या-वाचस्पतीनां स्पष्टा भवति।

## २१. महावस्त्रम्।

वङ्गेषु दिनाजपुरं नाम किञ्चित् नगरं वर्तते। तत्रत्यस्य तदानीन्तनभूपतेः **श्रीगिरिजानाथ-रायबहादूरनाम्नः** आशीर्वाद-मङ्गलार्थं श्रीअप्पाशास्त्रिभिः कियन्ति अपि पद्यानि प्रणीय चन्द्रिकायाः दशम-खण्डस्य तृतीयादिषु अङ्केषु प्रकाशितानि। दिनाजपुरीय-भूपालस्य आस्थानपण्डिताः **श्रीमहेशचन्द्रतर्कचूडामणि**महाभागाः अप्पाशास्त्रिणां सुतरां परिचिताः एव आसन्। अनेनैव महात्मना "**अप्पाशास्त्रिणि दीप्येत मन्ये संस्कृत-चन्द्रिका**" इति आशंसनं विहितपूर्वम्। अस्य च भगवच्छतकं, काव्य-पेटिका इत्यादीनि काव्यानि चन्द्रिकायां समालोचितानि अप्पाशास्त्रिभिः। एवं कविपण्डितानाम् आश्रयप्रदाता **दिनाजपुरभूपः** रसिकाग्रणीः आसीत्। दृष्ट्वा च चन्द्रिकागतं पद्य-प्रबन्धं संतुष्टः अयं श्रीअप्पाशास्त्रिभ्यः ७० रूप्यकमूल्यात्मकं महावस्त्रं समर्पयामास।

यथा किल प्रतिज्ञातपूर्वम् एवं १८२५ शाकवर्षस्य चैत्रे मासे दशम-खण्डस्य प्रारम्भः बभूव। अस्मिन् किल वत्सरे कुटुम्बकम् अप्पाशास्त्रिणां **गगनबावडानगरे** एव आसीत्। केवलं कार्याणि निर्वर्तयितुम् एव कोल्हा-पुरे गतागतम् एतेषां प्रावर्तत। दशमखण्डीय-चन्द्रिकायां श्रीमदप्पा-शास्त्रिणां **मातृगोत्रवर्जननिर्णयः** इति प्रबन्धः प्रकाशितः। एषः एव पुन-रपि स्वतन्त्रपुस्तकरूपेण कोल्हापुरे विद्याविलासयन्त्रे संमुद्रितः।

## २२. विष्णुपुराणार्थः प्रकाशितः।

वाई-क्षेत्रवर्ति-पुराण-प्रकाशन-मण्डल्याः कृते प्रतिज्ञातं विष्णुपुरा-णानुवादकार्यं समापितम् अप्पाशास्त्रिभिः। प्रकाशितं चैतद् अस्मिन् १८२५ तमे शकवर्षे। अनुवादकार्यं पुनः इदं मार्गशीर्ष-मासे शुक्लत्रयो-दश्यां सोमवारे समाप्तम् अभवत्। अनुवादः खल्वयं टिप्पनीभिः परिपूर्णः। टिप्पनीषु आधुनिक-वैज्ञानिकानां संवादाः अपि समुद्धृताः। भूगोलवर्णने प्रस्तुत-कालिकी स्थितिः परिशीलिता। खगोलवर्णनेऽपि तथैव। यथा



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आर्याणां ज्ञान-विज्ञान-रहस्यानि रोचकानि भवेयुः एवम् अवधानं सुरक्षितम्। अनुवादारम्भे सुविस्तृता महाराष्ट्र-भाषामयी प्रस्तावना लिखिता अप्पाशास्त्रिभिः, यत्र पुराणानां परिचयः, स्वरूपं, विष्णुपुराणस्य वैशिष्ट्यं चेत्यादि प्रतिपादितम्। अनुवादावसाने संस्कृतपद्यमयः उपसंहारः कृतः। तानि खलु सर्वाण्यपि पद्यानि पठनार्हाणि। तत्र कान्यपि यथा—

"सुदूरं यद् वाचां प्रसरति न यस्मिन्नपि मनः,
कदम्बं मानानां न भवति परिच्छेत्तुमपि यत्।
गुणातीते नित्ये भव-विलय-हेतौ सुखमये
कदा तस्मिञ्शैवे महसि बत लीयेय नितराम्॥

सुखमयतु नितान्तं भारतं वर्षमेतत्—
न भवतु मलिना धीः क्वापि कस्यापि जन्तोः।
कथमपि न मिथः स्ताद् बाधकं वर्णजातं
जयतु भुवि नितान्तं वेदमूलश्च धर्मः॥

कल्पद्रु-नेत्र-वसु-भूमि-मिते शकेऽसौ
श्रीशालिवाहनृपतेरपि मासि मार्गे।
शैवे तिथौ सित-दले तु हिमांशुवारे
पूर्णोऽनुवाद इह विष्णुपुराण-मूलः॥

अतः प्रमोदो भविता सतां चेत्
खलः प्रकामं किल रारटीतु।
सौहित्यमाप्तेषु सुमन्धयेषु
पद्मस्य किं दर्दुरघोषजालैः?" इति।

उपसंहारपद्यानि इमानि श्रीमदअप्पाशास्त्रिणां व्यक्तित्वं विशेषतः स्पष्टीकुर्वन्ति। एषु हि शिवभक्तिः, भारतप्रणयः, धर्मश्रद्धा, सौजन्यं सौहित्यं चेति गुण-गण-व्यञ्जकत्वं चकास्ति।

अयम् अनुवादः पुराण-प्रकाशन-मण्डल्यै विक्रीतः एतैः। सर्वोऽपि अयं प्रयासः चन्द्रिका-प्रचारार्थं धनार्जनाय एव।

विष्णुपुराणानुवादानन्तरम् मनागिव विश्रामः स्वीकृतः अप्पाशास्त्रिभिः। १८२५ शाकीये माघे मानविक्रमाय प्रेषिते पत्रे वर्तते—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"कालेन यत् स्तोकतमेन सर्वं, पुराणमासीद् अनुवादनीयम् ।
श्रीवैष्णवं तेन नरेन्द्रधुर्या, नालभ्यतैवावसरः कुतोऽपि ॥
समाप्य तत् संप्रति विश्रमार्थं, सुखं समीहे समयं कियन्तम् ।
अतोऽधुना संलपितुं सखीन्द्राः ! समं भवद्भिर्लिखितैर्यतिष्ये ॥
पुनः पुराणं च भविष्य-संज्ञं नृपप्रकाण्डा ! अनुवादयिष्ये ।
भारं लघूकर्तुमृणस्य मूर्ध्नि स्थितं गरीयांसमजस्रमेव ॥ इति ।

## २३. खलः प्रकामं किल रारटीतु ।

अप्पाशास्त्रिणां विष्णुपुराणानुवादसमाप्तेः प्रागेव पुराणप्रकाशन-मण्डल्याः अनुवादादर्शः प्रकाशितः । दृष्ट्वा पुनः आदर्शम् एनं वाईक्षेत्रे प्रकाश्यमाने महाराष्ट्रभाषामये धर्म-संज्ञके वृत्तपत्रे तत्संपादकैः किमपि आक्षिप्तम् । एषः एतेषाम् आक्षेपस्य भावः —

'पुराण-प्रकाशक-मण्डल्या यः तावत् संस्कृतचन्द्रिकासंपादकैः प्रणीतः इति विष्णुपुराणानुवादः प्रकाशितः, सः तु न तेषां भवितुम् अर्हति, इति अस्माकम् आसीत् अभिप्रायः । अयं पुनः अस्मदीयः अभिप्रायः समीक्ष्य संस्कृतचन्द्रिकायाः प्रथमाङ्कम् एतद्वर्षीयं सुदृढो जातः । नवमवर्षस्य अन्तिमे अङ्के नियतकालं चन्द्रिकाङ्कानां प्रकाशनं प्रतिश्रुत्य अपि प्रायः मासाष्टकं समतिक्रम्य एव दशम-वर्षीय-प्रथमाङ्कः आत्मनः प्रकाशनं लेभे । एवं यैः स्वकीय-कार्यार्थम् एव सप्ताहमात्रम् अपि न लभ्यते, ते एते अपरेषां भाटकमात्रसाध्यं कर्म पूरयितुं यथेच्छं समयं प्राप्नुवन्ति इति आश्चर्यम् एतत् । किं च मण्डल्या प्रकाशिते अनुवादादर्शे यः इत्थंभावः सोऽयम् आत्मनः चन्द्रिका-संपादक-प्रणीतत्वं नैव दर्शयति । अतः अनुवादः अयं नूनं नैव चन्द्रिका-संपादकैः प्रणीतः इति मन्तुं न काचित् आपत्तिः ।' इति ।

विलेखनम् एतत् धर्म-संपादकानां विचारदैन्यम् इव द्योतयति । चन्द्रिकायाः प्रकाशन-विलम्बनं बुद्ध्यैव कृतम् अप्पाशास्त्रिभिः । तत्-कारणम् अपि निर्दिष्टमेव तैः । वत्सरारम्भमासः पुनः चैत्रः एव इति अपि निवेदितपूर्वम् एव । अत एव मध्ये कतिचित् मासान् यावत् चन्द्रिका न

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकाशिता। इमम् एव व्यवसायं निरीक्ष्य विष्णुपुराणानुवादोपसंहारे प्रोक्तम् अप्पाशास्त्रिभिः —

**'अतः प्रमोदो भविता सतां चेत्, खलः प्रकामं किल रारटीतु॥'** इति।

**२४. मुद्रणप्रकाशनस्थानस्य पुनः पुनः परिवर्तनम्।**

चन्द्रिकायाः मुद्रणं वाईक्षेत्रे प्रकाशनं च कोल्हापुरे आसीत् इति ज्ञातचरम् एव पाठकानाम्। कोल्हापुरे दुर्भिक्ष-ग्रन्थिज्वरादि-सत्त्वात् चन्द्रिकायाः प्रकाशनम् अपि वाई-नगरे एव कर्तव्यम् इति अभिलषितं श्रीअप्पाशास्त्रिभिः। किन्तु कोल्हापुर-त्यागे गगनबावडाधीश्वराणां श्रीमतां **माधवरायाणां** संमतिः नैव आसीत्। अत एव तैः कोल्हापुरे स्वकीय-प्रासादे एव सपरिवाराणाम् अप्पाशास्त्रिणां निवासादेः व्यवस्था कृता। अतः १८२६ शाकीय-चैत्रम् आरभ्य संस्कृत-चन्द्रिकायाः कार्यालयः श्रीमत्-पन्तामात्यानां प्रासादे समागतः। मुद्रणं तु कोल्हापुरे अशक्यम् इति वाईक्षेत्रे एव पूर्ववत् निश्चितम्। किं तु वाईक्षेत्रेऽपि ग्रन्थिज्वरोपघातं दृष्ट्वा एकादशखण्डस्य प्रथमाङ्कचतुष्टयं कोल्हापुरे एव विद्याविलास-मुद्रणालये मुद्रयितुम् उपक्रान्तम्। किन्तु ग्रन्थिज्वर-प्रभावात् तस्य अधिपतिः दिवं गतः इति चन्द्रिकायाः अवशिष्टांशं समर्थ-मुद्रणालये संमुद्रच प्रकाशिताः अप्पाशास्त्रिभिः युगपद् एव प्रथम-द्वितीय-तृतीय-चतुर्थाङ्काः। ततः प्रभृति च पुनरपि वाई-नगरे मोदवृत्त-मुद्रणालये चन्द्रिकायाः मुद्रणालयस्य सौकरी संपादिता। एवं वाईक्षेत्रे चन्द्रिकायाः शाखाकार्यालयः समुद्घाटितः।

**२५. चन्द्रिका पत्रप्रापणाधिकरणेन संहितपत्रे निवेशिता।**

अद्य यावत् पुनः पुनः प्रार्थ्य अपि संस्कृतचन्द्रिकायाः संवादपत्रोचितं स्थानं पत्रप्रापणाधिकारिभिः न दत्तम् आसीत्। एतद्वर्षारम्भे तु पत्राधिकरणिकैः स्वीये संहितपत्रे चन्द्रिकायाः नाम निवेशितम्। चन्द्रिकायाः संहिता-निविष्टः क्रमाङ्कः बी१७५ (Registered Number B.175) इति निश्चितः। पत्र-प्रापणिकायाः नियमानुसारेण वार्ता-मुद्रणं तावत् नियतं बभूव। यद्यपि मासिकपत्रिकायां वाचस्पतिभिः नैव अभीष्टम् एतत् तथापि गत्यन्तरविनाकृतैः तैः एतद्विषये चन्द्रिकाग्राहकाः एवं विज्ञापिताः —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"अतःपरं प्रतिमासम् एव याते यामे नीरस-प्रायताम् आवहन्तः संवादा अपि पत्रप्रापणाधिकरण-नियमानुसारेण प्रकाशनीयाश्चन्द्रिकायाम् इति, मा भूत् ततो हानिः प्रियपाठक-महाभागानाम् इति सूक्ष्मैरेवाक्षरैः चन्द्रिका मुद्रयितुम् आरब्धाऽस्माभिः। अतश्च सत्यपि वार्तानां संनिवेशे तद्विनाभूतो वाग्गुम्फो यावान् पुरा तावान् एवातःपरम् अपि वाचकैः लभ्येत।" इति। अत एव चन्द्रिकायाः एकादशं खण्डम् आरभ्य प्रत्यङ्कं नियमेनैव वार्ता-प्रकाशनं प्रारब्धम् अप्पाशास्त्रिभिः। एतत् पुनः तेषाम् उद्देशस्य अंशतः पूरकम् एव बभूव। देशवृत्तान्तादि-विषये पण्डितानां प्रायः औदासीन्यम् एव आसीत्। वार्तामिषेण पुनः श्रीमदप्पाशास्त्रिभिः नानाविध-वृत्तान्ताः संस्कृत-चन्द्रिका-पाठकानां नयनगोचरीकृताः। अनेन पण्डितेषु वार्ता-वाचन-विषयकं कौतूहलं समुत्पन्नम्।

२६. चन्द्रिकायाः सहजीविन्यः।

एकादशखण्डस्य नव्यवत्सरारम्भः इति नामके लेखे अप्पाशास्त्रिभिः संस्कृत-पत्रिकाणां पुरावृत्तं संक्षेपेण उपनिबद्धम्। यथा —

"प्रियपाठकमहाभागाः! यदा किल लब्धवत्यात्मानं संस्कृत-चन्द्रिका भारतवर्षीय-राजधान्यां कलिकातायां, तदा, वङ्गेषु विद्योदयः, केरलेषु च विज्ञानचिन्तामणिरिति द्वे एव संस्कृतभाषामय्यौ नानाविध-नव्य-प्रबन्ध-भासुरे पत्रिके समभूताम्। ततः परं तु पदुकोटायां संस्कृत-पत्रिका नाम मासिकपत्रं प्रादुरभूद् यदस्तीदानीम् अपि प्रकाशमानम्। तदनु च ग्वाल्हेरनगरे काव्यकादम्बिनीनाम तत्रत्यविद्वज्जनसमित्या प्रकाश्यमाना केवल-समस्या-पूर्तिमयी पत्रिका प्रादुरभूत्। सा च इयं प्रथम एव वत्सरे नामशेषतां गतवतीत्यहो दुर्भाग्यं संस्कृतभाषायाः। अस्याः च नामशेषी-भावो विदुषाम् अपि ऐकमत्याभावं प्रकाशयन् प्रकम्पयतितमां भारत-वर्षीयोन्नति-कामुकानां हृदयम्। विलीनायां च अस्यां तत एव सहैव विषयान्तरेण समस्यापूर्तीः प्रकाशयन्ती विद्वत्कला नाम पत्रिका प्रकटी-बभूव। किन्तु साऽपि तथाविधाम् एवावस्थितिमनुप्रपन्ना निराशयति विद्वत्-कलाभिलाषुकाणाम् अन्तरङ्गम् इति सविषादम् एवावेद्यतेऽस्माभिः। ततः परन्तु हृदयग्राहि-पदविन्यास-विलासा सुश्लोकपरिमण्डिता निरन्तरपरि-स्पन्दमानाक्षरपीयूषपरिवाहा रसिक-जनहृदयाह्लादननिपुणा रसिकप्रिया

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

च **मञ्जुभाषिणी** नाम संस्कृत-संवाद-पत्रिका काञ्चीतः प्रतिमासं प्रचरितुं प्रावर्तत । सा च इयं ततः परं पाक्षिकतां तदनु च साप्ताहिकताम् उपगता नितान्तम् एव प्रमोदयत्यन्तरङ्गाणीदानीं प्रेयसां स्वीयानाम् । अथ इदानीं वत्सरेऽस्मिन् श्रीकाशीनगराद् **विद्वद्गोष्ठी**-पत्रिका जयपुरात् **संस्कृत-रत्नाकरो** भूतपूर्वा **विचक्षणा** चेति संस्कृत-भाषामय्यो मासिक-पत्रिकाः प्रादुःषन्त्यः सुस्थिरीकुर्वन्तितमां जीवितं संस्कृतभाषायाः । एवमेव चेत् समुत्सहेरन् भारतवर्षीयास्तत्तद्देशीया विद्वांसस्तदा मन्यामहे प्रत्यासन्न एव पुनरभ्युदयो भगवत्याः संस्कृत-भाषाया इति । अशेषा अप्येताः सह-जीविन्यश्चन्द्रिकायाः सुचिरमेव जीवन्तु विन्दन्तु च प्रतिदिनम् अधिकाधिकम् एवाभ्युदयम् इत्याशास्महे । " इति ।

## २७. नीवी-धन-व्यवस्था ।

संस्कृत-चन्द्रिकायाः नियतप्रचाराय भाण्डद्रव्यम् अपेक्षितम् आसीत् । यदि नाम केनचित् प्रतिबन्धकेन नियते मुद्रणालये संमुद्रणम् अशक्यं भवति, तर्हि तदानीं कस्मिन्नपि अपरस्मिन् मुद्रणालये सद्योधनदानेन तद् एतत् सुशकं भवति । अत एव चन्द्रिकायाः तादृशी व्यवस्था समभिलषिता अप्पाशास्त्रिभिः । अस्याश्च योजनायाः अष्टम-प्रभृति-दशमखण्डान्तं यावत् चन्द्रिकायां प्रकटनम् अभवत् । इत्थम् एषा योजना —

" विशेषतो द्रष्टव्यम् ।

विना भाण्डद्रव्यं न किल संस्कृत-चन्द्रिका यथावसरं प्रकाशयितुं शक्या । तच्च द्रव्यं सहस्र-त्रितयात्मकम् अपेक्ष्यते । अस्य च शतं विभागाः । त्रिंशद्रूप्यकात्मकश्चैको भागः । यश्च भागम् एकम् अङ्गीकृत्य संस्कृत-चन्द्रिकाम् अनुगृह्णीयात् प्रेरयेच्च तद् उचितं द्रव्यं स विनामूल्यं चन्द्रिकां विन्देत यावन्न तद् द्रव्यं प्रतिलिप्सेत । सत्यां च प्रतिलिप्सायाम् अपेक्षित-दिवसतो मासद्वयात् प्राङ्निवेदने यथासमयम् एव तत् शक्यते प्रतिप्रदातुम् । आदानदिनाद् आरभ्य वत्सरद्वयतः प्राक् तु नैतत् प्रत्यर्प्येत । यश्च भागद्वयं भागत्रयं वैकत्र गृह्णीयात् स प्रतिभागम् एकरूप्यकमूल्यं संस्कृत-भाषामयं पुस्तकं प्राचीनं वा कमपि संस्कृत-चन्द्रिकायाः खण्डं विना मूल्यम् अधिगच्छेत् । प्रेरणव्ययम् अप्यमुष्य वयमेव विधास्यामः । " इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अस्याः योजनायाः दाक्षिणात्यैः कैश्चित् पण्डितप्रवरैः स्वागतं कृतं स्वीकृताश्च विभागाः एतैः । यथा उक्तम् अप्पाशास्त्रिभिः —

'उपक्रान्तं चैतन्नीवीधनग्रहणकार्यं निसर्गत एव दक्षिणैर्दाक्षिणात्य-पण्डितप्रवरैः इति संतुष्यामः । यैश्च स्वीकृत्य नीवीधनविभागान् प्रदत्तावलम्बनेयं (चन्द्रिका) समुज्जीवितप्रायाऽवश्यं किलैषां नामानि निर्दिश्य प्रकाशनीय एतेष्वात्मनः कृतज्ञभावश्चन्द्रिकयेति प्रवर्ततेऽसाविदानीं तथाऽनुष्ठातुम् । ते चामी महाभागाः – १ अभिनवभट्टबाणाद्युपाधिमण्डितः पण्डितः श्री. आर्. व्ही. **कृष्णमाचार्य**महोदयः ( त्रिचनापल्ली ) २. पण्डितरत्नं महाविद्वान् श्री**कस्तूरिरङ्गाचार्य**-तर्कतीर्थ-महाभागः ( मैसूर ) ३. पण्डितप्रकाण्डः श्री**यज्ञस्वामिशास्त्रि**महाशयः ( मन्नारगुडी ) ४. पण्डितः **एस्. बी. श्रीकृष्णमूर्ति**महाभागश्च ( बेङ्गळूर ) इति । "

पूर्वोक्तं भाण्डद्रव्यविज्ञापनं तद्विभाग-ग्रहीतॄणां नामावली च इतःपरं प्रत्यङ्कम् एव प्रकाशयितुम् आरब्धा अप्पाशास्त्रिभिः । एवं १८२६ शकवर्षारम्भतः एकादशखण्डात् प्रभृति चन्द्रिका प्रायः स्थैर्यम् आप्तवती ।

यथा किल केऽपि समवलम्ब्य चन्द्रिकाम् आत्मनः औदार्यं प्रकाशयामासुः, एवं नीवी-धन-व्यवस्थां विनिनिन्दुः अपि केचित् । अत्र तावत् **मञ्जुभाषिण्याः** संपादकः आक्षेपकः अभूत् । उक्तं खलु अनेन 'नीवीधन-संपादन-प्रवृत्तिः खेदाय भवत्यस्माकम्' इति । प्रत्युक्तं च अप्पाशास्त्रिभिः — 'न जानीमः को वाऽत्र हेतुः खेदस्येति । यद्यपि स्वयं श्रीलेनात्मन एव मुद्रायन्त्रे कथंचिद् विनैव व्ययं स्तोकेन वा व्ययेन **मञ्जुभाषिणीं** मुद्रयता तस्याः संपादकेन न स्यात् प्रतीतं कुतो वा नीवी-धन-सापेक्षत्वं पत्रिकाप्रकाशनस्येति, तथापि पदे पदे तत्प्रकाशने क्लेशम् अनुभवन्तो जानीम एव वयं तस्य तथाविधत्वम् । **सति हि निजायत्ते मुद्रायन्त्रे प्रतिसप्ताहं द्विस्त्रिरपि वा मञ्जुभाषिणी-समानाकारां पत्रिकां विनैव** नीवीधनं प्रकाशयितुं प्रभविष्यामः ।' इति ।

एवं नीवीधन-व्यवस्थायाम् आक्षेप-प्रदान-दक्षान् प्रत्याक्षिप्य निर्दर्शितः अप्पाशास्त्रिभिः स्वीयो दुर्दम्य उत्साहः ।

## २८. हृदये नः प्रणयाधिदेवता ।

एवं चन्द्रिकायाः सौभाग्य-परिवर्धन-निरतैः अप्पाशास्त्रिभिः न गणितं कुटुम्बं, न लक्षिताः उपहासाः, न साक्षात्कृताः श्रीमत्खलाः, न संमानितः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्याधिः, न वा सत्कृता आत्मनः प्रेयसी अपि। 'चन्द्रिका नाम परे प्राणा अस्माकम्' इत्येषः अयम् आसीत् अप्पाशास्त्रिणां घण्टा-घोषः। तत एव ताम् एव परिष्कर्तुं प्रयतमानानाम् एषां तदितरेषु व्यवसायेषु साहजिकम् एव समभूत् अनवधानम्। अत एव निर्धनतया व्याप्ताः इमे न परिवारम् आत्मनः यथार्हं संभावयितुम् अपारयन्। अस्याम् अपि दरिद्रता-महानद्यां यस्याः किल समवलम्बनात् प्रयतितम् उत्तर्तुं संसारसागरं, सेयम् एतेषां प्रथमपत्नी एवासीत्। इदानीमपि, तस्याः परलोक-प्रयाणोर्ध्वं गतवति अपि वत्सरत्रये, संघटितेऽपि पुनरपि दारपरिग्रहे, न किल प्रथमा हृदयम् एषां व्यक्तवती। स्मृत्वा स्मृत्वा च पुनः एनां व्याकुलिताः भवन्ति स्म वाचस्पतयः। अवश्यम् एव प्रणयाधिदेवताम् इमाम् अधिकृत्य काव्यं प्रणेतव्यम् आसीत् एतैः। किं तु कुतः एतावन्तम् अवसरं प्रदद्यात् निसर्गत एव वामप्रवृत्तिः विधिः? एतस्मिन् खलु वत्सरद्वये नानाविधाभिः आपद्भिः परिवृताः अप्पाशास्त्रिणः कथंचित् इदानीम् एव किम् अपि स्वास्थ्यं नाम भजन्ते स्म। ऋणनिर्यातनाय स्वीकृताः पुराणानुवादादयः व्यवसायाः क्षणमात्रम् अपि एताम् न विरहयामासुः। तत्प्रभावात् एव चन्द्रिकायाः अपि दशमखण्डीय-प्रबन्धभासुरत्वं न्यूनम् अभवत्। उक्तं हि विद्या-वाचस्पतिभिः संस्कृत-चन्द्रिकायाः एकादशखण्डस्य उपक्रमे —

'चन्द्रिका हि नाम परे प्राणा अस्माकम्। तथापि कुतोऽप्यनिर्वचनीयतः प्रतिबन्धकातिशयान्नियन्त्रित-प्रायेवातीतवत्सरेऽस्माकं लेखनी निपातितवती चद्रिकां च अस्मांश्च वचनीयपङ्क इति व्यषीदत्तमां नश्चेतः।' इति।

विषयान्तरनिरुद्धा पुनः लेखनी वल्लभा-विषयकं विलापं कथम् अवतारयतु? तथापि इदानीं काम् अपि सौकरीं लभमाना लेखनी एतेषां 'वल्लभविलापं' नाम काव्यं प्रासूत। अनुभूयतां तावत् अत्रत्यं कारुण्यं रसिकैः —

**'प्रणयात् परिचिन्तिताऽनिशं, प्रणयं या स्म पुरानुपुष्यति।**
**गुणवत्यधुनाऽऽविरस्तु सा, हृदये नः प्रणयाधिदेवता॥**
**दयिते सखि जीवितेश्वरि, प्रियकान्ते गुणजालशालिनी।**
**सकृदप्युपगत्य विक्लवं, ननु संभावय वल्लभं निजम्॥**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनुकूलतमा जहार यद्, भवती मामकमन्तरं रहः ।
स्मृतमप्यधुना तदङ्गने, समवस्कन्द्य निहन्ति मे मनः ।।
जन एष विनाकृतस्त्वया, न सर्वान् रञ्जयते यथापुरम् ।
विकलः सखि माधवश्रिया, सहकारः किमु लोभयेन्मनः ।।
अथ चेद् वसुधातले न ते, वसती रोचत एव भामिनि ।
त्रिदिवेऽपि वसामुनाऽनिशं, दयितेनैव समं दयावति ।।
सोऽयं जनोऽप्यनतिपातितकालमेव
संभावयेदवनताङ्गि दिवि स्वयं त्वाम् ।
संचिन्तितेषु विपुलेषु मनोरथेषु
पापो न चेद् वितनुयाद् विधिरन्तरायम् ।।" इति ।

काव्यं किल एतत् एकचत्वारिंशत्-पद्य-युक्तम् । तत्रत्यानि कानिचित् पद्यानि रसिकेभ्यः उपहृतानि । इदं च राघवम् अजविलापं, कौमारं रति-विलापं च अनुकरोति ।

## २९. संवाद-वैचक्षण्यम् ।

संस्कृत-चन्द्रिकायाम् एकादशखण्डम् आरभ्य संवादलेखनं विशेषतः समारब्धम् । शीर्षकं पुनः अस्य स्तम्भस्य ' संवाद-संग्रहः संपादकीयाभि-प्रायश्च । (NEWS AND NOTES )' इति आसीत् । अस्मिश्च स्तम्भे राजकीय-सामाजिक-शैक्षणिक-व्यावसायिक-प्रभृतिविषयकाः वार्ताः प्रका-शम् आसादयामासुः । तत्र तत्र संपादकीयाः अभिप्रायाः अपि प्रकाशिताः । अत्र सर्वत्र दृश्यते श्रीमदप्पाशास्त्रिणां किमपि कौशल्यम् । अयं तावत पठ्यतां साभिप्रायः संवादः – ( चं. ११।१-४ )

" इतः परं मोहमयी-विभागे व्यवहारोपजीविनो न परीक्ष्येरन् । पदे पदे हि प्रदेशेऽस्मिन् इदानीं त एते भूयसा दृश्यन्ते । नास्ति चेतोऽ-प्यधिकानाम् अमीषामपेक्षेति । यां यां खल्विदानीं भारतवर्षीया जिविकां पश्यन्ति तां तामविचारितम् एवानुधावन्ति सर्वेऽपि। नैव पुनर्व्यवसायान्तरम् आलम्बन्त इति नैतत्परोक्षं कस्यापि। चेष्टितेन पुनः अमुना संविभक्तैक-व्यवसायलाभा न किल केऽपि सुखं नाम जीवन्तीति सुष्ठु खल्वेतदनुष्ठितं मोहमयी-विभागीयेन न्यायाधिकरणेनेत्यभिप्रेमः । अथेदानीमपि तावदुन्मी-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ल्यतां चक्षुरेतद्विभागीयैः समवलम्ब्यन्तां चापरे व्यवसाया इति प्रार्थयामहे।" इति। संवादम् इमम् अनुवाचयितॄणां सुज्ञानां मनसा सहजबोध्यम् इदं वैशिष्ट्यम् —

१. संवादस्य भाषायाः सरलत्वम्। २. अभिप्रायस्य सुबोधत्वम्। ३. शासन-निर्णयस्य अभिनन्दनेन सह स्वजनानां साभिप्रायः उपदेशः — आर्थिक-स्वातन्त्र्यप्रदाः एव राष्ट्रहितकराः व्यवसायाः समालम्ब्यन्ताम्, इति। ४. सर्वत्र अप्पाशास्त्रिणां वैशिष्ट्यभूतं भाषा-सौष्ठवं विद्योतते। एवं संवाद-संपादनेन समुचिताभिप्राय-प्रकटनेन च श्रीमदप्पाशास्त्रिणां पत्र-प्रचार-कौशल्यं परां कोटिम् आरूढम्।

न केवलं पुस्तकान्येव समालोचनार्थम् आगतानि अप्पाशास्त्रिणां सकाशे किं तु औषधादयः पदार्थाः अपि। संदृश्यते हि एकादश-खण्डस्य द्वादशे अङ्के संवादेषु 'पुरुषानन्दवटी' इति कोऽपि संवादः। तत्र हि प्रोक्तम् एतैः — 'मथुरायां श्रीमता मिश्रमनोहरलाल-महाशयेन विनिर्मितं भेषजमेतत् समालोचनार्थम् अस्मत्समीपम् उपागतम्।' इति। एतेन आयुर्वेदज्ञत्वेन अपि कामं प्रसिद्धाः अभवन् विद्यावाचस्पतयः इति विज्ञायते। पञ्चम-खण्डस्य विवरणेन पूर्वं ज्ञातमेव अत्रत्यं तथ्यं वाचकमहाभागैः। गच्छता पुनःकालेन समधिकं वैशारद्यं श्रीअप्पाशास्त्रिषु समृद्धम् अभवत् इति नैतत् आश्चर्यम्।

### ३०. मातृगोत्रवर्जननिर्णयप्रकाशः।

अतीते हि वर्षे मातृगोत्रवर्जननिर्णयः नाम धर्मशास्त्रमीमांसाविषयकः प्रबन्धः अप्पाशास्त्रिभिः प्रणीतः। सोऽयं चन्द्रिकायां प्रकाश्य अपि, महत्त्वं किमपि बिभर्ति इति पृथक् पुस्तकरूपेण अपि प्रकाशम् आससाद, इति निवेदितपूर्वम् इदम् अस्माभिः। अस्मिन् च प्रबन्धे प्रतिपादनभूतः सिद्धान्तः प्रबन्धोपसंहारे विलिखितः —

**'विधिनानुगृहीतोऽयं शिष्टैराचर्यते सदा।**
**स मातुल-सुतोद्वाहो नांशतोऽपि विगर्हितः॥'** इति

एवं श्रीअप्पाशास्त्रिणः मातुल-सुतोद्वाहस्य समर्थकाः आसन्। एतत्खण्डनार्थं 'मातृगोत्रवर्जननिर्णयखण्डनम्' इत्याख्यः प्रबन्धः अङ्कोलावासी पं. श्री. **ओडलमने**शास्त्रिभिः प्रणीतः। अस्य पुनः खण्डनं कृत्वा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वीयः पक्षः सम्यक् प्रसाधितः अप्पाशास्त्रिभिः । सः एषः खण्डनमण्डनात्मकः प्रबन्धः चन्द्रिकायाः, दशमखण्डे प्रारभ्य अस्मिन् एकादशे खण्डे परिसमाप्तः । अस्यैव प्रबन्धस्य ' निर्णयप्रकाशः ' इति नाम । पूर्वं धर्मशास्त्र-मीमांसामयं प्रबन्धद्वयम् अप्पाशास्त्रिणां प्रकाशितम् । तच्च ' एकादशीश्राद्धविधिनिर्णयः ' ' पतितोद्धार-मीमांसा-खण्डनं ' च इति । ताभ्याम् अनेन चेति प्रबन्धत्रिकेण श्रीमदप्पाशास्त्रिणां वाचस्पतित्वं प्रतिष्ठितम् अभूत् । अस्मिन् पुनः निर्णयप्रकाशे पूर्वोल्लिखितैः प्रतिपक्षिभिः किमपि आक्षिप्तम् । तथापि तदपि परामृश्य प्रतिक्षिप्तम् अप्पाशास्त्रिभिः । एवं विधाय अपि नांशतोऽपि गर्वलवम् एते प्राप्नुवन् । प्रबन्धान्ते प्रोक्तम् अप्पाशास्त्रिभिः —

**' प्रक्षेपः प्रतिपक्षस्य प्रमाणन्यासपूर्वकम् ।**
**यो व्यधाय्यमुना देवः प्रीयतां श्रीसदाशिवः ॥ '** इति

### ३१. श्रीमन्महाभारतस्य महाराष्ट्र-भाषायां सुरस-भाषान्तरम् ।

ऋणनिवारणाय यथा खलु अप्पाशास्त्रिभिः श्रीविष्णुपुराणम् अनूदितम् एवं पुण्यपत्तनीय-गणेश-विष्णु-चिपळूणकर-मण्डल्याः कृते श्रीमहाभारतम् अपि अनुवादयितुं समुपक्रान्तम् । तस्य आदिसभापर्वणोः अनुवादः अप्पाशास्त्रिभिः संपादितः । अनुवाद-कर्तृषु सर्वश्रीभानु-दातार-आठल्ये-महाभागाः अपि आसन् । इदम् अनुवादकार्यं पुनः अप्पाशास्त्रिणां जीवितावधि प्राचलत् । अयं महाभारतानुवादः महाराष्ट्रीयजनेभ्यः अतीव रोचते स्म । अत एव इदानीम् अपि ( १८९० शकवर्षे ) समग्रस्य अस्य महाभारतानुवादस्य पुनरपि प्रकाशनं संवृत्तम् । समग्रमहाभारतानुवादस्य भूयिष्ठः भागः विद्यावाचस्पत्युपज्ञः । अनेन एतेषाम् अनुवादकौशल्यं संमाननीयम् अभूत् इति स्फुटीभवति । एतेन श्रीविष्णुपुराणानुवादोपसंहारे यद् उक्तम् अप्पाशास्त्रिभिः '**अतः प्रमोदो भविता सतां चेत्**– ' तत् एतत् सुफलितं समभवत् इति विज्ञायेत विचारकैः ।

### ३२. अभिनवाः प्रबन्धाः ।

एकादशे खण्डे अप्पाशास्त्रिभिः ' प्राचां भूगोलविज्ञानं ' नाम नव्यभव्यः प्रबन्धः प्रकाशयितुम् आरब्धः । एवं ' थिऑसॉफी च तस्याः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्त्रष्ट्री च' 'वैदेशिक-वाणिज्यं भारतीयानां धर्मश्च' इति द्वौ सामाजिक-विषय-विमर्शकौ निबन्धौ प्रणीतौ। 'पञ्जरबद्धः शुकः', 'वल्लभ-विलापम्' इति काव्यद्वयं रचितम्। चिरंजीवभट्टाचार्यः, श्रीहरिहरो-पाध्यायः चेति पण्डितौ समीक्षितौ। 'केन प्रणीतानि सांख्यसूत्राणि?' इति संशोधनात्मकः प्रबन्धः विरचितः। हिन्दु-शब्दस्य संस्कृतत्वं व्यवस्थापितम्। 'इन्दिरा' इति वङ्गीयोपन्यासस्य संस्कृतानुवादः प्रारब्धः। 'निर्णयप्रकाशः' 'अब्धियाने निर्णयः' इति धर्मशास्त्र-मीमांसकौ प्रबन्धौ निबद्धौ। नैकविधवार्ताविलेखनैः अभिप्रायैः च स्वीय-वैशिष्टयं प्रतिष्ठापितम्।

**३३. तदेतन्नांशतोऽपि युक्तम्।**

अस्मिन् (१८२६ शाके) किलवर्षे ये ये नाम प्रासंगिकाः प्रबन्धाः अप्पाशास्त्रिभिः प्रकटीकृताः, तेषु 'मधुसूदनसंहिता' नाम प्रबन्धः प्राधान्यम् अवगाहते। तदानीं किल वाराणसेय-धर्म-महा-मण्डलेन उपदेशक-परीक्षायां पाठयत्वेन मधुसूदनसंहिता इत्ययं ग्रन्थः निर्धारितः। निर्धारितायां पाठयत्वेन मधुसूदनसंहितायां केऽपि धार्मिकंमन्याः संवाद-पत्र-संपादकाः संहितायाः स्वीकारे वैमत्यं प्रादर्शयन्। महान् खलु ताम् एतान् अधिकृत्य कोलाहलः संजातः। समीक्ष्य पुनः विदुषाम् एतं कोला-हलं भारत-धर्म-महा-मण्डलेन पाठयकक्षातः बहिष्कृता मधुसूदनसंहिता। अत एव श्रीमदप्पाशास्त्रिभिः सांगोपाङ्गम् एव विमर्शिता मधुसूदनसंहिता। अस्मिश्च प्रबन्धे संहितायाः एतस्याः प्रकरणशः विस्तृतः परिचयः प्रदत्तः अप्पाशास्त्रिभिः। प्रतिपादितं च परीक्षायाम् उपयुक्तत्वम् अस्याः। एतच्च सर्वं तत्रत्य-प्रथम-परिच्छेदात् सुशकं विज्ञातुम् इति सोऽयम् अत्र प्रदीयते —

"अतीतप्रायो बहुतिथः समयः। तदा किल प्रायेण धार्मिकतया परिगणितेषु केषुचित् संवादपत्रेषु प्रबन्धमेनम् अधिकृत्य महत्येव चर्चा समघटिष्ट। भूयांसः खलु इदानीं संवाद-पत्र-संपादकाः एकस्वरेण संहि-ताया अस्या अनुपादेयताम् एव स्थिरीकर्तुम् अभिलष्यन्तस्तामेनामुपदेशक-परीक्षायां नियोजितवति श्रीमति सनातन-भारत-धर्म-महा-मण्डले पवि-पातं पातयामासुः परुषतम-दुःसहानि वचनानि। आसीत् च इदानीं नो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मनसि । यत् । न खलु सनातन-भारत-धर्म-महामण्डल-कार्यदर्शिनो न प्राज्ञाः नापि वा विशेषज्ञाः संवाद-पत्रिकायाः संपादकाः । तद् विलोकनीयैव तावदियं मधुसूदनसंहिता यत्र अनयोः एकान्तत एव दुरुत्सारं वैमत्यमिति । इत्थं च मनसिकृत्य कथम् अपि समपादयाम ताम् एनाम् । निपुणं चावालोकिष्मह्यामूलान्तम् । अन्ततश्च प्रत्यपद्यतास्माभिः एकान्तत एव उपदेशकानाम् उपकारिणी संहितेयमर्हत्येवोपदेशक-परीक्षायां नियोक्तुमिति । अधीतया ह्यनया भूयांस एव विषया विनैवायासं बुद्धिम् आरोहन्तीति । न खलु विना प्रयासम् आसाद्यमाने श्रेयसि तदर्थमेव गरीयांसं प्रयत्नमातिष्ठते कोऽपि प्रेक्षावान् । अयुक्तं हि तथानुष्ठानमिति । तथाह्याहुरभियुक्ताः —
**'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदिति ।'**

× × × ×

विज्ञायते किल अस्माभिः इदानीम् अपसारितेयं परीक्ष्य-पुस्तकेभ्यः श्रीमती मधुसूनसंहिता प्रत्यवस्थितानां पण्डितंमन्यानाम् अस्थाने कोलाहलम् आकर्ण्य उद्विग्न-प्रायेण भारत-धर्म-महा-मण्डलेन इति । तदेतन्नांशतोऽपि युक्तम् इत्याकलयामः । भवतु यद् भूतम् । पुनरपि निपुणमेवेयं निरीक्ष्यतां धीमद्भिः ।" इति ।

अनेन खलु तदानीन्तन-धार्मिक-विद्वज्जन-समवाये श्रीमदप्पाशास्त्रिणां गौरवान्वितं संमाननास्पदत्वं स्पष्टं भवति । तेन हि विना नाविर्भवेत् अयम् उद्गारः — 'तदेतन्नांशतोऽपि युक्तम्' इति ।

**३४. नैव खल्वेतद् दुष्करमाकलयामः ।**

श्रीमदप्पाशास्त्रिणां बिरुदानुरूपं वाचस्पतित्वं निभाल्य प्रमुदितान्तरङ्गा गीर्वाण-वाणी-भक्त-मण्डली 'संस्कृत-चन्द्रिका'-कारेषु एतेषु किम् अपि विज्ञापितवती । तदेतत् विद्यावाचस्पतीनाम् एव शब्दैः अत्र निवेद्यते—( चं. १८२६ फाल्गुनाङ्के )

"कैश्चिच्च महाभागैः संस्कृत-चन्द्रिकाया विरहम् असहमानैः सामयिकांश्च तांस्तान् विषयान् प्रतिसप्ताहम् रवास्वादयितुकामैर्विज्ञापिता वयं साप्ताहिकीं कामपि पत्रिकां प्रकाशयितुम्। नैव खल्वेतद्दुष्करम् आकलयामः । समुचितैव च इयम् एतेषां विज्ञप्तिरित्यपि मन्यामहे। न तु विना

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ग्राहकाणां पञ्चशतीं कर्मैतन्निर्वाहयितुं शक्यमनात्मायत्तमुद्रायन्त्रैरस्माभि-रित्यतः प्रार्थ्यते, ये किल पत्रिकाम् एवं विधां सामयिक-विषयचर्चामात्र-संघटितां प्रतिसप्ताहमीहन्ते, संपादयन्तु ते ग्राहकान् पञ्चशतम्। संस्कृत-चन्द्रिकायाः प्रकाशनतः प्रागेवायमासीद् अस्माकं संकल्पो यत् 'सूनृतवादिनीं' नाम काम् अपि संस्कृतपत्रिकां प्रकाशयामेति। तामेव च समधिगतेषु ग्राहकेषु प्रकाशयिष्यामः।" इत्यादि।

अयं च अन्यतमः विजयः एव अप्पाशास्त्रिणां संपादकत्वस्य प्रयासस्य च। संस्मर्यतां तावत् पाठकैः, चन्द्रिकायाः पञ्चमखण्डीया विज्ञप्तिः। तत्र विलिखितम् आसीत् अप्पाशास्त्रिभिः — 'शास्त्रमात्र-पटवः केऽपि स्वदेश-विषये निकामम् औदासीन्यम् आलम्बन्ते। तदर्थं स्वदेश-विषयकं कियन्तम् अपि प्रबन्धं प्रायेण प्रतिसंख्यं प्रचारयिष्यामः।' इति। श्रीअप्पाशास्त्रिणां लेखनी-विक्रमेण विनिर्जितहृदयाः पण्डिताः स्वयमेव पुनः इदानीं सामयिक-वृत्तान्त-पत्रिकायाः अभिलाषं दर्शयन्ति स्म इति सुफलम् इदं चन्द्रिका-प्रचार-कौशल्यस्य।

### ३५. किमेतदनुरूपं धर्मस्य?

संस्कृत-चन्द्रिकायाः प्रचाराय यथा किल नियमावल्याः परिष्करणं कृतम् अप्पाशास्त्रिभिः, तथैव राजानः, संस्थाः च अपि प्रार्थिताः एतैः। अष्टमखण्डीय-विज्ञप्तौ एव निवेदितम्— 'अचिरादेव संस्कृतचन्द्रिकायाः साहाय्यार्थं भारतवर्षीयांस्तत्तेषु हिन्दु-भूपालेषु विज्ञापयितुम् इच्छामः।' इति। कैश्चित् हि प्रार्थनाम् अनुसृत्य प्रतिश्रुतं प्रदत्तं च साहाय्यम्। तथापि केऽपि महोदाराः तादृशाः अपि आसन् येषां विषये प्रोक्तम् अप्पाशास्त्रिभिः—

"वत्सरे अस्मिश्चन्द्रिकायाः साहाय्य-प्रार्थनाय श्री १०८ जयपुर-महाराजस्य सविधे संमुद्रितम् आवेदन-पत्र-द्वयं प्राहीयत अस्माभिः, किन्तु महोदारेणापि सता महाराजेन अमुना प्रत्युत्तरप्रदानेनापि न संभाविता संस्कृत-चन्द्रिकेति न जानीमः किमत्र बीजमिति। मन्त्रि-महोदयोऽप्यस्य नोत्तरितवान् अस्मदीयं पत्रद्वितयम् इति चित्रीयते नश्चेतः।" इति।

श्रीमद्-भारत-धर्म-महामण्डलस्य शतं शाखासभाः उत्तर-भारते विराजन्ते स्म। महा-मण्डलस्य चन्द्रिका मुख-पत्रं बभूव इति प्रोक्तमेतत्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्राक् एव । अतश्च सर्वाभिः एताभिः साहाय्यप्रदानेन चन्द्रिका समवलम्बनीया इति वाराणसीस्थ-प्रधान कार्यालये विज्ञापितम् अप्पाशास्त्रिभिः । ततः च —

"अनुमत्य चैतद् आज्ञापिताः विज्ञापिताः प्रोत्साहिताः प्रवर्तिता वाऽऽत्मनः शतं शाखासभाः सानुग्रहेण भारत-धर्म-महामण्डलेन प्रेर्यं संमुद्रितानि पत्राणि कर्मण्येतस्मिन्नित्याजीवितम् अपि न विस्मरेत् चन्द्रिका अस्योपकारस्य । अथ समधिगत-भारत-धर्म-महामण्डलानुज्ञा संस्कृत-चन्द्रिका सप्रत्याशम् एव तत्र तत्र गन्तुम् आरब्धवती । संस्कृत-भाषाम् अनवगच्छद्भिस्तु यैः कैश्चित् सभापतिभिः सबहुमानं प्रत्याख्याता, तेष्वपि कृतज्ञताम् आविष्कृतवती । अपरैः पुनर् आवत्सरं गृह्णद्भिः व्ही. पी.-द्वारा समुपस्थितेयं निर्विशङ्कमेव प्रत्याख्यातेत्यहो दुर्भाग्यम् एतस्याः । न जानीमः किमेतदनुरूपं धर्मस्योताहो समुचितं सौजन्यस्याहोस्वित् प्रकारोऽयं शाखा-सभाभिः क्रियमाणस्य भारत-धर्म-महामण्डल-संभावनस्योताहो रीतिरियं संस्कृत-भाषायाः संजीवनस्य किंवा शिक्षणमिदं सनातन-धर्म-रहस्यानाम् इत्येतन्न किल चिरमपि विचारयन्तो विज्ञातुं प्रभवामः । ...... वयं पुनर्यावत् कृत्यमेतदनायँ कृतार्थीक्रियतेऽवलम्बनप्रदानेन धर्मसभाभिस्तावन्नांशतोऽपि शक्य एताभिः सनातन-भारत-धर्मः समुन्नितम् आरोपयितुम् इति सावधारणम् एव ब्रूमः । कः पुनः इदानीं सभाभिः एताभिः संपादितायाः संस्कृत-चन्द्रिकायाः हानेः प्रतिभूः । यैः पुनः सनातन-धर्म-सभापतिभिः स्वीकृतेयं सबहुमानं तेषु चिरमेवेयं कृतज्ञा प्रशंसत्यमीषां गुणानुरागित्वम् । " इति ।

## ३६. सजातीयानामपि वचनेषु दीयतां दृष्टिः ।

संवाद-निबन्धने कृतहस्ता अप्पाशास्त्रिणां लेखनी समुचिताभिप्रायाविष्करणे दीक्षिता आसीत् । तथा अनुतिष्ठद्भिः न एतैः गणिताः शासकाः अपि । संदृश्यताम् एतत् एकादशखण्डीये संवादसंग्रहे विद्योतमानं संवादाभिप्रायरत्नम् —

"स्वेच्छानुसारं विश्वविद्यालय-नियमावलीम् आरचयितुकामः श्रीमान्-लॉर्ड-करधनमहोदयः श्रीमता ना. गोखले-महाशयेन निरुत्तरीकृतः 'निःशेषा अपि गर्हणीय-चरिता वितथवादिनश्चाश्रद्धेयाश्चातिशयोक्ति-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रणयिनश्चैत्येवम् उद्घोषयामास। असदृशश्च हृदयमर्मभेदी च अयं महोदयेन अमुना कृतो भारतवर्षीयेष्वारोप इति नात्र संदेहकणिकाऽपि।

भारतवर्षेऽसतोऽपि दोषानारोपयता लॉर्डकरधनमहोदयेन स्वजातीयानामप्यनेकेषामेव वचसि विश्वासो नाविष्कृत इति नूनमेतदाश्चर्यास्पदमेव। एतज्जातीया हि भूयांस एव पण्डिता: सानन्द-निर्भरं भारतवर्षं प्रशंसन्ति। तथा हि। भारतवर्ष इव कृतज्ञाश्च सत्यनिष्ठाश्च अशेषेऽपि भूमण्डलेऽन्यत्र दुर्लभा एवेति सर् हेन्री काटन्-महाभागः प्राह। भारतवर्षीयाः स्त्रियः पुरुषाश्च इङ्ग्लण्ड-जर्मनी-फ्रान्स-प्रदेशेषु वर्तमानेभ्यः समुन्नत-तमेभ्योऽपि, स्त्री-पुरुषेभ्यः समुन्नता इति म्याक्समूलर-महोदय आह स्म। जगति सुविदितमेव भारतीयानां पावित्र्यम्, इङ्ग्रेजी-कुमारेभ्योऽपि सविशेषमेव बुद्धिमत्तरा भारतवर्षीयाः कुमाराः, कृषीवलाश्चात्यत्या अपीडका वात्सल्यशालिनः प्रामाणिका राजनिष्ठाश्चेति लॉर्डमाउंटस्टुअर्ट-एल्फिन्स्टन्-महाशयोऽब्रूत। भारतीयानां जातिभेदतो महीयांल्लाभः स्थिरीकरणीयः किलायम् अवश्यम् अस्माभिरमीषां जातिभेद इति सर्-मोनियर्-विलियम्स-महोदयो निजगाद। प्राचीनाः प्राचीन-तमाच्च समयतः प्रभृति साधुशीला भारतवर्षीया इति लॉर्डरिपन-महाभागोऽवादीत्। सूक्ष्मतया क्रियमाणे विचारे भारतवर्षीयाणां धर्माधिकरणिकानां सत्यप्रियता इङ्ग्लण्डीयन्यायाधिकरणिकेभ्यः कथम् अपि नांशतोऽपि न्यूनेति अर्ल् ऑफ् सेलबोर्न-महाभागः कथयामास। तत् तावद् एवंविधेष्वात्मनः सजातीयानाम् अपि वचनेषु दीयतां दृष्टिः लॉर्डकरधनमहाशयेनेति प्रार्थयामहे।" इति।

अनेन किल संवादाभिप्रायेण संस्कृत-विद्यास्थानैः सह लोकवृत्त-परिशीलनम् अपि वाचस्पतिषु परां काष्ठाम् आरूढम् आसीत् इति स्फुटीभवति।

### ३७. लसीकावेधो भारतीयानाम् आयुर्वेदीयः।

'गोस्तन्यमसूरिका' इति शीर्षकः कोऽपि विद्यते चन्द्रिकायाः एकादशे खण्डे श्रीअप्पाशास्त्रिणां लेखः। अत्र किल मसूरिका-(देवी)-रोगस्य कियानपि विमर्शः कृतः। अत्र रोगे क्रियमाणम् उपायं प्रति विरुद्धान् ज्ञापयन्ति वाचस्पतयः —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"शीतलाया नाम देवतायाः कोपो व्याधिम् एनं संजनयतीत्यपि केषांचिद् वचो न किल नानुमन्यामहे। किन्तु नात्र चिकित्सा नाम नाचरणीयैव न वा प्रतिबन्धकीभूत उपायो नाश्रयणीय एवेति कथम् अपि स्वीकर्तुं प्रभवामः। यो हि भैषजैर्न शक्यते साधयितुं प्रतिबद्धुं वा स एव व्याधिः कर्मजो देवतादि-कोपजन्यो वा स्याद् इत्यभ्युपगन्तव्यम् इत्याहुः आयुर्वेदज्ञाः। ततः च भेषजादीनां वैफल्येनैवास्य देवतादि-कोपजन्यत्वम् अनुमेयम् इति सिध्यतीति प्रथमतस्तावदौषधान्येव प्रयोक्तव्यानि।" इति।

अत्र च प्रतिष्ठितः उपायः गोस्तन्य-मसूरिका-वेधस्यैव। गोस्तन्य-मसूरिकाणां लसीका शिशु-बाहौ शस्त्रवेधेन संनिवेश्यते। अत्र कर्मणि पुनः ये विरुद्धाः आसन् तेषां नेत्रोद्घाटनं कृतम् अप्पाशास्त्रिभिः —

"संप्रति पुनः केषांचित् केरलीय-महाभागानां विषयेऽत्र वैमत्यं प्रेक्षमाणानां चित्रीयते नश्चेतः। अपि नाम संभाव्यत एतैरनुपाय एव मसूरिकावेधः (व्हॅक्सिनेशन्) इति। अथवा पाश्चात्त्यमतमात्रसिद्धोऽयम् इत्येव अवहेल्यतेऽभ्युपायः।

तत्र तावन्मसूरिकावेधस्यानुपायत्वं न किल कथंचिदपि साधयितुं शक्यम्। प्रत्यक्षफलत्वेन शङ्कानवकाशात्। नापि पाश्चात्त्य-मत-सिद्धः अयम् उपायः। भारतवर्षीयेषु अपि हि प्राचीनेषु आयुर्वेद-प्रबन्धेषु सोऽयं सुस्पष्टतयैव संदृश्यते। यथा धन्वन्तरि-प्रणीते शाक्तेय-ग्रन्थे—

> **धेनुस्तन्यमसूरिका नराणां च मसूरिका।**
> **तज्जलं बाहुमूलाच्च शस्त्रान्तेन गृहीतवान्॥**
> **बाहुमूले च शस्त्राणि रक्तोत्पत्तिकराणि च।**
> **तज्जलं रक्तमिलितं स्फोटक-ज्वर-संभवम्॥** इति।

एतेन यदुच्यते कैश्चित् पाश्चात्त्योपज्ञ एव मसूरिकावेध इति तत् परास्तम्। एवं च आर्याणाम् अपि प्रबन्धेषु संदृश्यमानां चिकित्साम् एनां नावहेलयेयुः शुभाशंसिनः केरलीयमहाभागा इति प्रार्थयामहे।" इति।

एतेन प्रबन्धेन प्रतितिष्ठति स्वदेशीयाभिमानेन सह धर्मश्रद्धा, देवता-विश्वासः, उद्यम-तत्परता, प्राचीन-विद्या-रहस्योद्घाटन-नैपुण्यं, चिकित्सा-ग्रन्थानां परिशीलनं, वैज्ञानिकं सुसंवादित्वं च इत्यादि-गुण-प्रकर्षः



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीअप्पाशास्त्रि-विद्यावाचस्पतीनाम्। अतः खलु स्थाने एव एतेषु विज्ञप्तिः पाठकानां साप्ताहिक-पत्र-प्रकाशनार्थम्।

**३८. पितृभिश्चिन्त्यमानानां दिवसास्ते पलायिताः।**

प्रिय-पाठक-महाभागाः! 'श्रीशिवः शरणम्' इत्येव प्रबन्धारम्भे विलिख्य अप्पाशास्त्रिभिः, ये एव निरन्तरं वन्दन-विषयीकृताः ते तेषां पितृचरणाः श्रीसदाशिवशास्त्रिणः इदानीं प्रायः अष्टसप्ततिवर्षदेशीयाः आसन्। वार्धक्य-प्रभावतः कास-श्वासादि-व्याधिभिः च एते एतेषु द्वित्रवर्षेषु जर्जरिताः समभवन्। दिनानुदिनं च क्षीयमाणाः इमे १८२७ शकवर्षीय-चैत्रसुदि भौतिकम् आत्मीयं शरीरं तत्यजुः। यत् सत्यम् अतीव हि प्रसन्नं स्यात् एतेषाम् अन्तःकरणम्। सदाचारपरायणता, पाण्डित्यम्, अनुकूलः परिवारः, पण्डित-प्रकाण्डः सद्धर्मानुरागिणां गरिष्ठः, शिवभक्त-वरिष्ठः, रसिक-वृन्द-मूर्धन्यः आन्दोलनस्य एकमात्रं स्थानं, वाचस्पतिः इव सुगृहीतनामा अप्पाशास्त्री तनयः, इत्यत्र एकैकम् अपि जनुषः कृतार्थत्वाय अलं, किं पुनः समवायः? दारिद्र्यम् एव तावत् एकमात्रं वस्तु धन-लुब्ध-मनसाम् अस्वास्थ्य-विधायकं विराजमानम् आसीत्। तथापि नैतत् तान् प्रविचालयितुं प्राभवत्। जानन्ति एव स्म ते —

'**ऋचः सामानि यजूंषि। सा हि श्रीरमृता सताम्**' इति।

एवं सर्व-धन-प्रधाना विद्या तत्सहभूता शिवसेवा च कृतार्थं चकार सदाशिवशास्त्रिणां जीवितम् इति नात्र संदेहः। किं तु पितृविनाकृतानाम् अप्पाशास्त्रिणां शोकः तावत् अपरिहार्यः एव आसीत्।

अद्यावधि तपस्विनां प्रवरस्य, विद्वद्वरेण्यस्य, वात्सल्यनिधेः रसिक-श्रेष्ठस्य, मूर्तस्येव कारुण्यस्य, पितुः प्रणयच्छत्रे निवसताम् अप्पाशास्त्रिणां काऽपि नैव आसीत् गरीयसी चिन्ता नाम। अनन्या पुनः इयम् एव सर्वदा एका चिन्ता आसीत् 'कथं मे चन्द्रिका प्रचलिष्यति' इति। परिचितः च पाठकैः चन्द्रिका-सर्वस्वः अप्पाशास्त्रिणां व्यवसायः। इदानीं तु तातपादैः विरहितानाम् एतेषां चिन्तासहस्रं प्रादुरभवत्। वैधव्यव्यथाश्लिष्टा जननी भगवती पार्वतीदेवी। जराविक्लवा। दारिद्र्यमात्रसारं संसारं कौशल्येन निर्वाहयन्ती। सैव पुनः इदानीम् अप्पाशास्त्रिणां समस्त-गौरव-स्थानं बभूव। पारंपरिक-दायेन सह चन्द्रिका-संसारः अपि अधुना प्रचालयितव्यः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आसीत्। एतत् पुनः दुःखं दारिद्र्येण द्विगुणितम्। श्रीशिवम् एकम् उपास्य-दैवतं विहाय कं पुनः अन्यं शरणं गच्छेयुः अप्पाशास्त्रिणः? अतश्च १८२७ शक-वर्षे संस्कृत-चन्द्रिकायाः द्वादश-खण्डस्य प्रथमाङ्कीयः मङ्गलश्लोकः एवम् अवतीर्णः —

" मायां तु प्रकृतिं मुखैरभिहितं वाक्यैर्यदेव श्रुतौ
व्यासाद्यैरपि यत् परःशत-वचोगुम्फैः परं गद्यते।
वामावामशरीरमेकमनघं तच्चन्द्रचूडाभिधं
ध्यानालम्बनमस्तु वस्तु शरणं तापैः परीतस्य मे॥ इति।

किं तु कुतः आसीत् परिदेवनाय पर्याप्तः अप्पाशास्त्रिणाम् अवसरः? संस्कृत-चन्द्रिका तु सर्वथा विद्यावाचस्पति-मात्रायत्त-सौभाग्या रसिकान् अनुरञ्जयितुं कामयते स्म। अतश्च अनुपदम् एव प्रादुर्भूता द्वादशवर्षावतरणिका इयम्—

" स्फूर्जत्-प्रबन्ध-नव-हार-मनोरमाङ्गी।
प्रोता रसैः प्रतिपदोपचितैर्नितान्तम्॥
सद्द्वादशाब्द-सुषमा रस-वित्-तमानां।
चेतोहरा भवतु संस्कृत-चन्द्रिकेयम्॥ " इति।

एवं पूर्वस्माद् अपि समधिकं मनोहरं चन्द्रिकायाः लावण्यम् आचरयितुकामानां श्रीअप्पाशास्त्रिणां चेतसि समनुभूतपूर्वः केषांचित् चन्द्रिकाप्रद्वेषः इमां मासावतरणिकां स्फोरयामास —

" धूताग्रां नवमल्लिकां मलयजैश्चैत्रे समीरैर्मुहुः
कृष्टः सौरभ-संपदाऽभिपतति प्राप्तो दिगन्ताद् अलिः।
हित्वैनां पिचुमन्दमेव करटः किन्त्वाश्रयार्थी गतः
सेव्यन्ते गुणिभिर्गुणाः पुनरमी हेयाः परं दुर्धियाम्॥ इति।

एवं समाहित-मनस्कैः चन्द्रिका-प्राणैः समारब्धं नियतं प्रकाशनं स्वपत्रिकायाः। इयम् अपि वत्सरेऽस्मिन् निकामं सौष्ठवं प्राप्तवती।

### ३९. आक्रन्दनम्।

द्वादश-खण्डीय-प्रथमाङ्के 'आक्रन्दनम्' इत्याख्यम् अप्पाशास्त्रिणां काव्यं नयन-गोचरीभवति। श्रीशिवम् उद्दिश्य एव अयं विलापः कृतः। मन्यामहे 'वल्लभ-विलापम्' इव 'पुत्र-विलापम्' एव काव्यम् एतत्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काव्यस्य अस्य वृत्तं शिखरिणी । अस्मिन् श्रीशिवमहिम्नःस्तोत्रस्य च देव्यपराधक्षमापनस्तोत्रस्य च आत्मार्पणस्तुतेः च प्रादुर्भवति सुषमोद्गारः। अत्र हि कारुण्यं, भक्तिः, विस्मयः इत्यादि-रसानां समृद्धिः विद्यते। समास्वाद्यतां तावत् केषांचित् पद्यानां सुधा-रसः पाठक-प्रवरैः —

विपद्-ग्राह-ग्रस्तः क्षपित-धृतिरीशान नितरां
घनं पश्यन् ध्वान्तं परित उदितं बाढमधुना ।
अपश्यन् आलम्बं कमपि परिमूढः सकरुणं
समाक्रन्दामि त्वाम् अमृतकर-चूडाल भगवन् ॥ १ ॥

कथं पुनः निरवलम्बनः भवान्? विभ्राजन्ते एव महेन्द्रादयः सुबहुलाः देवताः इति चेत् —

जगत्यां वर्तन्तां पुरहर परःकोटय इमे
सुरा येषां चेतः स्पृशति न कृपाया लवमपि ।
समुद्धर्तुं क्लेशाम्बुधिलहरिकाऽऽघात-विकलान्
उदारं कारुण्यं किमपि भवदीयं विजयते ॥ २ ॥

अथ च सेवाऽपि श्रीशिवस्य सुलभैव। यतः —

मुखोत्पाद्यं वाद्यं सलिलमपि पाद्यं तव विभो
मृदा मूर्तिः पुण्याऽपचितिरपि बिल्वी-किसलयैः ।
इति प्रोक्तः प्राज्ञैः शिव तव सपर्या-विधिरयं
फलं त्वेतज्जन्यं निगदितुमशक्यं मितधिया ॥ ५ ॥

अत्र प्रोक्तः सपर्याविधिः अप्पाशास्त्रिभिः अनुष्ठीयमानः एव आसीत्। 'मृदा मूर्तिः पुण्या' इति निर्दिष्टः पार्थिवलिङ्ग-पूजाविधिः पुनः स्वपितृ-चरणानां दिवंगमानन्तरं समुपक्रान्तः इति भाति। सपर्याविधिः तु अयं सुतरां सुलभः। अपि च—

निरीक्ष्यामी दूराद् अपरमिव चण्डालमिव मां
समाक्रान्तं पापैरविषयतमैर्वाङ्मनसयोः ।
निमील्याक्षि-द्वन्द्वं शिव शिव सुरायन्ति परतः
क्व यामि श्रीशंभो त्वमपि यदि नालम्बयसि माम् ॥७॥

यद्यपि अहम् एवंविधः तथाऽपि —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निराशो नैवाहं तदपि लवमप्यस्मि भगवन्
परित्रातारं त्वां निगदति यदाम्नाय-निवहः ।
दया वा कोपो वा यदि मयि भवेत् ते पशुपते
पदं नूनं मायां सुकृत-परिपाकैक-सुलभम् ॥ १२ ॥

कथं वा दुष्कृतकारिणः तव उद्धारः भवतु, इति चेत् —

उदीते किं भानौ तिमिरमवतिष्ठेत भगवन्
उपक्रान्ते वर्षे किमु भवति कान्तार-दहनः ।
रसज्ञाग्रं यन्मे विशति भवदाख्यामृतरसे
न चांहः प्राग्भारः श्रयति शिव सत्ता-विधुरताम् ? १७॥

तथापि त्वत्सदृशपापिष्ठानाम् आश्रयप्रदानं न कार्यम्, इति चेत् —

अमङ्गल्यः पापैरिति न खलु हेयोऽस्मि भवता
कपालानां मालाम् अपि हि शिव कण्ठेसि कृतवान् ।
वहस्येवं शीर्षे कुटिलमपि दोषाकरमथ
द्विजिह्वानां वृन्दं गमयसि किलालंकृतिपदम् ॥२२॥

किं पुनः भवान् अभिलषति, भूपत्वम् इन्द्रत्वं वा ? नेत्याह —

न याचे भूपत्वं न तु दिविजतां नापि हरिताम्
अधीशत्वं नो वा कमलभवतां नापि हरिताम् ।
इदं त्वेकं बद्धाञ्जलि गिरिश नाथामि भवते
त्वदीयं विश्वात्मन् मयि विकिर पादाम्बुजरजः ॥२६॥

ननु कथम् एतावान् पीडितः त्वम् ? किमर्थं च इत्थं विलपसि ? तत्राह —

विभुर्नाहं सोढुं भव-दहन-तापं परमतः
परित्राणे तन्मे गिरिश समयोऽयं समुचितः ।
ननु क्रोशं क्रोशं किमपि विवशोऽभूवमधुना-
ऽप्युदासीनत्वं चेद् भजसि हत एवास्मि भगवन् ॥३१॥

अत एव —

समुच्छुष्को यावद् भवति भगवन् न क्षितिरुहः
समुल्लास्यस्तावत् स किल सलिलासेकविधिना ।
म्रियै यावत्तावद् व्यपनय जवाद् एत्य निखिलं
परीतापं तन्मे सपदि सदयापाङ्गविसरैः ॥३२॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४०. त्वर्यतां त्वर्यतां त्वर्यतां रसिकैः ।

एवं विपदां चूर्णीकरणाय परमेश्वरं संप्रार्थ्य स्वीकृतकार्येषु पुनरपि संलग्नाः अभवन् विद्यावाचस्पतयः । निवेदितपूर्वम् इदं गतवर्षे १८२६ शाकीय-फाल्गुन-चन्द्रिकायां ग्राहक-महाभागानाम् आग्रहेण श्रीअप्पाशास्त्रिभिः साप्ताहिक-पत्रिका-प्रकाशनं मनसि कृतम् इति । तद् इदानीं निश्चित्य विज्ञापनम् एतद्विषयकं चन्द्रिकायाः द्वादशखण्डीयेषु प्रायः सर्वेषु अङ्केषु प्रकाशितम् एतैः । तत् इत्थम् —

* * * * * * * * * * * * * * * * * * * * * * * *

"त्वर्यतां त्वर्यतां त्वर्यतां रसिकैः ।
सूनृतवादिनी

एतत्संज्ञा संस्कृत-भाषामयी नानाविधनव्यप्रबन्धभासुरा साप्ताहिकी संवाद-पत्रिकाऽऽगामिनीं विजयदशमीम् आरभ्य प्रकाश्येत यदि संपद्येत ग्राहकाणां त्रिशती । प्रथमं तावत् केवलम् आत्मनो नामानि निर्दिश्यन्तां जिघृक्षुभिः । प्रथमा च संख्या व्ही. पी.-द्वारा प्रेर्येत । मूल्यं पुनरस्याः सह प्रापणव्ययेन रूप्यक-त्रितयम् । पत्रादिकं तु संस्कृत-चन्द्रिकायाः कार्यालयः, कोल्हापुरम् इत्यत्र प्रेर्यम् ।" इति ।

* * * * * * * * * * * * * * * * * * * * * * * * *

यद्यपि प्रत्यङ्कम् एव एतत् विज्ञापनं प्रकाशितम् अप्पाशास्त्रिभिः तथाऽपि भाद्रपदाङ्के निवेदितम् एतैः —

"या च समीहिता साप्ताहिकी संस्कृत-पत्रिका प्रकाशयितुम् अस्माभिः सेयम् अद्य यावद् अनधिगत-पर्याप्त-ग्राहकतया न शक्येत विजयदशमीतः प्रभृति प्रकाशयितुम् । यदा तु संपद्येत ग्राहकाणां चतुःशती तदाऽसाववश्यं प्रकाश्येत । आदर्शं पुनरस्या अचिरादेव प्रकाशयिष्यामः ।" इति । ततश्च आश्विनाङ्कम् आरभ्य द्वादशखण्डपूर्तिं यावत् प्रतिमासं 'सूनृतवादिनी समपेक्षित-ग्राहकलाभे सति आगामिनीं (१८२८ चैत्र-) वर्षप्रतिपदम् आरभ्य प्रकाश्येत' इति परिवर्तित-प्रकाशन-काल-निर्देशं पूर्वोक्तम् एव विज्ञापनं प्रकाशितम् अभूत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**४१. आत्मघातमात्रफलः पुनरेषः ।**

अस्मिन् वत्सरे पुण्यपत्तने काऽपि अभिनवा प्रवृत्तिः समघटिष्ट । इयं खलु धार्मिकी । तदा हि वे. **रामदीक्षित बापट-संज्ञकेन** केनचित् वैदिक-प्रवरेण सोम-संज्ञकः यागः कृतः। पद्धतिः पुनः अस्य यागस्य विवाद-ग्रस्ता अभवत् । वैदिक-धर्मानुसारिणः यागाः द्विविधाः । स्मार्ताः श्रौताः चेति । तत्र सोम-संज्ञकः अयं श्रौतः यागः । श्रौते च यागे समस्तवेदानाम् आवश्यकत्वं वर्तते । तत्र हि होता, अध्वर्युः, उद्गाता चेति त्रयः ऋत्विजः क्रमेण ऋग्वेदं, यजुर्वेदं, सामवेदं च अधीयानाः अपेक्ष्यन्ते। हौत्रापरपर्यायं होतुः कर्म ऋग्वेदानुसारि संपद्यते । इति अयं शास्त्रार्थ-सिद्धान्तः । एवं सति वे. **बापट**-महोदयेन याजुषं हौत्रं नाम कमपि प्रकारम् अवलम्ब्य यागः अयं संपादितः । एतत् च वीक्ष्य पूर्वतः एव अस्मिन् विषये अनुकूल-प्रतिकूलाः ये विद्वत्सु विचाराः आसन् ते तु अतीव प्रवृद्धाः । अप्पाशास्त्रिभिः पुनः एतस्मिन् विषये चन्द्रिकायाम् आत्मीयः अभिप्रायः प्रकाशितः । सोऽयम्—

" **ब्राह्मणेष्ववस्थाने वैमत्यम्** — पुण्यपत्तने (POONA) केनापि द्विजन्मना यागश्चिकीर्ष्यते । किं तु सोऽयं याजुषो यागेऽस्मिन् याजुषैरेव मन्त्रैर्हौत्रं विधातुम् अभिलषति । बह्वृचानाम् एव पुनर्होत्रम् आम्नायते । अभिमानस्तु दीक्षितीभूष्णोर्नैतद् रोचयत इत्यहो प्रकारो धार्मिकत्वस्य । संदृश्यते क्वचित् क्वचिदेवं याजुषाणां बह्वृचैः समं निष्कारणो द्वेषः । आत्मघातमात्रफलः पुनरेष इति नैतद् विस्मरणीयं विद्वेषिभिः । " इति ।

ततः परं तु अस्मिन् एव समये वाईक्षेत्रवासिभिः श्रीकाशीनाथ-शास्त्रिभिः स्वीये '**धर्म**-'संज्ञके महाराष्ट्रभाषामये मासिकपत्रे, 'याजुषैः याजुषम् एव हौत्रं कर्तव्यम्' इत्यभिप्रायात्मकः लेखः प्रकाशितः । ततश्च ऋग्वेदि-यजुर्वेदि-ब्राह्मणेषु परस्परं वैमत्यं परां काष्ठाम् आरूढम् । ततश्च कदाचित् श्रीमज्जगद्गुरु-श्रीशंकराचार्याणाम् आगमनं यदा पुण्य-पत्तने समभवत् तदा तेषां पुरतः अयं विषयः समाहितः अभवत्। पर-स्परं वैमत्यं च ततः प्रभृति शान्तम् अभूत् ।

**४२. अहो प्रभावः कलि-हतकस्य ! ! !**

यथा पुण्यपत्तने प्रकारान्तरेण धर्मविप्लवः समारब्धः तथैव ततोऽपि वा समधिकतया प्रादुरभवत् सोऽयम् इदानीं कोल्हापुरे। अस्मिन्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हि वत्सरे कोल्हापुराधिपतिना श्रीमता **शाहुमहाराजेन** राजप्रासादे पौरोहित्यकार्यं कुर्वाणः राजोपाध्यायमहाभागः स्व-सदनात् दूरीकृतः, अपहृतं च अस्य प्रातिवार्षिकं वेतनम्। अत्र किल हेतुः सोऽयं पुरोहितः राज्ञः धर्मकर्मसु वैदिक-मन्त्राणां प्रयोगं न अन्वमन्यत इति। राजोपाध्याय-महाभागेन अपि देहलीनगरीय-प्रधान-न्यायाधिकरणं यावत् अभियोगं प्रचाल्य प्रयतितं स्वधनादि प्रतिलब्धुम्। किं तु दुर्भाग्यवशात् न अयम् एतत् संपादयितुं शशाक। एतद् वृत्तं च बहुलीभूय राजपरिवार-संबन्धिषु पुरोहित-परिवार-संबन्धिषु च दृढं वैमत्यं प्रतिष्ठाप्य तदानीं ब्राह्मण-ब्राह्मणेतर-संघर्षे परिणतम्। वेदोक्त-प्रकरणम् इति संज्ञान्तरेण अपि प्रथितम् अभूत्।

अस्य च प्रारम्भः कोल्हापुरे १८२२ शकवर्षे जातः। तदानीं वृत्तान्तोऽस्य निःशेषतः अपि अप्पाशास्त्रिभिः संस्कृत-चन्द्रिकायाः अष्टम-खण्डस्य अन्तिमाङ्क-द्वये प्रकाशितः। अयं विषयः श्रीमद्-अप्पाशास्त्रिणां जीवित-स्पर्शी इति सोऽयम् अत्र समुल्लिख्यते।

परिचायित-पूर्वम् एव एतत् श्रीअप्पाशास्त्रिणः सनातन-धर्मे गरीयांसः श्रद्धालवः इति। किं बहुना ? संस्कृत-प्रचारेण सह धर्म-प्रचारोऽपि आसीत् एतेषाम् उद्देश्यम्। अतश्च धर्म-व्यतिक्रमः मनाक् अपि एतेषां मनसि स्वास्थ्यं नाम न अस्थापयत्। एतेषां वाङ्मये मात्रयाऽपि धर्म-विरोधः क्वापि नैव दृश्यते। अनुवादाः अपि हि एतेषां धर्म-विरुद्धम् अंशं वर्जयित्वा परिवर्त्य वा प्रावर्तन्त इति का कथा आचरणस्य ? अत एव तदानीं कोल्हापुरे संघटितो धर्म-व्यतिक्रमः एतेषां हृदयम् उन्ममन्थ। अष्टम-वर्षीय-चन्द्रिकायां च सोऽयं वृत्तान्तः प्रकाशितः अभवत्। एष च वाचस्पतीनाम् एव शब्दैः अंशतः निवेद्यते—

> **"महाराष्ट्रीयवृषलाः क्षत्रियत्वं वेदोक्तक्रिया ब्राह्मण-क्षोभश्च।**
> **निक्षिप्यतामत्र सनातन-धर्म-महामण्डलादिभिश्चक्षुः।**
> **धर्मो विश्वस्य जगतः प्रतिष्ठा।**

कोल्हापुरे महालक्ष्मीः साक्षान्महिषमर्दिनीति हि वदन्ति पुराणानि। एतां किल देवेश्वरीं स्नानपरिपूताः पवित्रतमोद्गमनीयधारिण एव विप्रोत्तमाः स्प्रष्टुमर्चयितुं वा प्रभवन्ति। कलिकालप्राबल्यात् पुनरत्रापि तथा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधं धर्मान्दोलनं संबभूवेति यत् सत्यं विमनायते नश्चेतः। अतीत-श्रावण-मास-उपाकर्म-दिने केनापि ब्राह्मणकुल-जन्मना पुरुषेण वैदिकमन्त्रैः केषांचिन्महाराष्ट्रीय-वृषलानां मराठा-जातीयानां मन्दिरेषु उपाकर्म व्यधायि। नवरात्रोत्सवस्यादिमे दिवसे निवेदितं धर्माधिकारिणा यत् सेवेकर्युपाह्वो नारायणभट्टो नाम कश्चिन्मराठा-जातीयानां कर्माणि वैदिकमन्त्रैर्निर्वर्तयतीति बहिष्कृतोऽयं न व्यवहार्य इति। अथापरेद्युरयं नारायणभट्टः प्रातः उपागत्य देवीमन्दिरं विद्यमान एव देवलके देवीं स्नापयामास। अव्यवहार्यजन-स्पर्श-दूषिता किल महालक्ष्मी-प्रतिमेति प्रोक्षणविधिम् अन्तरा नास्या शुद्धिरिति तं विधिं यावन्नानुष्ठेयं पूजनादिकं नित्यं कर्मेति निर्णीतं ब्रह्मवृन्देन। विचिन्तितं च राज्ञैव रक्षणीयो धर्मः प्रतिक्षेपणीयाश्च धर्मक्रिया-प्रत्यूहा इति श्रीमन्महाराजाय निवेद्य वृत्तमिदं निवारणीया धर्मव्यापत्तिरिति। अथ प्रमुखतमं ब्राह्मण-द्वयम् आहूय तेन समं महाराजेन किमपि समभाषि। प्रतिनिवृत्य च प्रोक्षण-विधिना संशोध्य भगवत्याः प्रतिमां प्रात्यहिक-विधिं निर्वर्तयामासुः।

राजमन्दिरे क्षत्रियोचितेनैव विधिना कर्माणि प्रविधीयन्ताम् इति आज्ञप्ताः श्रीमता छत्रपतिमहाभागेन मौलाः स्वीय-पुरोहित-प्रभृतयो विप्राः। अहो कस्य वा मनसो नैतत् खेदाय। यत्र किलानुपनीता ब्राह्मणा अपि नाधिक्रियन्ते कथं नाम तस्मिन्नेव वेदाध्ययनेऽधिक्रियन्तां वृषलाः। मराठा-जातीयानां शूद्रत्वं प्रति तु नास्त्यंशतोऽपि संदेहः। अभीष्टम् एव स्व-स्व-वर्णोचिताचरणं सर्वेषाम् अपि। स्मर्यतां च —

**'धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः'** इति भगवतो मनोर्वचनम्।

संस्कृत-चन्द्रिकाया जीवितस्य यानि नामोद्देश्यानि तेष्वन्यतमं प्रधानम् एव च सनातन-भारत-धर्मोन्नतिरेव। शास्त्रेण युक्त्या च किमपि परित्यज्य पक्षपातम् अवश्यं लेखनीयम् अस्माभिः।

**"येनास्य पितरो याता येन याताः पितामहाः।**
**तेन यायात् सतां मार्गं तेन गच्छन् न रिष्यति॥**

— इति भगवतो मनोर्वचनं निर्दिश्य सांप्रतं विरमामः।"

एवं प्रदत्तोऽयं १८२९ शाकीयो वृत्तान्तः। तदूर्ध्वं शनैः शनैः प्रवृद्ध-ब्रह्म-द्वेषेण कोल्हापुराधिपतिना दूरीकृताः पारंपर्यक्रमेण आगताः विरो-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धिनः विप्राः, पुरोहितश्च स्वकीयः नारायणभट्ट-राजोपाध्ये-महाभागः वार्षिकात् पञ्चविंशति-सहस्र-रूप्यकात्मकात् वेतनात् प्रच्यावितः। तदूर्ध्वं वाचस्पतयः अभिप्रयन्ति स्म—

'किं तु सर्वथा नामशेषतामुपगतायामपि संपदि नांशतोऽपि परित्यक्तः स्वीयो धर्मः श्रीमता राजोपाध्येनेत्यहो माहात्म्यमेतस्य। यद्यपि राजोपाध्यायीयेऽत्र विवादे भूतलसमवसितप्रायाण्येव न्यायाधिकरणानि तथापि विद्यतेऽद्यापि चरममधिकरणं यत्र किलाधिकरणिको भूतभावनो भगवान्। कोल्हापुराधिपतिना च नैतद् विस्मर्यताम्—

**नाधर्मश्चरितो लोके सद्यः फलति गौरिव।**
**शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति॥**

इति मानवं वचनम्। शिथिलीक्रियतां चात्मनोऽभिनिवेश इति विज्ञाप्यते।' इति। (सं. चं. १२।४)

तदनु तत्र तत्र कर्मणि स्वात्मनोऽनुकूलान् धनलुब्धान् जनान् नियोज्य कोल्हापुरराजेन अमुना संकेश्वर-जगद्गुरु-पीठाधिष्ठिताः श्रीशंकराचार्यशिष्यस्वामिनः स्वकीयाभिप्रायार्थं प्रार्थिताः। तैः अपि व्यवस्थापितम् अस्य क्षत्रियत्वम् अनुज्ञातं च वैदिक-मन्त्राद्यनुष्ठानम्।

यदा च अयं वृत्तान्तः श्रीअप्पाशास्त्रिभिः श्रुतः तदा नासीत् एतेषां संताप-पारावारस्य मर्यादा नाम। महाराजापेक्षयाऽपि जगद्गुरु-पीठाधिपतौ भृशं प्रक्षुब्धाः एते। सप्रमाणं च संसाधितम् एतैः श्रीजगद्गुरु-निर्णयस्य धर्म-विरोधित्वं, प्रार्थिताः च एतन्निर्णयाय नाना-प्रदेशस्थाः पण्डिताः। तेऽपि सर्वे श्रीजगद्गुरुनिर्णयस्य प्रतिकूलाः एव आसन्। मुद्रिताः च सर्वेऽपि तेषाम् अभिप्रायाः चन्द्रिकायाम्। पुनः पुनः उद्घोषितं च—'कोल्हापुरमहाराजो न क्षत्रियः परन्तु शूद्र एव। तस्य च वैदिक-मन्त्रैः संस्कारादिकरणे जगद्गुरुणा प्रदत्तो निर्णयः सर्वथा शास्त्र-विरुद्ध एव।' इति।

अहो धाष्ट्र्यम् श्रीअप्पाशास्त्रिणाम्! यद् एतैः नैव गणितः आत्मीयः आधारोऽपि। चन्द्रिकायाः पञ्चम-खण्डे अप्पाशास्त्रिभिः एव **श्रीशाहु-**राजकुमारस्य जयन्ती प्रशंसिता आसीत्। सर्वथा सत्यम् इदम्—

**"वज्राद् अपि कठोराणि मृदूनि कुसुमाद् अपि।**
**लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति?"** इति

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**४३. संस्कृत-पण्डिता अवश्यं प्रवर्तेरन् ।**

सप्ततारे (सातारा) घटितस्य महाराष्ट्र-साहित्य-संमेलनस्य वृत्तान्तं निवेद्य प्रोक्तम् अप्पाशास्त्रिभिः —

"संस्कृत-भाषयाऽपि काव्यादि-प्रबन्ध-निर्मातॄणाम् एवंविधम् एव संमेलनं प्रतिवत्सरम् एव तत्र तत्रावश्यकम् इति अभिप्रेमः। एतेन हि समुपचीयेत पण्डितानां प्रेम। शक्येत च संभूय संमन्त्र्यात्मनोऽभीष्टं साधयितुम् आरोपयितुं च अभ्युदयपथे धर्मम् इति। सत्यानुकूल्येऽवश्यम् अत्र नचिरादेव प्रवर्तितुम् इच्छामः।" इति। राजकीयान्दोलनम् उपवर्ण्य प्राहुः अप्पाशास्त्रिणः —

" अपरेषां पुनर्गरीयान् रोषारुणः कटाक्षः संस्कृत-पण्डितेषु अस्मासु। ते खल्वाहुर्न जानते स्वीयस्य देशस्य लाभं हानिं वा संस्कृत-पण्डिताः इति। किं तु नैतद् अनुमन्यामहे। यदि हि भारतवर्षेऽत्र केऽपि स्वधर्ममात्रनिष्ठाः स्युस्तर्हि तेषु संस्कृत-पण्डिता एव प्रवराः। अतश्च नांशतोऽपि स्वीकुर्युरेते वैदेशिकवस्तुजातानि। संस्कृत-पण्डिता अपीदानीं सुदूरम् उज्झित्वाऽऽलस्यम् अवश्यम् अत्र कर्मणि प्रवर्तेरन् गोचरीकारयेयुश्चापरेषाम् आत्मनः स्वदेशप्रणयातिशयम् इति प्रार्थयामहे।" इति।

**४४. अकाण्ड एव व्याधिभिः आक्रान्ताः।**

एवमुत्तरोत्तरं प्रबन्धानां मिथः स्पर्धया इव चन्द्रिकां प्रोद्भासयताम् अप्पाशास्त्रिणां १८२७ शाकवर्षस्य आश्विने मासे दुर्धरः ज्वरः समुत्पन्नः। तेन हि आक्रान्ताः एते न चन्द्रिकाङ्कं यथा-समयं प्रकाशयितुं प्राभवन्। निवेदितं च एतद्विषयकं निदानं **विज्ञानचिन्तामणि**-पत्रिकाद्वारा अप्पाशास्त्रिभिः। अतश्च विलम्बितेऽङ्के कृता पाठकमहाशयेषु विज्ञप्तिः —

"अतीते हि आश्विनेऽकाण्ड एव नानाविधैरामयैः विशेषतः च दुःसहतमेन ज्वरेणाक्रान्ताश्चलाचलजीविताः समभूम। अविन्दाम चैकान्तत एव निःसारत्वम्। न च प्राभूम रुग्णशय्यातः समुत्थातुम् अपि। कालातिक्रमं खल्वेतम् असहमानैर्भूयोभिरेव पाठक-महाभागैः सविशेषम् उपालब्धाः स्मः। उपालम्भः पुनरयमेतत् कृतो नांशतोऽपि व्यथयति हृदयमस्माकम्। प्रत्युत सविशेषम् एवाह्लादयति। स हि निरतिशयम् एषाम् औत्सुक्यमिव चन्द्रिकाया अपि सहृदयाह्लादकताम् अभिव्यञ्जयतीति। इदानीं किल

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भगवतो मृत्युञ्जयस्यानुग्रहेण सर्वथा निवृत्तामया यथापुरम् अलंकर्मीणताम् अनुप्राप्ताः स्म इति युगपत् एव प्रकाश्य चन्द्रिकायाः संख्या अग्रेऽपि नियतावसरम् एव एनां प्रकाशयिष्याम इति प्रतिजानीमहे ।" इति ।

**४५. अयि करधन-महोदय ! गम्यताम् अपुनरागमनाय ।**

चन्द्रिकायाः द्वादशवर्षीये षष्ठेऽङ्के लॉर्ड कर्झनस्य अधिकार-त्याग-विषयिणी वार्ता प्रकाशिता । साभिप्रायोऽयं वृत्तान्तः अप्पाशास्त्रिवचः सुधामयः निपीयतां पाठकैः, येन वृत्त-विलेखन-चातुर्येण सह राजकीयं निर्भीकत्वम् अपि स्फुटीभवेत् विद्यावाचस्पतीनाम् । एवम् एषः —

"मासे किलास्मिन् प्राधानिकी घटना नाम भारतवर्षाधिकृतस्य भारत-वर्षीयान् अस्मांस्तृणाय मन्यमानस्य वाङ्मात्रोदारस्य वङ्गविच्छेद-कृतार्थात्मनः प्रजानुरागानास्पदस्य प्रकृति-प्रक्षोभ-दावानलानिलायमानस्य लार्ड-करधनस्य भारताधिकार-त्यागः । यः किल सुदूरम् आरोहति सोऽयम् अवश्यं पतति । तदुच्यतेऽभियुक्तैः —

**गतिः सोच्छ्रायाणां पतनम् अनूकूलं कलयति** । इति । **अत्यारूढः पतति ध्रुवम्** इति च । भारताधिकृतपदम् अधितिष्ठतः किल लॉर्ड-करधनस्य प्रत्यासन्न-प्राय इवाभवत् स्वर्गः । तत्सदृश एवायम् अस्य विनिपातः । दिष्टचा संपादितोऽयम् अमुष्य पदपरित्यागो भारतवर्षप्रणयिना विधिनेति प्रमोदामहेतमाम् । सैनिकाधिकरण-संबन्धिनि कस्मिंश्चित् कर्मणि नांशतोऽपि साफल्यम् आपेदे लॉर्ड-महोदयस्य प्रत्याशेति परित्यक्तं भारताधिकृतपदम् एतेन । निष्कारणमेव किन्नरवर्षापगणस्थानादिषु दूतपरिषदः प्रेरणम् अनागःसु किन्नरवर्षीयेषु शस्त्रपातस्तज्जन्य-व्ययस्य च भारत-वर्ष-शिरस्यारोपणं भारतवर्षीय-भूपानां सपरितोषं भूपतिपद-परित्यागः शिक्षणावनतिश्चेति भूयांसि किल चिरस्मरणीयानि व्यधीयन्त कर्माणि भारतवर्षं रसातलं गमयताऽनेन वावदूकेनेति नात्र संदेहः । अतःपरं चेत् असाववस्थास्यत कियन्तं चित् समयं सदाऽवश्यमितोऽपि स्मरणीय-तराणि कर्माणि समघटिष्यन्तेति नास्ति नः संदेहो नाम । किं तु नोत्कण्ठते नश्चेतो लीलातिशयम् अमुष्यैवंविधम् अवलोकितुम् इत्यत एव प्रशंसामहे विधातारम् । अपि लॉर्ड-करधन-महोदय शिवास्ते पन्थानः । गम्यताम् अपुनरागमनाय ।" इति ।

एवम् एतेन राजकीय-तन्त्र-वेत्तृत्वम् अप्पाशास्त्रिणां स्पष्टीभवति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**४६. प्रज्वाल्य गरीयांसं स्वदेश-प्रणय-पावकम्**

वङ्गविच्छेदान्यायेन संतप्ताः भूयिष्ठाः वङ्गीयाः स्वराष्ट्रानुरागिणः वैदेशिक-वस्तु-होलिका-दीपनम् अकुर्वन् । पुण्यपत्तनेऽपि एतस्यैव कर्मणः प्रात्यक्षिकम् इव अभूत् । तत्रापि हि स्वराष्ट्र-नेतृ-महत्तरैः प्रज्वाल्य पावकं दग्धानि वैदेशिकानि वस्तूनि । वृत्तान्तम् इमं श्रीअप्पाशास्त्रिणां लेखनी एवं निवेदयति —

"पुण्यपत्तनेऽपि विजय-दशम्यां सीमोल्लङ्घन-यात्रायां विधाय महीयसीं होलिकां जुह्वाञ्चक्रुः अस्यां वैदेशिक-वसनानि प्रधान-प्रधाना नागरिका इति श्रूयते । नैतन्न युक्तम् । किं तु प्रज्वाल्य गरीयांसं स्वदेश-प्रणय-पावकं यदि तत्र हूयते वैदेशिकवस्तुवाञ्छामयं हव्यं तदा नामैतोऽपि साधु स्यात् इति मन्यामहे । बाह्येभ्योऽपि हि कर्मभ्य आन्तराण्येव प्रशस्यन्ते भूयिष्ठफलदातृतया चोपवर्ण्यन्ते विद्वद्भिः इति । एवं हि मूलत एवच्छिन्नो वैदेशिकवस्तु-द्रुमो नांशतोऽपि पल्लवैः फलैर्वा युज्येत प्रत्युतानायासम् एवोर्ध्वशोषं शुष्को नामशेषताम् उपगमिष्यतीति ।"

अनेन तावत् स्वातन्त्र्यान्दोलन-मर्म-पाण्डित्यम् अपि विद्यावाचस्पतीनां प्रोद्भासते । न सन्ति स्वदेशीयानि वस्तूनि रमणीयानि, विद्यन्ते च तादृशानि वैदेशिकानि स्वल्पमूल्यानि अपि इति प्रलपद्भ्यः तर्जन-चपेटिकां प्रयच्छन्ति अप्पाशास्त्रिणः —

"अतः समवलम्ब्योत्साहं सुदूरं च समुत्सार्य तुन्द-परिमृजत्वं गेहेनर्दित्वं वा प्रतिज्ञायतां स्वदेशीय-वस्तु-स्वीकारस्ततश्चापेक्ष्यतां लभ्यन्ते न वा तानि तानि वस्तूनीति । विलासशीलत्वं चैतन्नेदानीं समुचितं भारतवर्षीयाणाम् । तद्धि यदि स्यात् कथंचित् समुचितं तदा संपन्न-देशोद्भवानाम् एव स्यात् न पुनरश्वस्तनिकवृत्तीनां भारतवर्षीयाणाम् ।"

एवं स्वदेशीयान्दोलनं राष्ट्रियं शिक्षणं च अधिकृत्य लिखितः '**जठरपिठरी दुष्पूरेयं करोति विडम्बनाम्**'— इत्ययं लेखोऽपि कामपि दीप्तिम् उद्योतयति । अनेन हि भारत-राष्ट्र-हित-चिन्तकत्वम् अपि विद्यावाचस्पतीनां प्रतिष्ठितं भवति ।

**४७. द्वादशखण्डीया वाङ्मयसंपत्तिः ।**

संस्कृत-चन्द्रिकायाः द्वादशे खण्डे न केवलं धर्म-राष्ट्र-विद्रोह-समालोचकाः एव प्रबन्धाः अवतारिताः अप्पाशास्त्रिभिः, अपि तु यथाप्रतिज्ञं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पूर्ववत् नानाविधाः एव । गद्यकाव्ये वङ्गीयकादम्बर्याः इन्दिरायाः सुमनोहरोऽनुवादः इदानीं पूर्वतः अनुवृत्य प्रचलितः । पद्यकाव्यम् 'आक्रन्दनम्' परिचायितपूर्वम् । विधवोद्वाहः अब्धियाने निर्णयः इति धर्मशास्त्रीयौ, परःशब्देऽभिप्रायः इति वैयाकरणः, श्रीसदानन्दयतिः, श्रीमान् बालकविः, श्रीमान् विश्वनाथः इति कवि-पण्डित-चरित्रमयाः, समालोचनाः, संवादाभिप्रायाः, मासावतरणिकाः च इति बहुप्रकारैः अप्पाशास्त्रिकृत-प्रबन्धरत्नैः समुज्ज्वलीभूतः अयं खण्डः । विशेषतः पुनः अस्मिन् संवादाभिप्रायाः समालोचनाः प्रासंगिकनिवेदनाः च विराजन्ते इति निर्विवादम् । षष्ठाङ्के प्रकाशितः 'प्रत्यक्षग्राह्यः पारलौकिक आत्मा' इति प्रवन्धः भौतिकाध्यात्मिक-विज्ञानसंवादं प्रकटयति । अमेरिका-देशे विज्ञान-मन्दिरे गेट्स-संज्ञकेन विज्ञानि-प्रवीरेण कस्मिन् अपि मूषके विशिष्ट-किरणानां प्रयोगः कृतः । यदा च अयं मृतः तदा शरीरम् एतस्य पारदर्शकं समभवत् । छाया च काऽपि मूषक-समानाकारा एव ऊर्ध्वं-गामिनी बभूव । अत्र वदन्ति अप्पाशास्त्रिणः —

"तत्समानाकारैव काऽपि छाया ऊर्ध्वं गच्छन्ती कियद्दूरम् अतिक्रम्यान्तरधात् । निपुणतरं च विस्पष्टं च प्रत्यक्षीकृतेयं गेट्समहोदय-संनिहितैरपरैरपि वैज्ञानिकैः । आसीच्च तदानीम् अप्येषोर्ध्वम् एव गच्छन्तीत्यहो प्रभावो विज्ञानस्य ! प्रिय-पाठकाः ! सोऽयम् एव सूक्ष्मशरीराख्यः पारलौकिक आत्मा ।

प्रियपाठकमहाभागाः ! संदृश्यतां प्रभावोऽयं विज्ञानस्य येन किल स्थूलदृशाम् अप्रत्यक्षः पारलौलिकोऽप्यात्मा नयनगोचरीक्रियते । एतदेव च लिङ्गशरीरं सूक्ष्मशरीरं चाख्यायते । एतच्च सेन्द्रियम् एवेति श्रुत्यादीनां सिद्धान्तः । गेट्समहोदयस्तु च्छायेयं सेन्द्रिया निरिन्द्रिया वेत्यनुसंधातुं प्रयतत इति श्रूयते । सर्वथा जितं मुनिमतेनेति शिवम् ।" इति ।

एवं पाश्चात्त्य-वैज्ञानिकानाम् आविष्कारं प्रशंसन्तः अपि विद्यावाचस्पतयः स्वकीय-संस्कृतेः प्रणयम् अभिमानं श्रद्धां वा नैव परिजिहीर्षन्ति इति निध्यायताम् एतत् वैशिष्टचम् ।

**४८. अनभिज्ञा हि मोक्षमूलरादयः ।**

एवं नानाविषयेषु प्रबन्ध-विलेखन-चणानाम् अप्पाशास्त्रिणां वैशिष्टचं तथा विभ्राजते स्म । यथा उक्तं मल्लिनाथेन —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'**लोकेऽभूद् यदुपज्ञमेव विदुषां सौजन्य-जन्यं यशः**' इति ।

सनातन-धर्म-प्रणयः अमीषां यथा आचारात्मकः तथा संरक्षणात्मकः अपि आसीत्। तत्र तावत् ख्रिस्त-धर्म-प्रविष्टानां दायविभागविषये प्रोक्तम् अप्पाशास्त्रिभिः —

"ख्रिस्तादिधर्मं प्रविष्टा अत एव च पतिता आर्यजातीयाः सर्वेऽपि जनयितुर्दायम् अर्हन्तीति धर्म-शास्त्र-विरुद्धम् अशेषेऽपि च भारतवर्षेऽद्य यावद् अन्यत्रादृष्टश्रुतपूर्वं किमप्यनुशासनं महिशूरपुराधिपतिनाऽऽत्मनो राष्ट्रे प्रचारयितुं सज्जीकृतम् । मन्यामहेऽनुशासनम् इदं विनिर्मितवता भङ्ग्यन्तरेण प्रोत्साहिता एव स्वधर्म-परित्यागे भारतवर्षीया महिशूराधिपतिनेति ।" इति ।

'**ऋग्वेदाचे मराठी भाषान्तर**' इति महाराष्ट्र-भाषामय-पुस्तकस्य समालोचनासमये लिखितं विद्यावाचस्पतिभिः —

"आवश्यकं किल श्रुतीनां पठनम् इवार्थ-ज्ञानम् अपि द्विजातीनाम् इत्यत्र नास्ति नः स्तोकोऽपि संदेहः । किन्त्वनुवादेनामुना त्रैवर्णिकमात्रोपयोगिना भवितव्यम् । न पुनर्वर्णान्तरेऽस्य प्रचारोऽनुमन्यतेऽस्माभिः । न किल वयम् ऋग्वेदस्यार्थज्ञानेन नानाविधानि प्राचीनतत्त्वान्यनुसन्धीयेरन् इत्यत एवास्यावश्यसंपादनीयतां ब्रूमः । किं तु श्रुतिविहिततयापूर्वजनकत्वादेव । प्रमाणं हि सर्वथा नः श्रुतिरेव । यत्तूच्यतेऽत्र कैश्चिदविगणितवैदिक-धर्म-मर्यादैरर्वाचीनैः संप्रति किल पाश्चात्त्या अपि—म्लेच्छा अपि—वेदार्थम् अवगच्छन्तीत्ययुक्त एवायं ब्राह्मणानां प्रलापो न शूद्रो वेदाध्यायी स्यादिति तदेतदुन्मत्तप्रलपितमेव । म्लेच्छैरप्यधीयन्ते श्रुतय इति नेदानीं ब्राह्मणैः शूद्राणां वेदाध्ययनं प्रतिषेध्यमिति वचनं तु संप्रति यौरोपीया अपि बाष्पयानादौ ब्राह्मणस्त्रीषु हठात् प्रवर्तन्त इति वरं स्वस्त्रीणां ब्राह्मणैः शूद्रसमागमानुमतिरेवेति प्रलपतो मूर्खधौरेयस्य वचनान्नांशतोऽप्यतिरिच्यत इति द्रष्टव्यम् ।

अर्थोऽपि च संप्रदायसिद्ध एव साधीयान् न तु धर्मान्तर-प्रसिद्धप्रबन्धैकवाक्यतानुरोधेन विनापि संप्रदायं शब्दसादृश्यादि-बलाद् विधीयमान इत्येव नोऽभिप्रायः । संप्रदायसिद्ध एव ह्यर्थः कर्तुरभिप्रेतो भवति । तेन ह्यसौ स्वशिष्येभ्य उपदिश्यते तैश्चात्मनः शिष्येभ्य इत्येवं शिष्यपरं-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परयैवायं प्रचरतीति । संप्रदायश्चायं व्याख्याभ्यः शक्यते प्रत्येतुम् । व्याख्यानाविरोधीन्येव चेत् कियन्तिचित् नव्यविज्ञानान्यनुसंधीयेरन्न किल तदा काचिदपि हानिः । किं तु सोऽयमेवंविधो मोक्षमूलरस्याभिप्राय इति भ्रान्त एवात्र सायनमहाभाग इत्यादयः कर्णारुन्तुदाः प्रलापा नांशतोऽपि शक्यन्ते सोढुम् अस्माभिः । अनभिज्ञा हि मोक्षमूलरादयो वैदिकसंप्रदायस्य अनधिकारिणः पाश्चात्त्या इति ।"

## ४९. भारत-धर्म-महामण्डलस्य अधिवेशनम् ।

वाराणसेय-भारत-धर्ममहामण्डलस्य महासंमेलनं १८२७ शाकस्य पौष-मासे क्रमशः श्रीकाश्यां प्रयागे च निर्वृत्तम् । श्रीमत्पण्डितमदन-मोहनमालवीयमहोदयैः एतादृशं विज्ञापनं प्रकटीकृत्य तत्तेषां धार्मिक-महत्तराणां संनिधौ प्रहितम् । श्रीमदप्पाशास्त्रिणां सकाशम् अपि तदेतम् उपस्थितम् । तदनु दरभङ्गास्थ-महामण्डल-सभापति-कार्यालयात् महा-संमेलनस्य कार्यक्रम-पत्रिकाऽपि संप्राप्ता । सेयं चन्द्रिकायाः अङ्के प्रका-शिता अप्पास्त्रिभिः ।

श्रीमदप्पाशास्त्रिणः इदानीं विविध-ज्ञान-विज्ञान-संपन्नाः स्वदेश-प्रणयिनः सनातन-धर्मानुयायि-गरिष्ठाः पत्रिका-संचालन-कुशलाः संस्कृत-पण्डिताः इति सुप्रथिताः आसन् । अतश्च नैतद् वक्तुम् अपेक्षितं यत् तेऽपि महामण्डलाधिवेशनार्थं समाहूताः इति । ततः परवर्ती निखिलः अपि वृत्तान्तः अप्पाशास्त्रिणां लेखन्या इत्थं प्रकाशितः —

"सहकारि-संपादकश्च (श्रीअप्पाशर्मा विद्यावाचस्पतिः) श्रीमता भारत-धर्म-महामण्डलेनाहूतो वाराणसीं प्रातिष्ठत । प्रस्थिताश्च वारा-णसीं न किल वाराणसीमात्रम् एव गत्वा प्रतिनिवर्तन्ते सनातन-धर्मानुया-यिन इति नूनं विदितम् एवैतदशेषाणाम् अपि भारतवर्षीयाणाम् । आदिमं हि अमीषां कर्तव्यं त्रिस्थलीयात्रेति । सत्यां पुनर्वाञ्छायाम् अयोध्यादीनि अपि कियन्तिचित् पावन-तमानि क्षेत्राणि संदृश्य प्रतिनिवर्तन्ते धार्मिकाः । सहकारि-संपादकोऽपि नन्वयं सनातन-धर्मानुयायिष्वेव अन्यतमः । अतो न एतद् आश्चर्यं यदयमपि विनिर्वर्त्य त्रिस्थलीयात्राविधिं गत्वा च अयोध्या-मथुरादिषु क्षेत्रप्रकाण्डेषु कृतयथोचिताचारो निवासम् आत्मीयं प्रति-निवृत्त इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा किल पुरा प्रकटीकृतम् आसीद् अस्माभिः तथा मासेऽस्मिन् पौषे श्रीमत्यां वाराणस्यां श्रीमतो भारत-धर्म-महामण्डलस्य अधिवेशनं समभूत्। अवसरेऽस्मिन् समुपतस्थुर्नाना-दिगन्त-त्रास्तव्याः पण्डित-प्रवराः महोपदेशक-महाभागाश्च। प्रथमतः किल श्रीमता जम्बू-महाराजेन प्रदत्ते महीयसि प्रासादे समवास्थाप्यत महामण्डल-कार्यालयः। तदनु शारदा-मण्डलम् अवास्थापि। प्रत्यहं च प्रातर् अन्तरङ्गसभा सायं च महामण्डले तेषां तेषां वाग्मिप्रवराणां व्याख्यानानि समभूवन्। अत्र च पञ्चमे दिवसे संस्कृत-चन्द्रिकायाः सहकारि-संपादकः संस्कृतभाषया आर्यधर्माख्यं विषय व्याख्यातवान्। अधिवेशनेऽस्मिन् प्रत्यहं परमहंसाद्युपाधि-मण्डिताः श्री १०८ गोवर्धन-पीठाधिपतयः श्रीमन्तो जगद्-गुरवः शंकराचार्याः समुपास्थिषत। सभापतिपदं पुनर्वाराणसेयेन पण्डित-प्रकाण्डेन श्रीमता **शिवकुमारमिश्रशास्त्रिणा**ऽलमकारि। यत्सत्यम् अतिमात्रं गरीयान् पण्डितः श्रीमान् **शिवकुमार-मिश्रः**। किं तु जगद्विलक्षणम् अपि पाण्डित्यं नहि श्रीमज्जगद्-गुरुपदाधिकारं लघूकर्तुम् अलं भवति। तथाकरण-प्रयासः च परम् औद्धत्यं गमयतीति नो बुद्धिः। अत एव च विदुषाऽपि सता **श्रीशिवकुमारमिश्रेण** यत् श्रीमतां जगद्गुरु-चरणानाम् उत्सङ्ग उत्सङ्गम् आधायेव निर्विशङ्कम् एवोपावेशि तद् एतत् परं दूषणायैवेति संमन्यामहे। औद्धत्यं पुनरेतद् अतिमात्रम् एवायुक्तम् एवंविधस्य वैदुष्यस्य चेति ब्रूमः। यैः च सत्स्वपि श्रीमज्जगद्गुरुचरणेषु महाभागोऽयं सभापतिपदम् अनुप्रापितस्तेऽपि नन्वत्र दूषणीया एव। अतः परं सति प्रसंगे नैवंविधो मान्यानाम् अतिक्रमो भूयाद् इत्याशास्महे।" इति।

अस्मिन् समये '**मित्रगोष्ठी**'-मासिक-पत्र-कार्यालयेऽपि तत्-सदस्यानां द्वितीय-वार्षिक-सभा समायोजिता। तस्याम् अपि वाचस्पतयः 'मित्रगोष्ठ्या उद्देश्यम्' इति विषयम् अधिकृत्य व्याख्यातवन्तः।

काशी-यात्रा-प्रसंगेन श्रीअप्पाशास्त्रिणः मथुराक्षेत्रे गताः। तदा तत्रत्य-विद्वद्गोष्ठ्या संमानपत्र-प्रदान-पुरस्सरं सत्कृताः एते। संमानपत्रं तु आत्मप्रशंसा-दोष-भिया न प्रकाशितम् एतैः। प्रार्थिताश्च मथुरा-विद्वांसः क्षमार्थम्।

इयं त्रिस्थली-यात्रा श्रीमदप्पाशास्त्रिणां सपरिवाराणामेव समभवत्। अनेन च महामण्डल-परिषदो वृत्तान्तेन जगद्गुरुपीठविषयिणी भक्तिः इव निर्भीकत्वम् अपि श्रीमद्-अप्पाशास्त्रिणां प्रकटीभवति।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

५०. भारतवर्षे च केतुमाले ( युरोप ) च सिंहले ( सिलोन ) च ।

सर्वाङ्ग-सुन्दरायाः संस्कृत-चन्द्रिकायाः प्रचारः उत्तरोत्तरं वर्धमान एवासीत् । यद्यपि मध्ये मध्ये भूयोभिः एव परित्यक्ता इयं तथापि रोचकम् आकर्षकं च अस्याः स्वरूपं क्रमशः शुक्लेन्दुकलावत् एव आसीत् । अत एव ग्राहकाणां न्यूनीभावे अपि चन्द्रिकायाः प्राचीन-खण्डानाम् अपि संग्रहः भूयोभिः एव कृतः । चन्द्रिका-खण्डानां समाप्तौ प्रतिमासं विज्ञापनं प्रददुः अप्पाशास्त्रिणः — 'संस्कृत-चन्द्रिकायाः पञ्चम-षष्ठ-दशमखण्डाः अपेक्ष्यन्ते । मूल्यं यथोचितं प्रदीयेत । ' इत्यादि ।

चन्द्रिकायाः नीवीधनस्य विभाग-ग्रहीतारः तु अद्यापि स्वल्पाः एव आसन् । द्वादश-खण्डीय-वत्सरान्त-विज्ञप्तौ निवेदितम् अप्पाशास्त्रिभिः— "कालम् एतावन्तं न किल विभाग-ग्रहीतॄणां संख्या दशतोऽपि अतिक्रान्तेति हन्त चित्रीयते नश्चेतः । अद्य यावत् केवलं सप्तैव विभाग-ग्रहीतारः संपन्नाः । त्रिचतुराश्च पुनः उदयपुरे संपत्स्यन्ते । यत्र किल त्रिंशत्कोट्यो मनुजानां निवसन्ति न किल तत्र दुःसंपादं नीवी-धन-विभाग-ग्रहीतॄणां शतम् एकमात्रमेवेति । यद्यपि भारतवर्षे च केतुमाले( युरोप )च सिंहले च भूयांस एव चन्द्रिकायाः प्रणयिनः संपन्नाः तथापि न अद्यापि सहस्रम् अतिक्रान्ता अमीषां संख्या । प्रार्थिताश्च अत्र विषये भूयो भूयः प्रियपाठक-महाभागा अस्माभिः यद् युष्मास्वेकैकेन संपाद्य नव्यम् एकैकं ग्राहकम् अनुगृह्यतां संस्कृत-चन्द्रिका यावच्छक्यम् इति । प्रियपाठक-महोदयाः ! न किल समीचीना सांपत्तिकी स्थितिः संस्कृत-चन्द्रिकाया इति न अद्य यावद् उपहारत्वेन किमपि पुस्तकादिकं प्रदाय संभाविताः श्रीमन्तः । समीहामहे पुनर्वत्सरेऽस्मिन् ( १८२८ ) कस्यापि पुस्तकस्य उपहरणेन आत्मानं कृतार्थीकर्तुं यदि दैवम् अनुकूलं स्यात् । " इति ।

एवं राष्ट्रभक्ति-प्रचाराय, धर्मसेवनाय, संस्कृत-भाषायाः परिचरणाय, चन्द्रिकायाः प्रसाराय, पाठकानाम् अनुरञ्जनाय च भृशम् उद्यमशीलैः अप्पाशास्त्रिभिः संपादितं रसिकानां स्वान्तेषु चिरकालिकम् अवस्थानम् । अत एव भूयसाम् एव विदुषां प्रशंसायाः पात्रभूतैः एतैः संस्कृतभाषायाः सौभाग्य-प्रकर्ष-पीयूष-वर्षी कोऽपि अपर एव संचिन्तितपूर्वः प्रयासः अङ्गीकृतः । यतः च सगौरवं च साभिमानं च सुदृढं च वयं सर्वेऽपि संस्कृतभाषायाः सजीवत्वं च समर्थत्वं च राष्ट्रभाषात्वं च सनिश्चयं प्रतिपादयामः । कः तावत् अयं प्रयासः किं च अस्य स्वरूपम् इत्यदि निखिलम् अपि अनुपदम् एव उत्कृष्टपर्वणि निभाल्यतां रसिकश्रेष्ठैः ।　　　　* * *

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## उत्कृष्ट पर्व।

### १. बहूपकरोति संस्कृत-भाषा-प्रणयिनाम्।

अष्ट वर्षाणि संस्कृत-चन्द्रिकां संपादितवद्भिः श्रीअप्पाशास्त्रिभिः भूयसी कीर्तिः संप्राप्ता। संस्कृत-भाषायाः चन्द्रिकायाः च संजीवने भृशं प्रयतमानैः ऋणधारिभिः अपि एतैः संपादितं स्वीय-परिश्रमस्य किमपि अवान्तरं फलम्। तत् हि नाम शारदीय-पूर्णेन्दु-समुज्ज्वलं यशः एव। अवान्तरमेव पुनः इदं फलम्। प्रधानं तु फलं प्रयासानाम् एतेषां संस्कृत-वाङ्मय-निनाद-माधुर्य-धिक्कृत-कोकिलरवं संस्कृत-राजनीति-परिपुष्टं स्वकीय-विद्या-तेजःप्रोद्भासि भारत-वर्षम् एव। इदं तावत् न दौर्भाग्य-परिपीडितेन तदानीन्तनेन समयेन समनुभूतं, नैव च अद्यापि मनागपि प्रादुर्भवितुं शक्यते। तथापि तादृशाय संस्कृत-प्रचारोद्योगाय महद् यशः एतेषां समुपकारि समभूत् इत्यत्र नास्ति स्तोकोऽपि संदेहः। चन्द्रिकायाः किल प्रशंसा भूयोभिः एव कृता। केरलीये विज्ञान-चिन्तामणि-संज्ञके संस्कृत-साप्ताहिक-पत्रे तत्संपादकैः पं. श्रीनीलकण्ठशास्त्रिभिः लिखितम् —

कोल्हापुराद्-राशिवडेकरोपाह्व श्रीमदप्पाशर्म-विद्यावाचस्पति-मिश्रैः प्रचार्यमाणा संस्कृत-चन्द्रिकाभिधाना मासिक-पत्रिका सरसैः आवश्यकैः उपपत्ति-बहुलैः प्रमाण-दर्शन-प्रतिष्ठितैः विविधैः उपन्यास-विशेषैः निष्पक्षपातैः निपुणं निरूपितैः समालोचना-विशेषैः सहृदय-हृदय-हरण-प्रवीणैः काव्यरत्नैर्हृद्य-वृत्तान्तविशेषैः सुभाषितैः सुष्ठुभिः अभिप्रायैः च तत्तद्विषयैः पण्डित-प्रकाण्डानां धर्म-मर्यादा-परिपालन-बद्ध-कङ्कणैः इतरैः अपि वाङ्मयैः अखिलाभिनन्दनीय-महिमा जयतितराम्।

सहकारि-संपादकोऽस्या राशिवडेकरोपनामक-श्रीमान् अप्पाशास्त्रि-महाभागो बहुकृत्वः समापतितान् अन्तरायान् विलङ्घयन् सार्थकीकृत्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमानाः प्रारब्धमुत्तमगुणा न परित्यजन्ति' इति सर्वाभिमताम् अभियुक्तसूक्तिम् उपनयन्नेनामुत्तरोत्तरम् उत्कर्षं बहूपकरोति संस्कृत-भाषा-प्रणयिनाम् अखिलानाम् इति निर्विवादम् इदम्। पुरातन-कवीनां चरित्रसंपादनं, भूगोल-विवरणं, तत्तच्छास्त्र-सिद्धान्त-विशदीकरणं, सरस-कविता-प्रकटनेन सहृदय-हृदयाकर्षणम् आख्यायिका-प्रकटनेन गद्य-विलेखन-मार्ग-विशदीकरणं, तत्तच्छास्त्रवादेन विविध-विज्ञेय-विषय-विवरणम् इत्यादिका उद्देशा अस्या अखिलाभिनन्दनीया एव। पुस्तकादि-समालोचना पुनरेतस्याः समीचीनैव। अन्ततः प्रकाश्यन्ते च तत्तद्वृत्तान्ताः सुविशदम्। विशिष्यास्माकम् आवर्जयत्यस्याः सरल-मधुरा भाषासरणिः। कालेऽस्मिन् विरलीभवति संस्कृत-भाषा-प्रचारे तत्-परि-पोषणार्थं दृढतर-निबद्धकच्छाः श्रीमदप्पाशास्त्रिसदृशाः महाभागाः समुचित-साहाय्य-प्रदान-पुरस्सरम् उत्सहनीयाः सर्वैरपि सारग्राहिभिः।" (विज्ञा. १७-१०-१९०५। १६-६-१९०६) इति।

एतेन विज्ञायेत पाठकैः महामहिमशालित्वम् अप्पाशास्त्रिणाम्। प्रायेण पत्रिका-संपादकाः स्व-गौरव-स्थापनार्थं पत्रान्तरं तत्संपादकं वा दूषयन्ति। परन्तु **विज्ञानचिन्तामणिः** संपादकः अत्र महीयान् अपवादः।

**२. प्रेष्ठाः संस्कृत-चन्द्रिका-संपादकाः।**

यथा किल पूर्वम् उक्तं तथा विज्ञान-चिन्तामणेः अभिप्रायम् एव अनुकृतवद्भिः भूयोभिः एव विद्वद्भिः प्रशंसिताः अप्पाशास्त्रिणः। उद्दिश्य खलु एतान् केचित् प्राहुः 'स्वस्ति निस्तुलाय वात्सल्याय।' अपरे प्रार्थयन्ते 'कोविदानां धौरेय! नमो नमः।' अन्ये निवेदयन्ति 'वर्षिष्ठाः संस्कृत-चन्द्रिका-संपादकाः प्रेष्ठाः! स्वस्ति।' इतरे अनुन-यन्ति 'आस्माकीन-प्रीतिभाजन! परम-विश्रम्भापण! प्रेष्ठ!' एके समा-ह्वयन्ति 'प्रियसुहृत्तमाः!' इति च इति च। भूयांसः पुनः असंतुष्यन्तः इव संमान-व्यञ्जकेन पदमात्रेण परिमण्डयन्ति विततां बिरुदावलिम्—'स्वस्ति श्रीमते सद्भारत-भू-वलय-स्फुरिताय नाना-सच्छास्त्र-परिशीलन-प्रमोदित-मानसाय महानुभावाय प्रियसुहृत्प्रवराय श्रीअप्पाशास्त्रि-विद्यावाचस्पति-महाभागाय सानुराग-विनय-प्रमोद-बहुमानं शतं नमांसि।' इति। एतेन च बहुमानप्रदानेन विद्वांसः परिचितवन्तः श्रीमदप्पाशास्त्रिणां ध्येयं, वैदुष्यं,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कौशल्यं, पत्रिका-संपादन-कलावत्तां च इति स्फुटीभवति। इदं पुनः प्राप्ति-पत्रम् एव भगवत्या: संस्कृतभाषायाः सेवायाः इति मन्यामहे। कालेऽस्मिन् श्रीअप्पाशास्त्रिणां यशोभूमिका तादृशीं सुषमाम् अवाप यादृशी कस्यांचित् भाद्रपद-मासावतरणिकायां तैः एव वर्णिता — (सं. चं. १३। ६)

सुस्नाताम्बुधरावलीविगलितैरम्भोभिरच्छप्रभा
प्रोद्यच्छीतमरीचिभानुपटलीपाटीरसञ्चर्चिता।
भ्राजच्छ्यामलशाद्वलैकवसना फुल्लाम्बुजप्रोल्लसद्-
भृङ्गैकालकशालिनी विजयते भाद्रे भृशं श्रीरियम्॥ इति॥

३. विहाय पुण्यतमं सुर-सरित्-तीर-निवासम् —

कोल्हापुरीयं वेदोक्त-प्रकरणं वाचकमहाभागैः पठितपूर्वम् एव। तद्विषये बहूनां पण्डित-प्रकाण्डानां मतानि चन्द्रिकायां प्रकाशितानि। सर्वाणि पुनः एतानि अप्पाशास्त्रिणाम् एव अभिप्रायं द्रढयन्ति स्म। कोल्हापुरीय-जगद्-गुरु-पीठ-पदाधिकारिणः, अन्ये च केचित् श्रीमदप्पाशास्त्रिणां प्रति-कूलाः आसन्। ये चैवं महाभागाः तेषु एव कश्चित् अन्यतमः काशीनिवासी यतिः कृष्णानन्दो नाम। एतेन खलु कोल्हापुर-नृपतेः श्रौत-कर्मसु अधिकारं प्रतिष्ठापयितुकामेन 'अधिकार-परामर्श' इति निबन्धः अप्पाशास्त्रिणां सकाशे प्रेषितः। विलोक्य तु परामर्शस्य शास्त्रार्थ-वैकल्यम्, अत एव च धर्मविरुद्धत्वं, खण्डितः अयम् अप्पाशास्त्रिभिः। चन्द्रिकाया १८२८ शाकीये चैत्राङ्के 'परामर्श-प्रतिक्षेपः' इत्याख्यः अयं तत्-खण्डन-प्रबन्धः प्रकाशितः। एतं च वृत्तान्तम् उपश्रुत्य अप्पाशास्त्रि-सहमतैः वाईवासि-श्रीकाशीनाथ शास्त्रि लेले महोदयैः स्वीये 'धर्म'-नामके महाराष्ट्रभाषामये मासिक-पत्रे सानुवादं संमुद्रितः अयम्। परामर्श-प्रतिक्षेपस्य आमुखे गर्जन्ति अप्पा-शास्त्रिणः —

"विहाय पुण्यतमं सुर-सरित्-तीर-निवासं कोल्हापुरम् अनुप्राप्तः कश्चन वाराणसेयो यतिः कृष्णानन्दो नाम। साधयितुकामः कोल्हापुराधि-पतेः क्षत्रियभावं पत्रिकाम् एकाम् अधिकारपरामर्शाभिधां महाराष्ट्र-भाषया संदृभ्य प्राक्षिपत् सुष्ठु धूलीपटलं केषांचित् नयनेषु। पत्रिका पुनरियमनिवेदयन्त्येव प्रेरयितुः नाम प्राप्तवती नः कार्यालयं गलहस्तितवती च कृष्णानन्द-विषयिणीम् आस्माकीनां पाण्डित्यश्रद्धाम्।" इति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**४. न किल प्रज्ञा नाम केवलं वैदेशिकेष्वेव ।**

श्रीमदप्पाशास्त्रिणां समये वैदेशिक-शासनस्य दृढत्वेन सामान्यजनाः शासकानां तद्देशीयानां तत्पक्षीयाणाम् एव च प्रशंसने कृतार्थतां मन्यन्ते स्म । लक्ष्मीवतां धुरीणाः हि सकलानाम् एव गुणानां पात्रीक्रियन्ते । किं पुनः प्रभुत्वसंपन्नाः ? अत एव च नैतत् आश्चर्यं यत् आङ्ग्लविद्वांसः आङ्ग्ल-देशीयाः भाषिणः एव च परमार्थतः प्रज्ञावन्तः इति शासक-मुख-प्रेक्षिणः अमन्यन्त । पत्रिकादि-प्रचारणस्य तत्-सौष्ठव-संपादनस्य च कौशल्यं मनाग् अपि नास्ति एतद्देशीयेषु इति भूयसाम् एव विचारः अवर्तत । नित्यं व्यवहार-प्रयुक्तासु प्रादेशिकभाषासु तद् इदं दुर्घटं, ततश्च संस्कृत-भाषा-ग्रथित-पत्रिकाणाम् अवस्था ततोऽपि हीना एव इति सुबोधम् एतत् । अतश्च मनोज्ञपत्रिकाणां संस्कृतविश्वे सर्वथाऽभाव एव इति च । समीक्ष्य पुनः एतां केषांचित् विचारधोरणीं संस्कृत-पत्रिकाणाम् आदर्शं प्रतिष्ठापितवद्भिः अप्पाशास्त्रिभिः कथं नाम मौनम् आलम्ब्यताम् ? कथं वा सोढव्यम् एवं-विधम् अपमान-निर्विशेषं वचः । ततश्च प्रत्युक्तम् एतैः —

" न किल प्रज्ञा नाम केवलं वैदेशिकेष्वेव विधात्रा निहिता येन समधिगतार्थाः स्वास्थ्यम् आपन्ना अपि भारतवर्षीयाः स्वीय-पत्रिकासु मनोज्ञत्वम् आविष्कर्तुं न प्रभवेयुः । किं तु द्रव्यमात्रायत्तं सर्वाङ्ग-रमणी-यतापादनं ग्राहक-जनानुग्रह-मात्रायत्तश्च पत्रिकाणां द्रव्याधिगमः । तद-भाववशादेव हीयमानकान्तीनि व्याकुलीभवन्ति प्रत्यहं स्वदेशीयानि संवाद-पत्राणीति जानन्तोऽप्येतन्न जानन्ति प्रज्ञावन्तो भारतवर्षीयाः । एवं गते प्रचारित-पूर्वाणाम् अपि पत्रिकाणां प्रकाशने कष्टायमानाः संपादकाः कथं नाम नव्याः पत्रिकाः प्रकाशयितुं प्रभवेयुः ?" इति । (सं. चं. १३।३)

एतेन सर्वाङ्गीण-सौष्ठव-समुज्ज्वलायाः नवीन-संवाद-पत्रिकायाः प्रकाशनस्य कामना व्यज्यते । पूर्वमेव पाठकानाम् आग्रहनियन्त्रितैः अप्पा-शास्त्रिभिः समभिलषित-ग्राहक-संपत्तौ 'सूनृतवादिनीं' नाम साप्ताहिक-संवाद पत्रिकां प्रकाशयिष्यामः इति निवेदितम् आसीत् । एतम् एव पुनः व्यवसायम् अनुलक्ष्य स्वदेशीय-संवाद-पत्रिकाणां मनोज्ञत्वविचारः प्रस्तुतः अयम् एतैः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

५. सूनृतवादिन्याः आदर्शः (Sample)

शकस्य १८२७ वर्षे विजय-दशम्यां सूनृतवादिनी-प्रकाशनम् आरम्भणीयम् इति आसीत् अप्पाशास्त्रिणां प्रथमः संकल्पः। किं तु ग्राहकसंपत्तेः अभावात् सोऽयं मुहूर्तः १८२८ वर्षस्य वर्षप्रतिपत् बभूव। तेनैव च पुनः कारणेन न पारितं सूनृतवादिन्याः प्रकाशनम् एतैः। अथ संपन्नायां यावदपेक्षित-ग्राहकसंख्यायां सूनृतवादिन्याः आदर्शाङ्कः १८२८ वर्षीय भाद्रसुदि तृतीयायां प्रादुरासीत्। मुद्रणम् अस्य वाईक्षेत्रे मोदवृत्त-मुद्रणालये चन्द्रिकया सहैव बभूव। प्रकाशनम् अपि वाईतः एव संस्कृत-चन्द्रिका-शाखा-कार्यालयात्। चन्द्रिकायाः त्रयोदश-खण्डस्य षष्ठेऽङ्के (भाद्रपदीये) निवेदितम् अप्पाशास्त्रिभिः —

"निवेदितम् एवैतत् चन्द्रिकायाः प्रणयिनां च अन्येषां च भूयसां भारतवर्षीयाणां यत् प्राकाश्यतातीतया चन्द्रिका-संख्यया समं सूनृतवादिन्या आदर्श-संख्यास्माभिः। प्रेषिता च इयं सर्वेषाम् अपि चन्द्रिका-प्रणयिनाम् इव भूयसाम् एव अपरेषां भारतवर्षीयाणां सविधे। विज्ञापितं च ये किल नैनां प्रत्याचक्षीरंस्तान् अप्रतिषिद्धं परमतम् अनुमतं भवतीति न्यायम् अवलम्ब्य सूनृतवादिन्या ग्राहकान् आकलयिष्यामः। प्रेषयिष्यामः च प्रतिसप्ताहं सूनृतवादिनीम् इति। अतो यैः प्रत्याख्यातुम् इष्यते सूनृतवादिनी प्रत्याख्यायतां तैः सेयम् अधुनापीति प्रार्थयामहे साञ्जलिबन्धम्। सूनृतवादिनी च अचिराद् एवावतरिष्यतीति संसूच्यते।" इति।

ग्राहकचतुःशतीलाभोत्तरम् एव सूनृतवादिनी यथावत् प्रचरेत् इति सूनृतवादिन्याः आदर्शसंख्यायां प्रकटीकृतम् अप्पाशास्त्रिभिः आदर्श-संख्या-प्रकाशनस्य च प्रयोजनं पुरतः प्रसंगवशात् तैः स्पष्टीकृतम्। यथा —

"ये किल यत् किमपि पुस्तकं वा पत्रं वा प्रकाशयितुम् ईहन्ते विज्ञापनमात्रमेव ते प्रकाशयन्ति तेषु तेषु संवादपत्रेषु। प्रकटनपत्राणि वा प्रचारयन्ति। (तन्मात्रं) समवेक्ष्य ग्राहक-श्रेण्यामात्मानं निवेशयन्तोऽपि 'अनुचितं मूल्यम्' 'नास्य सौष्ठवम्' इत्याद्यभिदधानाः प्रत्याचक्षत एनम्। एतदेव च विचिन्त्य व्ययीकृत्य भूयिष्ठं द्रव्यं प्रथमतोऽस्या आदर्श-संख्या प्राकाशि येन सम्यक् अवगच्छेयुः स्वरूपं ग्राहकधौरेया न पुनः विप्रलपेयुर्नेयं तथाविधेत्यादि।" इति। (सूनृतवादिनी १।३)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इदानीं सूनृतवादिन्याः परिचयः प्रदेयः। आकारः खल्वस्याः तदानीन्तनस्य पुण्यपत्तनप्रकाशितस्य 'केसरी' इति पत्रस्य सहोदरः आसीत् सर्वाङ्गीणः पुनः अस्य सूनृतवादिन्याः आदर्शस्य परिचयः तदानीं केरलेषु प्रकाशिते **विज्ञानचिन्तामणिपत्रस्य** ( १७।९।१९०६ दिवसीये ) अङ्के प्रदत्तः तत्संपादकैः पं. **नीलकण्ठशास्त्रिभिः**। सोऽयम्—

**६. सर्वाङ्गरमणीया सूनृतवादिनी प्रियतमा।**

**सूनृतवादिनी**—ज्ञातमेव खल्विदं **चिन्तामणिसुहृद्भिः** यदिदन्नामिका काचन साप्ताहिकी संस्कृत-पत्रिका संस्कृत-चन्द्रिका-सहकारिसंपादक-विद्यावाचस्पति-श्रीमदप्पाशास्त्रिमहाभागैः संपाद्यमाना बहिरवतरेदिति। अस्यास्तावदेक आदर्शः अस्मत्-पत्र-मन्दिरम् उपागतः संतोषयतितरां मानसम् आस्माकीनम्! इयं च संख्या सूनृतवादिन्याश्चन्द्रिका-क्रोड-रूपा। ग्राहकचतुःशतीसंपत्तावेवेयं प्रकाश्येत। इदानीं सुहृदां पुरतः समीक्षणार्थम् एवैक आदर्शः प्रापितः। कियती संख्या ग्राहकाणाम् इदानीं संपन्नेत्यवबोद्धुम् अपारयन्तो वयं प्रस्तुत-पत्रिकाया इतःपरं क्रमशः प्रकटने कियानिव जायेत वा विलम्ब इति आशङ्कामहे। अथापि समादध्महे समासन्नायाम् एव संपत्तौ यावदपेक्षितं ग्राहकाणाम् आदर्शः समुचितः समवतारयितुम् इति। एतदादर्शोपलब्धिसमनन्तरमेव बहवोऽस्याः ग्राहककोटीम् आटीकेरन् इति च गरीयान् अस्माकं विश्वासः। आगतायाः पुनरस्या रामणीयकमत्र किंचिदिवोपपादयामः सुहृदां पुरतः। एकतालात्मिकाया अस्याः प्रथमभागे प्रसिद्धि-पत्राणि सूनृतवादिनी-नियमावली चतुर्थे च पत्रे प्रसिद्धिपत्र-चन्द्रिका-नियमावली-प्रभृतयश्चेति प्रतिसप्ताहम् अनुवाच्यावबोधनीया विषया भागयोः एनयोः न अवलोक्यन्ते। द्वितीय-तृतीय-भागौ नानाविध-नव्यनव्य-वाङ्मुखपरिमण्डितौ कामपि महीयांसमाधत्तः सान्द्रमानन्दमनुवाचयितुः। भागद्वयेऽत्र विद्यन्ते दश स्तम्भाः। अत्र च प्रधान-लेख-संपादकीय-टिप्पनी-संवादसंग्रह-प्रभृतयो दृश्यन्ते विषयाः। विषयप्रकटन-परिपाटी तावदेवम् एव इतोऽपि भविष्यतीति ज्ञायते। अस्यां च धार्मिका राजकीयाश्च सामयिका अन्ये च केचन विषयाः सरल-सरस-मधुर-संस्कृत-भाषा-निबद्धाः प्रकटीकृताः। अस्या नियमावल्यां 'विज्ञापनान्यपि वैदेशिक-वस्तु-विषयकाणि सनातनधर्म-विद्रोहीणि वा न स्वीक्रियेरन्" इति स्पष्टं प्रत्यपादि। कुतः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुनरस्याम् अवकाशं विन्देरन् धर्माचार-विरुद्धाः प्रबन्धाः। श्रीशिवापकर्ष-द्योतका अद्वैतविद्वेषिणश्च प्रबन्धाः सूनृतवादिन्याम् अस्यां विशेषतः च कथम् अवकाशम् अल्पम् अप्यासादयेयुः। सुहृदः ! नेतः किंचिदप्यवलम्ब-ध्वम् औदासीन्यम्। संगृह्णीध्वं सर्वाङ्ग-रमणीयाम् एनाम्। वार्षिकमूल्यं रूप्यक-त्रितयं स्तोकतरमेवास्या निर्दिष्टम्। प्रापणव्ययोऽपि न गृह्येत श्रीमतां सविधात्। महान् हि लाभः संग्रहणे संपद्येतास्याः। इदं चाव-धारयत। यत् सर्वाङ्गरमणीया सूनृतवादिनी प्रियतमा यथा भवतां संतो-षाय कल्पेत न केवलमियं तथा '**सूनृतवादिनी**' किं तु ततोऽप्यधिकमेव। मनोविनोदन-विषये पटीयस्यपि वधूटी न हि लेशतोऽप्यादध्यात् साहाय्यं धर्मरक्षणविषये तस्यास्तावदालापा धर्मद्वेषिण एव। इयं तु सकलविध-परिताप-विनाशन-पूर्वकम् आनन्दयेद् अन्तरङ्गं न पुनः स्पृशति मात्रयाऽपि धर्मविद्वेषिणं पन्थानम्। अतो ये नव-नव-संस्कृत-प्रबन्धानुवाचनाभिलाषुका ये च धर्मशास्त्र-तत्त्व-निर्दिष्टया सरण्या प्रचरितुम् उद्युक्ता ये च राज-कीय-विषयान् उद्दिश्य निर्भयं निःसंकोचं च अवतारिताननुविवाचयिषवः प्रबन्धान् किं बहुना ये भाषान्तरमयीषु इव संवाद-पत्रिकासु बहुविधान् लेखान् सामयिकान् स्वल्पव्ययेन संस्कृत-पत्रिकाम् अवलोकयितुम् उद्यु-क्तास्ते सर्वेऽपि परिलालयेयुः अवश्यम् एनां **सूनृतवादिनीम्** इति निर्मायम् एव वदामः। " इति।

समवलोक्य पुनः उपरि प्रदत्तं **विज्ञानचिन्तामणि-संपादक-महा-**भागानां लेखं सम्यक् एव जानीयुः पाठकाः स्वरूपं गौरवं च सूनृत-वादिन्याः। **चिन्तामणिरपि** साप्ताहिकपत्रम् एव आसीत्। अतश्च तत्-संपादकैः लिखितोऽयं **सूनृतवादिनी**-परिचयलेखः परं महत्त्वम् आवहति।

**७. सुदुर्लभ एव अप्पाशास्त्रिसदृशः पण्डितरसिकः।**

इत्थं परिचाय्य सुनृतवादिनीं संवर्धितः ग्राहकाणाम् उत्साहः **श्रीनीलकण्ठशास्त्रिभिः**। समवेक्ष्य तस्याः केवलम् आदर्शम् एव स्वयम् अपि एते तथा समावर्जित-हृदयाः संवृत्ताः, यथा सूनृतवादिन्याः परिचय-लेखोत्तरम् अनुपदम् एव विलिखितम् एतैः —

"प्रिय-पाठक-महाभागाः! न बहुविध-ग्रन्थ-प्रणेतारः कालिदासादि-कविवरा, न वा भयंकराः कर्कश-तर-विवाद-परायणाः संस्कृत-पण्डिताः,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नापि गद्यविलेखनचणो भट्टबाणः संस्कृतभाषा-प्रणयिनाम् अस्माकम् उपकुर्वन्ति, यथा अयम् एकः श्रीमान् उपकरोति विद्यावाचस्पतिः अप्पाशास्त्री नव-नव-संस्कृत-प्रबन्ध-लेखन-विनियुज्यमान-स्वीय-समयः स्वतन्त्रः संस्कृत-गद्य-विलेखने वैयाकरणमणिः आलंकारिकालंकारभूतो नैयायिकमूर्धन्यो धर्मशास्त्रराद्धान्तान्तरार्थवेदी रसिकमणिः संस्कृत - चन्द्रिका - सहकारि-संपादकः। सुलभाः किल संस्कृत-पण्डिता इदानीं ये केवलं तद्-वादमात्र-निष्णाता वर्तन्ते, दूरे संस्कृत-भाषा-गद्य-विलेखन-सरण्याः। किं तु सुदुर्लभ एव अप्पाशास्त्रिसदृशः पाण्डित्यविषये सरस-मधुर-वाङ्मुखावलेखन-विषये च समं प्रवर्तमानः पण्डित-रसिकः। अतस्तेनैव प्रचार्यमाणायाः **सूनृतवादिन्या** रामणीयक-विषये न कस्यापि जायेत संशयावकाशः। अतो ये तावद् एनां न आदरपुरःसरम् अवलोकन्ते न तेषु अस्माकं रोषः, किं तु दयैव। अन्ततश्च वयं **सूनृतवादिन्या** अव्याहतं प्रचारम् उत्तरोत्तराभ्युदयं चाशंसमाना विरमामः।" इति।

एतेन पं. **नीलकण्ठशास्त्रि** - प्रणीतेन प्रशंसा - संदर्भेण श्रीमदप्पाशास्त्रिणां योग्यता विशेषतः स्पष्टा भवति। चन्द्रिकाद्वारा समस्तम् एव संस्कृतविश्वं वशीकृतम् आसीत् एतैः इति निर्विवादम् इदम्।

**८. विद्यावाचस्पतिमहाशयस्य वचोवैखरी स्वयमेव क्षमते।**

इत्थं सूनृतवादिन्याः आदर्शं समुद्भाव्य श्रीमदप्पाशास्त्रिभिः संस्कृत-पत्र-कलायाः आदर्शः प्रतिष्ठापितः। यथा खलु चन्द्रिकायाः पञ्चमं खण्डं पठित्वाः पाठकाः मुग्धाः समभवन्, तथैव सूनृतवादिन्याः इमम् आदर्शं वीक्ष्य अपि रसिकप्रवराः निःसीमप्रमोदाः बभूवुः। ग्राहकाणां सूनृतवादिनीविषयिणीम् उत्कण्ठायाः पराकाष्ठां **विज्ञान-चिन्तामणिगतं** लेखालेखि विस्पष्टयति। २४-९-१९०६ दिवसीये चिन्तामणौ **का. प्र. अण्णङ्गार्य-महाशान्त-महोदयः** प्रकटयति स्म स्वीयां मनोव्यथाम् —

'तत्रभवद्भिः प्रियमहाभागैः विद्वत्-कुल-चूडामणिभिः सर्वतन्त्रकूलंकष-वैदुषीमहिमभिः संस्कृत-चन्द्रिकायाः सहकारि-संपादकैः अप्पाशर्म-विद्यावाचस्पति-महाशयैः प्रचिकटयिषिता काऽपि '**सूनृतवादिनी**'-समाख्या पत्रिका। अत्रेदं किमपि विषादस्थानम्। इदम्मासिक्याः संस्कृत-चन्द्रिकाया अन्तिमे पृष्ठे यदि पुनः संपद्येत चतुःशती-ग्राहकाणां तदैव '**सूनृतवादिनी**'

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बहिरवतार्येतेति दृश्यते । द्विशत्येवात्र ग्राहकाणाम् अतिमात्रदुर्लभेति नैवात्र मात्रयापि वित्रदितव्यम् । एतादृशे च संदर्भ-व्यतिकरे कथं लभ्येत चतुःशती ग्राहक-महाभागानाम् । यद्यसौ निर्दिष्टा ग्राहक-संख्या न संपद्येत तदा नैवावतार्या सूनृतवादिनीत्येव खल्वभिप्रायः संपादकमहोदाराणाम् । इदमेव शोकास्पदम् अस्माकम् " इति । तत्रैवाङ्के अनुपदम् एव चिन्तामणि-संपादकैः पं. नीलकण्ठशास्त्रिभिः प्रत्युक्तम् एतत् —

"अत्र यदुक्तं द्विशत्येव ग्राहकाणाम् अतिमात्रदुर्लभेति नैवात्र मात्रयाऽपि विवदितव्यमिति तत्र वयं प्रत्यवतिष्ठामहे । संस्कृत-चन्द्रिका-सहकारिसंपादकस्य अस्मत् सुहृदोऽप्पाशास्त्रि-विद्यावाचस्पति-महाशयस्य वचोवैखरी स्वयमेव क्षमते समावर्जयितुं सहृदयान् सकलान् । अपि च गैर्वाणी-प्रणयिनस्तत्सौहार्दवशंवदा नियतम् अहमिकया प्रेषयेरन् सरसान् उपन्यासान् । किं च । आदर्शभूतेयं प्रथम-संचिकैव शक्नोतितराम् इमं द्रढयितुम् अभिप्रायम् । अन्यत् च । सांप्रतम् अङ्कुरितः खलु सनातन-धर्म-प्रणयिनां कश्चन् व्यवसायविशेषः । अपरं च । वङ्गेषु प्ररूढः स्वदेशाभिमानः शाखोपशाखा-परंपराभिः भारते सर्वत्रापि प्रसरति । इतरद् अपि । राजकीया अपि इदानीं गैर्वाण्याम् अपि प्रकाशयन्ति प्रणयम् । अतो लिप्सिता संपादकैः चतुःशती ग्राहकाणां ततोऽप्यधिकाऽपि संख्या सपदि संपद्येतेति तत्र च अवश्यं परमकारुणिको भगवान् भवानीवल्लभो वितरेद् एव करुणाम् इति च आस्माकीनः सुदृढो विस्रम्भः । " इति ।

अहो सौभाग्यं श्रीअप्पाशास्त्रिणां लेखन्याः ! अहो हृदय-स्पर्शित्वं सूनृतवादिन्या आदर्शस्य !! अहो औचित्यं शोकास्पदत्वस्य !!! अहो साहजिकत्वं प्रत्यवस्थानस्य !!!! अहो यथार्थता कारणानां समुच्चयस्य !!!!! सर्वथा वाचाम् अगोचरः समेधितः अयं श्रीअप्पाशास्त्रिणां यशःप्रतिष्ठायाः गरिष्ठः महिमा इति निःसंदेहम् इदम् ।

### ९. निदानं विलम्बस्य ।

एवम् आदर्शमात्रेण एव समुल्लसितस्वान्ताः रसिकवर्याः सूनृतवादिन्याः अवातारं प्रतीक्षन्ते स्म । चन्द्रिकायाः सूनृतवादिन्याः च संमुद्रण-व्यवस्था वाईक्षेत्रे एव कृता आसीत् । प्रतिसप्ताहं पुनः इदानीं पत्रिकाङ्क-प्रकाशनं विधेयम् इति वाईक्षेत्र-निवासः एव समुपकारकः इति विचिन्त्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीमन्माधवरायामात्यानां कोल्हापुरीयात् प्रासादात् अप्पाशास्त्रिणः वाईक्षेत्रम् आगताः। सपरिवारस्य आत्मनः तत्र निवाससौकर्यम् एतैः संपादितम्। वाईनगरे मध्यवीथी (मधली आळी) इति संज्ञके निभागे दीक्षितसौधः (दीक्षितवाडा) इत्यस्मिन् गृहे अप्पाशास्त्रिभिः स्वीयं कुटुम्बकं निवेशितम्। प्रायः दीपावलि-समासन्ने समये स्थानपरिवर्तनम् इदं संजातम्। चन्द्रिकायाः सूनृतवादिन्याः च कार्यालयस्थानं वाईक्षेत्रम् एव बभूव। सूनृतवादिन्याः आदर्शसंख्या-प्रकाशनोत्तरम् मोदवृत्त-मुद्रणालयाधिपतिना सह मुद्रण-व्यय-द्रव्य-संबन्धे प्रतिज्ञाः कृत्वा प्रथमाङ्कस्य प्रबन्धादिकं संमुद्रणाय प्रदत्तम् एभिः। ततश्च—

"अतिक्रान्तः किल बहुतिथः समयः सूनृतवादिन्या आदर्शस्य। तत आरभ्य 'कदा नु सूनृतवादिनी प्रकाश्येत इत्यनेकशोऽनुयुञ्जानैः परां काष्ठाम् आरोपिताः स्म उत्साहस्य। संपन्नः च प्रायेण यथावसरम् एवापेक्षिता ग्राहकाः सूनृतवादिन्याः। पत्र-प्रापणायाम् आवेदयाम। अनुमते च अस्य शुल्कह्रासे प्रधान-पत्र-प्रापणिकाधिकरणिकेन अत्रत्य एव दण्डाधिकरणिक आवेदनीयम्। यावद् ग्रथितुम् अक्षराणि प्रबन्धान् प्रायच्छाम तावदेव समाक्रान्ताः स्मो गरीयसा ज्वरेण। अनामयत्वम् अनुप्राप्ता यावद् राज्ञ्यावेदयितुम् इच्छामः तावन्नास्त्यत्र इदानीं मदीयोऽधिकार इति प्रत्याख्याताः स्मः प्राड्विवाकेन अत्रत्येन। अन्ततः पुनस्त्रिचतुरदिवसेभ्यः प्राक् अत्रोपस्थिते मण्डलाधिकरणिक आवेद्य प्रवृत्ताः स्मः प्रकाशन-कर्मणि सूनृतवादिन्या व्यापारयितुं चेतः" इति।

एतेन सूनृतवादिन्याः प्रथमेऽङ्के प्रकाशितेन निवेदनेन स्पष्टीभवति कारणं विलम्बित-प्रथमाङ्क-प्रकाशनस्य।

**१०. उपक्रान्तं सूनृतवादिन्याः प्रकाशनम्।**

ततश्च १८२८ शकवर्षीयमार्गसुदि चतुर्दश्यां (२९-११-१९०६) गुरुवासरे सूनृतवादिन्याः प्रथमाङ्कः प्रकाशितः। तद्-विषये चन्द्रिकायाः त्रयोदश-खण्डस्य सप्तमेऽङ्के प्रोक्तम् अप्पाशास्त्रिभिः—

"विदितमेवैतत् चन्द्रिकायाः प्रणयिनां यदासीत् अस्माकं मनोरथः प्रकाशयेम साप्ताहिकीं संस्कृत-पत्रिकां सूनृतवादिनीं नामेति। पठित एव हि अस्माभिः प्रहितोऽस्या आदर्शोऽमीभिः। सा पुनः पत्रिका मार्गशीर्ष-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शुक्ल-चतुर्दशीतः प्रभृति प्रकाशयितुम् आरब्धाऽस्माभिः। प्रतिगुरुवासरं चैषा प्रकाश्यते। यद्यपि अस्या आदर्श-संख्यया समं प्रेरितेषु पत्रेषु निवेदितम् एव अस्माभिः यत् संख्याम् इमाम् अवलोक्य ये न प्रत्याचक्षीरंस्ते किल ग्राहका एव सूनृतवादिन्या इत्यप्रतिषिद्धं परमतम् अनुमतं भवति इति न्यायेनावगच्छन्तः प्रतिसप्ताहम् एषां सकाशे सूनृतवादिनीं प्रेषयिष्याम इति। तथापि नेदानीं तथा विधातुम् इच्छामः। भूयांसो हि प्रथमतस्तूष्णीं स्थिताः परस्तात् प्रत्याचक्षत इति। अतो यैः किल चन्द्रिकायाः प्रणयिभिः अभिलष्यते सूनृतवादिनी निवेदयन्त्वेते स्वयमेव प्रेयं पत्रिकाम् इति विज्ञाप्यते।" इति।

मुहुर्मुहुर्ग्राहक-सकाशात् वञ्चनाम् अनुभवद्भिः संत्रस्तैः श्रीअप्पाशास्त्रिभिः सूनृतवादिन्याः प्रेषणे इदानीं दक्षता अङ्गीकृता।

सूनृतवादिनी

साप्ताहिकी संस्कृतसंवादपत्रिका।

११. सूनृतवादिन्याः स्वरूपम्।

चन्द्रिकायाः तावत् आकारः 'डेमी अष्टपत्री चतुर्विंशति-पृष्ठात्मकः' आसीत्। तादृश-षोडश-पृष्ठ-परिपूरणात्मकः तु सोऽयं सूनृतवादिन्याः। सेयं विस्तारेण प्रतिपत्रं चन्द्रिका-पत्रस्य चतुर्गुण-विशाला, तादृशपत्रद्वयात्मिका, एवं पृष्ठचतुष्टयात्मिका चासीत्। सर्वाङ्ग-रमणीयायाः सूनृतवादिन्याः तावत् सामान्यः परिचयः विज्ञानचिन्तामणौ प्रकाशितपूर्वः पठितः एव वाचकमहाभागैः। अस्याः प्रथमान्तिम-पृष्ठयोः चन्द्रिकायाः सूनृतवादिन्याः च नियमावलिः, ग्रन्थादीनां विज्ञापनानि, महात्मनां पत्रिकाम् अधिकृत्य अभिप्रायाः च संमुद्रिताः। द्वितीय-पृष्ठे प्रधानलेखः संपादकीयटिप्पन्यः च तृतीय-पृष्ठे नैकविधा वार्ता च आसन्। भाषासरणिः तु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्रत्या सरल-सरसा सौष्ठव-संपन्ना सुमनोहरा च आसीत् इति कथनं पुनरुक्तम् एव। सूनृतवादिनी-गतै. नैकविधैः प्रबन्धैः अचिरात् एव सुप्रतिष्ठितम् अभूत् श्रीमदप्पाशास्त्रिणां सकल-शास्त्र-मर्म-विज्ञानेन समुपेतं सामयिक-विविध-प्रबन्ध-विलेखन-चातुर्यं, वृत्तान्त-संग्रह-नैपुण्यं च। धार्मिक-महत्तर-नेतृत्वेन सह लोकवृत्तान्त-परिशीलन-विचक्षणत्वम् अपि श्रीअप्पाशास्त्रिणां विश्रुतं समभवत्। एतेन महाधार्मिकः, संस्कृत-संजीवकः अनेकविध-प्रबन्ध-प्रणेता, कविप्रवरः, भारतीय-संस्कृति-परिष्कर्ता टीकाकारः, कुशलः पत्रपण्डितः इति अप्पाशास्त्रिणः सुप्रथिताः अभूवन्।

आरम्भः खलु एतेषां लेखनी-प्रवासस्य **'श्रीशिवः शरणम्'** इति विलिख्यैव भवति स्म इति ज्ञातमेव एतत् पाठकनाम्। ततश्च सूनृतवादिन्याः उपक्रमे श्रीशिव-वन्दनं कथं नाम विस्मर्यताम्? आदर्शसंख्यायाः मङ्गलं तावत् इदम् —

**अशेषजगदाधारमीशमेकमुपास्महे।**
**यत्कृपापाङ्गमनिशं गिरां देव्यनुधावति।** इति

अत्रत्या अन्तिमा पङ्क्तिः अप्पाशास्त्रिणां श्रद्धां विशेषतः स्पष्टयति। सारस्वतं धाम श्रीशिवप्रसादेन एव संप्राप्तम् इति हि तस्याः अभिप्रायः। एवं **सूनृतवादिनी**-प्रथमाङ्कस्य मङ्गलं यथा —

**यद्भासा भासते विश्वं येनैव परिपाल्यते।**
**अन्तमप्येति तद् यस्मिंस्तमेकं शिवमीड्महे॥** इति।

एतेन श्रीशिवाद्वैत-निष्ठत्वम् अप्पाशास्त्रिणां प्रकटीभवति।

सूनृतवादिन्याः प्रत्यङ्कं मुखपृष्ठीयं मङ्गलपद्यम् इदम् आसीत् —

**शिवपद-सरसी-रुहैक-भृङ्गी प्रियतम-भारत-धर्म-जीवितेयम्।**
**मदयतु सुधियां मनांसि कामं चिरमिह सूनृतवादिनी सुवृत्तैः॥**

इति। अत्र पूर्वार्धेन पत्रिकायाः ध्येयम् पश्चार्धेन च तत्साधनं द्योत्यते। वृत्तान्तप्रधाना अपि **सूनृतवादिनी** यथा सनातनं धर्मं एव प्रचरेत् तथैव प्रयतेत इति भावः। एवं च धर्मप्रभावद्योतकम् एव घोषवाक्यम् आसीत् सूनृतवादिन्याः **'धर्मे सर्वं प्रतिष्ठितम्'** इति। तदेतत् द्वितीये पृष्ठे प्रधान-लेखस्य आरम्भे विराजते स्म।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## १२. अलौकिकः खल्वस्यां रसः ।

आदर्श-संख्यायां प्रकाशिते 'उपक्रमणिका' इत्याख्ये प्रधान-लेखे सूनृतवादिन्याः प्रकाशने प्रयोजनं स्पष्टीकृतं श्रीअप्पाशास्त्रिभिः । अभ्यसनीयः किलायं प्रबन्धः । विज्ञापयति च अयं सर्वतः संस्कृत-वृत्तपत्र-प्रकाशनस्य उद्देश्यानि । अत एव वाचस्पतीन्द्रम् एव शब्दैः अंशतः उद्ध्रियते स एषः । यथा —

"इह खल्वाकीटपिपीलकं जगति जायमानाः सर्वेऽपि प्राणिनः सुखं सुखं सुखम् इत्येव प्रवर्तमानाः संदृश्यन्ते । सुखं पुनरेतद् ऐह-लौकिकं पारलौकिकं चेति द्वेधा किलोदीर्यते विद्वद्भिः । तत्र किल विरला एव पारलौकिकं सुखम् उद्दिश्य प्रवर्तमाना दृश्यन्ते । भूयांसः पुनरिहलोकमात्र-भाविनि सुखे सुखाभासे वा प्रदत्तदृष्टयः स्वस्वाभिलषित-साधनाय समनुतिष्ठन्ति कर्माणि । ऐहलौकिकम् अपि सुखं न किल क्षणदृष्टनष्टम् एवापेक्ष्यते केनापि किं तु तच्चिरावस्थाप्येव काम्यते सर्वैः । उपायः पुनरत्र न अवबुध्यते प्रायेण भूयोभिः । प्रवृत्ते चैतद्-विषयिणि विचारे यः समुदेति सिद्धान्तः सोऽयं केवलम् आत्मज्ञानमेव परमसुखसाधनमित्ययमेव । न ह्यात्मज्ञानं नाम केवलं चराचर-व्यापिनः परमात्मन एव ज्ञानं विवक्ष्यते, परन्तु तस्येव स्वस्यापि । यदि हि वयं परमार्थत एव आत्मानं ज्ञास्यामः के वयं कुतो वयं केषां वयं किम् अस्मदीयं किं च नामास्माकीनं कस्य कृते प्रयतितव्यम् अस्माभिः किं च सुदूरतः परिहरणीयम् इति तदा न कथम् अपि दुःखम् आप्स्यामः । भूयांस एवास्मासु वार्ताम् अप्यर्थस्यास्य न अवगच्छन्ति । संप्रति किल वयमात्मीयमेव देहमात्मानम् आकलयामः । पुत्रपौत्रादिकान् एव च आत्मीयां जानीमः । नितान्तम् एव संकुचितेयं दृष्टिः । विकासिता पुनर्दृष्टिर्नैवंविधां मतिम् उद्भावयति । सा हि नात्मन एव शरीरमात्मानम् अवबोधयति किं तु सर्वान् अपि स्वदेशजान् पुरुषान् एवात्मानं ज्ञापयति । एवं च प्रवर्तमानस्य यत् सह देशबान्धवैः सुखं समुदेति तदेव सुखम् ऐहलौकिकं पारमार्थिकं च चिरावस्थायि चेति नात्र संदेहः । यथा परमात्मज्ञाने श्रवण-मनन-निदिध्यासनादीनि साधनान्येवं दृग्विकासहेतावस्मिन् अध्यात्मज्ञाने वक्तृतादिद्वाराऽऽत्मभूतस्य सर्वदेशस्यावस्थितेः श्रवणं श्रुतायाश्च तस्याः संवादपत्रादि-द्वाराऽनुकूल-तर्कानुसंधानपुरस्सरं मननं तदनु निदि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ध्यासनं च इत्येवंविधानि साधनानि दृश्यन्ते । तेनास्मिन्नात्मज्ञान एकान्तत एवोपयोगीनि संवाद-पत्राणि इत्यसंदिग्धः खल्वयम् अर्थः । सन्ति खल्विदानीं भूयांस्येव संवाद-पत्राणि भारते वर्षे नानाविध-भाषा-संग्रथितानि किं तु न किल सर्वेऽपि सर्वास्वेव भाषासु स्निह्यन्ति । याश्च नाम जगति विद्यन्ते भाषास्तासु सर्वास्वपि प्रकृतिभूता च जरत्तराप्यहीन-सौभाग्या च सर्वाङ्ग-रमणीया च संस्कृतभाषैवेति स्वीकृतम् एतत् सर्वैः समस्वरम् एव । अलौकिकः खल्वस्यां रसः । अत एव च समास्वादित-संस्कृत-सुधारसा महात्मानो न किल जन्म-भाषा-मरन्द-लोलुपाः प्रभवन्ति । अत एव च नामीषां श्रवण-पथम् उपयाति स्वरूपमात्मीयम् । न चाप्यमी प्रभवन्ति विज्ञातुं निर्दिष्ट-पूर्वम् अस्माभिः आत्मानम् । अयं किल द्रढीयान् नः सिद्धान्तो यद् यदेवंविध एकोऽपि महाभागः कुर्यान्न किल तच्छतमपि नव्या विधातुं प्रभवेयुरिति । अतश्च अवश्यम् अवबोधनीया अमी स्वरूपमात्मीयम् । एतच्च यथा संस्कृत-भाषयैनानवबोध्येत नैवं भाषान्तरेण कथम् अप्यवबोधयितुं शक्यम् । अत एव संस्कृतपत्रिकाम् इमां **सूनृतवादिनीं** नाम प्रचारयितुं प्रवृत्ताः स्मः । एषा किल सरलया सुबोधया सरस-सरसया च संस्कृतभाषया अवबोधयिष्यति सांप्रतिकं स्वरूपं भारतवर्षस्य प्रदर्शयिष्यति च हिन्दूनाम् इव हिन्दुधर्मस्य अपि इदानीन्तनीम् अवस्थाम् । विशदी-करिष्यति वाणिज्यावस्थितिं भारतीयानाम् । विचारयिष्यति च शास्तॄ-णाम् अनुशासनस्य युक्तायुक्तत्वम् । समुपदेक्ष्यति च यावद्-बुद्धि-बलोद-यम् अनुष्ठेयम् । श्रावयिष्यति च तेषां तेषां वाग्मिप्रकाण्डानाम् उपन्या-सान् । ज्ञापयिष्यति धर्मम् । अनुभावयिष्यत्यानन्दम् । निराकरिष्यत्यात्म-ज्ञानविषयकं प्रस्वापम् । तर्जयिष्यति च प्रस्फुटाक्षरं विद्रोहिणो भारत-वर्षस्य इति ।

यानि यानि च नव-नवानि विज्ञानानि नव-नवाश्च आविष्काराः सर्वान् अप्येतान् यथाक्रमं प्रकाशयेत् सूनृतवादिनी यावच्छक्यम् । छात्रा-णाम् अपि बह्वेषोपकरिष्यति **सूनृतवादिनी**। एषा हि नवनवाननेकानेव शब्दान् उद्भाव्य प्रकाशयेत्तांस्तान् विषयान् । ये किल मन्वते मृतैव भगवती संस्कृत-भाषेति, अवश्यम् अवेक्ष्यताम् अमीभिः **सूनृतवादिनी** येन जीवत्ये-वाद्यापि सर्वाङ्गीण-सौष्ठव-शालिनी संस्कृतभाषेति शक्येत अमीभिः अवबोद्धुम् । " इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवम् एतादृशाः समभूवन् सुनृतवादिन्याः भव्याः उद्देशाः । एषु संस्कृत-भाषायाः सर्वविध-सर्वाङ्गीण-प्रचाराय यद् यद् आवश्यकं तत् तत् सर्वमपि संगृहीतम् । यथाप्रतिज्ञमेव पुनः एतत् सर्वम् अपि सूनृतवादिन्यां प्रकाशितं बभूव । संस्कृतचन्द्रिकायाः प्रतिज्ञाः पूरितवद्भिः श्रीअप्पाशास्त्रिभिः सूनृतवादिन्याः प्रतिज्ञाः न केवलं पूरिताः, अपि तु सूनृतवादिनी संस्कृत-वृत्तपत्रसृष्टेः असाधारणं भूषणम् इति प्रतिष्ठापिता ।

**१३. पिबन्त्येवोदकं गावो मण्डूकेषु रटत्स्वपि ।**

श्रीमदप्पाशास्त्रिणां चन्द्रिका समस्त-संस्कृत-विश्वेन प्रशंसिता इति विज्ञातम् एव इदं पाठकैः । चन्द्रिका-सौष्ठवम् एव अप्पाशास्त्रिभ्यः विद्यावाचस्पतित्वं प्रायच्छत् । नैकविधाः नैके प्रबन्धाः अलौकिकं प्रतिभोन्मेषम् एतेषां प्रदर्शयामासुः । अत एव च विश्राम-सुखम् इव अङ्गीचकार विद्यावाचस्पतिषु चिरन्तना कीर्तिः । इदानीं पुनः प्रादुर्भवितुम् उपक्रान्तां सूनृतवादिनीम् इमां केचित् मुग्धप्रायाः समदूषयन् ; भाषान्तरैः वृत्तान्तादीनाम् अवबोध-सौकर्ये सति किमर्थं संस्कृत-पत्रिका इति ते एते आक्षिपन् । तत्र प्रत्युक्तम् अप्पाशास्त्रिभिः —

"समवेक्ष्य किल सूनृतवादिन्याः संस्कृतभाषामयत्वम् अनुयुञ्जते अस्मान् केचित् पण्डितंमन्या यदहो किमित्ययं तुषपेषणायासो यत् संस्कृतभाषया संवादपत्रं प्रकाश्यत इति । न किल अमीषाम् आरटिते मनः क्रियतेऽस्माभिः । निसर्ग एव ह्ययं केषांचिद् यदमी युक्तम् अयुक्तमपि नः केनापि किमपि उपक्रान्तं तृणाय मन्यन्ते प्रकाशयन्ति च पौरोभाग्यम् आत्मीयं विनिन्दन्ति च नव्यं व्यवसायम् इति । तद् अविगणय्यैव एतेषाम् आक्रोशम् उपक्रमणीयानि कर्माणि । तथा हि आहुः इतिहासविदः — '**पिबन्त्येवोदकं गावो मण्डूकेषु रटत्स्वपि**' इति ।"

इत्येवम् आक्षेपकान् धूलिसात्कृत्य सूनृतवादिनीप्रचारणम् आरब्धम् अप्पाशास्त्रिभिः । वस्तुतः तु संस्कृतभाषया संवादप्रकाशनादेः उद्देश्यं सप्रयोजनं पूर्वमेव उपपादितम् । तथापि मण्डूकवृत्तीनां केषांचित् प्रवृत्तिः इयं समुपवर्णिता अप्पाशास्त्रिभिः ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१४. अप्पाशास्त्रिमहोदयस्य अविनश्वरा कीर्तिः ।**

समवेक्ष्य सूनृतवादिन्याः प्राथमिकान् कांश्चित् अङ्कान् विद्योदय-संपादकाः पं. हृषीकेशशास्त्रिणः अतीव आनन्दोत्फुल्लहृदयाः संवृत्ताः। १९०६ ई. वर्षीय-डिसेम्बर-मासीये **विद्योदयाङ्के** लिखितम् एतैः— "वयम् अतीवानन्दोत्फुल्ल-हृदयेनाद्य श्रीमद्-बन्धुवर-अप्पाशास्त्रिविद्या-वाचस्पतिसंपादितां सूनृतवादिनीं नाम साप्ताहिकीं संस्कृतपत्रिकामधिगम्य धन्यंमन्याः स्मः संवृत्ताः । एतावत्-काल-पर्यन्तं संस्कृतभाषालिखितायाः लौकिकवृत्तमात्रानुशीलनपरायाः साप्ताहिक्याः पत्रिकायाः सम्यग् अभाव एवासीत् । सूनृतवादिन्याऽनयाऽद्य तदभावो निराकृतः । इयमेव प्रथमा साप्ताहिकी संस्कृत-पत्रिका घोरेऽस्मिन् संस्कृत-विद्या-लोपिनि कलियुगे प्रादुर्भूता, स्वप्रकाशकस्य श्रीमतः अप्पाशास्त्रिमहोदयस्य अविनश्वरां कीर्तिं लोकेऽस्मिन् उद्घोषयति । पत्रिकैषा सामाजिकेभ्यो यथोचितम् उत्साहम् अधिगम्य चिरं जीवतु इत्यस्माकम् आशंसा वरीवर्ति । इयत्-कालं यावद् वाचस्पत्युपाधिक-श्रीमदप्पाशास्त्रिणः संस्कृतलेखननैपुण्यं चन्द्रिकया एवोद्-भासितं सहृदयानां हृदयोल्लासं जनयति स्म । इदानीं त्वनया सूनृतवादिन्या सूनृतवादप्रियत्वम् अपि समुत्पादयिष्यति इत्यत्र कः संदेह ?" इति ।

**१५. दयनीयैव हि विचार-मूढता पुरुषाणाम् ।**

एवं शंभुशेखर-चन्द्रकलावत् प्रशंसनीयतया समभूत् सूनृतवादिनी सर्वेषाम् । अथापि केऽपि पुरोभागिनः पीयूषम् अपि एतत् गरलतया एव संभावयन्ति स्म । तान् एतान् अभिलक्ष्य एव 'अविगणय्य एव अमीषाम् आक्रोशम् उपक्रमणीयानि कर्माणि' इति प्रोक्तम् । इमम् एव समवलम्ब्य विषयं **विज्ञानचिन्तामणिः** (२३-१२-१९०६) एवम् अभिप्रैति—

(सूनृतवादिन्या) "प्रथम-प्रतिज्ञाता रीतिर्यथा न मात्रयापि विहन्येत तथा प्रयतितम् अनन्तरम् अपि इति प्रोत्क्षिप्तहस्तं प्रतिजानीमहे । धर्मानुसृतैर्नानाविध-युक्तिजाल-जटिलैरतिरमणीय-संस्कृतभाषा-निबद्धैः बहुविध-विषय-प्रकाशकैः लेखैः विराजमानेयम् अनुवाचयितॄणामादधाति महान्तम् आनन्दमिति प्रत्यक्षानुभूतोऽयमस्माभिरंशः । स्वदेशाभिमानविषये समधिकश्रद्धावती सेयं तत्संबद्धान् लेखान् निर्विशङ्कम् एव प्रकटीकृत्य आविष्करोति स्वं धैर्यमिव लोकवृत्तविज्ञानमपीति नूनमेतदतिमात्रमानन्दा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धायकम् अस्माकम्। बहुकृत्वः परीक्ष्यापि नात्रास्माभिरलाभि तादृशं किमपि वा वाक्यं यद् विरुद्धं स्वदेशाभिमानस्य, व्याघातकं स्वधर्मस्य, विद्वेषकं विदुषां, विरसं वा सहृदयहृदयानाम्। अनुभवमात्रवेद्यमदसीयं रामणीयकं स्वयमेवादायैनामनुभवन्तु सर्वेऽपि संस्कृत-रसिका निर्मत्सराः सारग्राहिणः सहृदयाः। ये त्वेनामेवंविधामपि न परिलालयन्ति, न तेषु अस्माकं मनागपि वैरस्यं परन्तु करुणैव। स्वयमेव करतलमुपागतममृतमनालोच्य परित्यजतां दयनीयैव हि विचारमूढता पुरुषाणाम्। ये पुनरस्यां क्षोदिष्ठान् दोषानारोप्य विशदयन्त्यसूयाभिनयपरिपाटनमात्मीयं तेषामप्युत्सहामहे न वयमुपालम्भनाय। परन्तु केवलं समादध्महे समुपभोगक्षमैर्मृदुस्पर्शैः करैः कन्दलयत्यानन्दं भगवति सुधाकरे यदलर्काः क्रूरक्रूरमाक्रोशन्ति स तेषां प्रकृतिसिद्धः संप्रदाय इति।"

एवं सुपरीक्ष्य अपि कमपि दोषलवम् अप्राप्य पं. **नीलकण्ठशास्त्रिणः** मुक्तकण्ठम् एव प्राशंसन् सूनृतवादिनीं व्यनिन्दन् च तथैव तस्याः असूयैकतत्परान्।

**१६. अस्ति नः सुमहान् विस्रम्भः।**

सूनृतवादिन्याः प्राथमिकान् एव पञ्चषान् अङ्कान् प्रपठ्य वाचकवृन्दः परं प्रीतोऽभवत्। यत्र तत्र साभिमानं विद्वांसः श्रीअप्पाशास्त्रि-विद्यावाचस्पतीन् अस्तुवन्। विज्ञानचिन्तामणौ उपरिप्रदत्तस्य लेखस्य अवशिष्टे भागे पं. **नीलकण्ठशास्त्रिणः** लिखन्ति स्म —

"इदं पुनरस्माकं विशेषतः संतोषस्थानं कृतार्थतापादं च। यदस्या आदर्श-संख्या-प्रकाशनावसरे पण्डित-वरेण्येन श्रीमताप्पाशास्त्रिमहाशयेन लिप्सिता चतुःशती ग्राहकाणां ततोऽधिकापि संख्या सपदि संपद्येतेति इति सदृष्टान्तं यत् तत्रास्माभिः प्रत्ययवास्थायि तदेतदवितथमेव संवृत्तमिति इतोऽप्यस्या अधिकाः संपद्येरन् ग्राहका आवहेच्चेयमधिकां शोभां समुन्मूलयेच्च 'मृतभाषा गीर्वाणी' इति केषांचन नवीन-परिष्कारिणां वचनीयवचनमिति चास्ति नः सुमहान् विस्रम्भः।" इति।

एवं **मित्रगोष्ठीपत्रिकायाः** तृतीयवर्षीय-षष्ठेऽङ्के तत्संपादकाः पं. **श्रीविधुशेखरभट्टाचार्याः** निवेदयन्ति —

"किं बहुना यदि निर्व्याजं वक्तव्यं द्रढीयानस्माकं विश्वासो यद्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यदि काऽपि सांप्रतं 'सांप्रत'-संस्कृत-भाषामयी साप्ताहिकी पत्रिका वस्तुतः साप्ताहिकीव स्यात्, भवेच्च प्रमोद-हेतुः, तर्हि सा विद्यावाचस्पति-महाशयसदृशैरेव संपाद्यमानेत्युच्चैस्तरां ब्रूमः। अन्यत् खलु नैपुण्यं भाष्य-टीका-कविवद्-भावने, अन्यच्च पत्रिका-संपादने।" इति।

हिन्दीभाषामये 'सरस्वती' इति मासिकपत्रे (१९०७ फर्वरी) तत्संपादकाः पं. आचार्यमहावीरप्रसादद्विवेदीमहाभागाः अपि प्रतिपादयन्ति स्म —

"साप्ताहिक समाचारपत्रोंमें जो गुण होने चाहिए वे सब आपकी इस नवीन पत्रिकामें है।" इति। अस्य अयं भावः — "साप्ताहिकीषु संवादपत्रिकासु ये ये गुणाः आवश्यकाः ते ते सर्वेऽपि शास्त्रिणाम् अस्यां नवीन-पत्रिकायां विराजन्ते।" इति।

**१७. सूनृतवादिन्याः नियमावलिः।**

प्रायः सर्वेष्वपि अङ्केषु अप्पाशास्त्रिभिः सूनृतवादिन्याश्च चन्द्रिकायाः च नियमावलिः प्रकाशिता। तत्र चन्द्रिकायाः नियमावलिः प्रदत्तपूर्वा एव। ततो विशिष्टाः नियमाः तु एवम् आसन् —

"सनातनधर्मविरुद्धाः प्रबन्धाश्चन्द्रिकायां कथंचिदपि न प्रकाश्येरन्। यैश्चापतिष्यत्यार्येषु दूषणं नाम। येषां च संशोधने भूयान् क्लेशोऽनुभूयेत। प्रबन्धगत-भाषासरण्यादि-परिवर्तने तु सर्वथाऽस्माकमेवाधिकारः। अन्यत्र प्रकाशितास्तु प्रबन्धाश्चन्द्रिकायां न प्रकाश्येरन्। विभिन्नया तु लिप्या प्रकाशिताः प्रकाश्येरन्नेव। अनुवादा अप्येवम्।" इति।

सूनृतवादिन्याः अपि नियमाः चन्द्रिका-नियम-समानाः एव आसन्। तत्र विशेषः यथा —

'१. वार्षिकं मूल्यम् अस्या रूप्यक-त्रयम्। (विदेशे ८ शिलिंग) २. मूल्यं पुनर् अग्रिमम् एव प्रेर्यम्। तदर्थं च द्वितीया संख्या व्ही.पी.-द्वारा प्रेर्येत। ३. एकस्या एव संख्याया मूल्यम् आनकः एकः। (विदेशे ४ पेन्स्) अतीतायाः पुनर् आनक-द्वयम्। ४. यां कांचिदपि संख्याम् आरभ्य सूनृतवादिनी ग्रहीतुं शक्यते। यस्मिश्च सप्ताहे येनासौ गृह्येत स एव तस्य तस्य वत्सरारम्भ-सप्ताहः। ५. ये किलैकत्र सूनृतवादिन्या दशसंख्याः क्रीणीयुस्ते विनामूल्यम् एकां संख्यां विन्देरन्। ६. प्रातिनिध्य-नियमास्तु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साक्षात्कृत्य संपादकमवबोध्याः प्रेर्यं वा शुल्कपत्रमवगन्तव्याः। ७. सूनृतवादिन्यां प्रकाशयितुं प्रबन्धादिकं प्रेरयितुमिच्छद्भिः सपदच्छेदं पत्रस्यैकस्मिन्नेव पृष्ठे सुविशदाक्षरं विलिख्य प्रेर्यतामेतत्। अवश्यं च परसवर्णादिकं विधातव्यम्। ८. श्रीशिवापकर्षद्योतका अद्वैतविद्वेषिणश्च प्रबन्धा न सूनृतवादिन्याम् अवकाशं विन्देरन्। ९. विना तु मतान्तरनिन्दां वैदिकमार्गस्यानुरोधेन विरचिताः प्रबन्धा अवश्यं प्रकाश्येरन्। १०. भाषा-सौष्ठवविशिष्टा एव प्रबन्धा विशेषतः समाद्रियेरन्। ११. विज्ञापनान्यपि वैदेशिकवस्तुविषयाणि सनातनधर्मद्रोहीणि वा न प्रकाश्येरन्। इति।

नियमान् एतान् सुनिपुणं निध्यायन्तः प्रतिपद्येरन् एव वाचक-महाभागाः अप्पाशास्त्रिणां कमपि विशेषम्। स हि स्वदेशे स्वधर्मे च श्रद्धातिरेकः एव। यदि नाम धनार्जनम् एव अकरिष्यत श्रीमदप्पाशास्त्रिभिः पत्रिका-प्रचारस्य उद्देश्यं, तर्हि सूनृतवादिनी अवश्यमेव निर्नियन्त्रणा सती तम् एनम् अवश्यम् अपूरयिष्यत्। भूयांसः हि अकल्पितम् एव अस्याः ग्राहकाः समपद्यन्त। विदेशेषु अपि भूयान् एव अस्याः प्रचारः बभूव। विदेशीयाः च स्व-स्व-धर्मादिप्रचारे दक्षाः एवासन्। यदि नाम तत्तेषां लेखादीन् विज्ञापनानि च निजपत्रिकायाम् अप्पाशास्त्रिभिः प्राकाशयिष्यन्त, तर्हि नूनं संपद्वतां वरिष्ठत्वम् अपि एतैः अलप्स्यत। किं तु नेदम् आसीत् एतेषां सूनृतवादिन्याः प्रचारे उद्देश्यम्। धर्मसेवा, राष्ट्रभक्तिः, संस्कृत-विद्या-रक्षणम् इत्यादि एव धनार्जनस्य सर्वथा विरोधि आसीत् उद्देश्यं पत्रिका-प्रचारस्य। एवं सति नेदं विस्मयास्पदं यत् देशद्रोहि धर्मद्रोहि वा प्रबन्धादि-प्रकाशनं सर्वथैव प्रतिक्षिप्तम् एतैः इति।

ग्राहकवञ्चनां परिहर्तुकामैः एव द्वितीयसंख्या व्ही.पी.-द्वारा प्रेर्येत इति सूचितम्। प्रकाशनार्ह-प्रबन्धानां विषयेऽपि निवेदनम् एतेषां भाषासौष्ठवं लिपि-सौष्ठवं च अपेक्षमाणम् आसीत्। भाषा-सौष्ठवं पुनः अनुपमं श्रीअप्पाशास्त्रिणां परिचितम् एव पाठकैः। अत एव संपादकीयोऽपि सन् अधिकारः अयं विशेषतः स्पष्टीकृतः यत् 'भाषासरण्यादि-परिवर्तने सर्वथाऽस्माकमेवाधिकारः' इति। प्रकाशनार्ह-प्रबन्धस्य सपदच्छेदत्वं निर्धार्यं अपि परसवर्णादिकस्य आवश्यकत्वमेव प्रतिपादयन्ति अप्पा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शास्त्रिणः। मूलं त्वस्य सन्धिः नाम अयं संस्कृत-भाषावर्ती विशिष्टः संस्कारः इत्येव। श्रीशिवाद्वैत-निष्ठैकपरत्वम् अपि श्रीअप्पाशास्त्रिणां प्रकटं भवति। यतः तैः एतद्-विरोधिलेखानां प्रकाशनं सर्वथा प्रतिषिद्धम्। एवं कुर्वाणैः अपि दशाङ्क-ग्राहिभ्यः एकाङ्क-पारितोषिक-वितरणेन प्रोत्साहनं प्रदत्तम्। पत्रिकायाः प्रचारे प्रातिनिध्यम् (Agency) अपि सुरक्षितम् एतैः। एतेन संस्कृतविद्यापीयूषकृतपोषणायाः भारत-भूमिकायाः मनसि निजसौभाग्याभिवृद्धये यत् आसीत् तत् एव सूनृतवादिनी-रूपेण प्रादुर्बभूव इति प्रतिभाति।

**१८. सर्वथा ते धन्यवाद-भाजनानि विश्वेषाम्।**

एवं चन्द्रिकया सह सूनृतवादिनीं प्रकाशयितुम् उद्युक्तानाम् अप्पाशास्त्रिणां भूयोभिः एव विद्वन्मूर्धन्यैः प्रोत्साहनं कृतम्। सूनृतवादिन्याः आदर्शप्रभृतिषु केषुचित् अङ्केषु चन्द्रिकायाः प्रशंसालेखाः कतिपये प्रकाशिताः। तत्र केचित् प्रकाशितपूर्वाः। अयं तु '**शिवराजविजयः**' इति कादम्बरीसदृशगद्यग्रन्थप्रणेतुः पं. **अम्बिकादत्तव्यास**महोदयस्य प्रशंसालेखः सविशेषं मननीयः। अस्य महोदयस्य '**शिवराजविजयः**' इत्याख्यं सुप्रसिद्धं गद्यकाव्यं प्रथमतः चन्द्रिकायाम् एव अष्टमखण्डतः प्रभृति प्रकाशयितुम् आरब्धम्। अनन्तरं च एतत् स्वतन्त्रग्रन्थरूपेण अन्यतः एव प्रकाशितं बभूव। पं. अम्बिकादत्तव्यासमहाशयः तु तदानीन्तन-संस्कृतकविपण्डितेषु मूर्धन्यः आसीत्। एतद्विषये प्रोक्तम् अप्पाशास्त्रिभिः—'अयं खलु महात्मा भारतरत्न-घटिकाशतकसाहित्याचार्याद्युपाधिकः' इति। **वासिष्ठ-गणपतिशास्त्री** नाम एकः दाक्षिणात्यः पण्डितप्रवरः **रमण**महर्षीणां शिष्यः आसीत्। स खलु उत्तरभारतदेशे पर्यटन् काव्यरचनायां प्रतिस्पर्धितुकामः पं. **व्यास**महाभागान् प्रत्यक्षीचकार। तदा वासिष्ठं प्रति उक्तं व्यासमहोदयैः — 'सत्वर-कविता-सविता व्यासो गौडोऽहमम्बिकादत्तः।' इति। अत एव पं. **व्यास**महाभागानाम् अभिप्रायः बिभर्ति किमपि अनन्यसाधारणं महत्त्वम्। स चैषः —

" इह व्यासवाल्मीकिप्रभृति-महामहोदयेषु कथावशेषेषु, कालिदास-माघ-मम्मट-भारवि-राजशेखरादिषु च भारतं निज-विरह-विधुरं विधाय कवितासुधा-मधुरतया पुरन्दरपुरं पूरयत्सु, कलि-काल-कलन-कुतुकाकुलेषु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चापरेषु प्रतिभा-प्रतिभासिनेऽपि रसिकान्तरालाभ-खेद-क्लेद-विमनाय-मानेषु, यत् किंचित् कवितापतापनमरण्यरोदनमिव मन्यमानेषु तदुन्नमने च हतोत्साहेषु दर्पितैर्मूर्खैर्मत्सरिभिश्च प्रायोऽवहेलितेषु विद्वत्सु, प्रत्यहं ह्रसमानां गतमानां च गीर्वाण-गिरं पुनरुन्नमयितुं तदीयसुधाधारासारैश्च सतां हृदयानि प्लावयितुं ये बद्धपरिकराः सन्ति, सर्वथा ते धन्यवाद-भाजनानि सर्वेषां भारतीयानाम्। तादृश्येव चान्यतमा उपलभ्यन्ते संस्कृत-चन्द्रिकानाम्न्या मासिकपत्रिकायाः प्रचारका महामहोदयाः। तत् सर्वेषां संस्कृतप्रियाणामेतत् साहाय्यविधानं धर्म इव प्रतिभाति।" इति।

अस्मिन् लेखे पं. व्यासमहाभागाः व्यास-वाल्मीकि-कालिदासादीनां महामान्यानां श्रेण्याम् अप्पाशास्त्रिमहाशयान् निवेशयन्ति इति समवधात-व्यम् इदम्।

## १९. 'भारती-भवन'-नाम पुस्तकानां संग्रहालयः।

निखिलभारतीययशसां पात्रभूतानाम् अप्पाशास्त्रिणाम् इयं सूनृत-वादिनी सर्वत्र संमानम् अवाप। सूनृतवादिन्याः आरम्भतः प्रथमवर्षीय-षड्विंशाङ्कं (२६) यावत् मुखपृष्ठे उपरिनिर्दिष्टं विज्ञापनं प्रकाशितम् अभूत्। सप्रयोजनं च तस्य उद्देश्यं विज्ञापनलेखः एव विस्पष्टयति। अयं च एतादृशः —

"विदितमेवैतदशेषाणामपि प्रायेण भारतवर्षीयाणां यदासीत् किल पुरा भारतवर्षं नामेदमेकमात्रं विहारभवनमखिलानां विद्यानामिति। अव-सरे च तस्मिन् प्रणीता नानाविधैः पण्डितप्रकाण्डैस्तानि तानि शास्त्राण्य-धिकृत्य ते ते ग्रन्था, यान् किलावलोकमानानामिदानीन्तनानां विस्मयस्य परां कोटिमारोहति चेतः। प्रबन्धेषु पुनरेतेषु भूयांस एव न केवलं नाद्यापि प्रकाशनसरणिमारूढाः प्रत्युत कीटमुखेष्वपि पतिता इत्यहो वैषम्यं सम-यस्य। आवश्यकं च प्रकाशनमेतेषाम्। एतदायत्तं हि नानाविधं भारत-वर्षीयाणां विज्ञानमिति। अत एव च प्रबन्धानेवंविधान् प्रकाशयितुमिच्छन्तः संग्रहीतुमेनान् कामयमाना भारती-भवनं नाम संस्कृतानां प्राकृतानां च पुस्तकानां संग्रहालयमवस्थापयामः। प्रार्थयामहे च भारतवर्षीयान् यद् विधीयतां प्रबन्धप्रेषणादिना कर्मण्यत्र साहाय्यम् अस्माकमिति। अत्र च

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

देवनागरैर्वङ्गीयैरान्ध्राक्षरैर्ग्रन्थाक्षरैश्च संमुद्रिता लिखितास्तालपत्रोत्कीर्णाश्च संस्कृतप्रबन्धाः संगृह्यन्ते। पत्रादिकं सूनृतवादिन्याः कार्याध्यक्षः, पो. वाई, इत्यत्र प्रेर्यम्।" इति।

ग्रन्थाक्षरं नाम दक्षिणदेश-प्रसिद्धा काचित् लिपिः। अयं भारतीभवन-संस्थापन-विषयकः मनोरथः कियान् सुफलितः इति न ज्ञायते। कथाकल्पद्रुम-समस्या-पूर्तिवत् अयमपि स्वस्मिन् एव जीर्णः इति भाति। अहो! कुटिलत्वं दैवस्य!!

**२०. मर्मज्ञा एव हि ते विद्वांसः।**

सूनृतवादिन्याः आदर्शाङ्क-प्रकाशनस्य प्रयोजनं प्रागेव स्पष्टीकृतम्। ततः परं तु सूनृतवादिनीम् अपि सूनृतवादिनीं केऽपि दूषयामासुः। विज्ञानचिन्तामणिसंपादकैः 'सूनृतवादिनी सर्वाङ्गमनोरमा यथाप्रतिज्ञमेव प्रचरति' इति प्रोत्क्षिप्तहस्तं समुद्घोषितम्। अप्पाशास्त्रिभिः अपि स्वकीयपत्रिकायां तान् एतान् उद्दिश्य एवं निवेदितम्— (सू. वा. १/३)

"ये तु सन्ति देशभाषामयानि संवादपत्राणीति विफलमेव संस्कृतपत्रिकाणां प्रकाशनमित्याकलयन्ति, न खलु तेषु प्रत्यवस्थाय परिश्रमयामो लेखनीमात्मीयाम्। मर्मज्ञा एव हि ते विद्वांस इति। एतावत्तु विज्ञापयामो यदिङ्ग्रेजीपत्रिकानुवाचनमात्रेण कृतार्थैर्न किल मनसाऽपि स्पृश्यन्ताममीभिर्देशभाषामयानि संवादपत्राणीति। एतदपि पुनर्न विस्मरणीयं यत् जीवन्त्येवाद्यापि संस्कृतभाषैकजीवितास्तदुन्नतिकामुकाश्च पण्डिता भारतवर्षीयेषु तेषु तेषु प्रदेशेषु भूयांस इति। नहि भाषान्तरे (संवादाः) प्रकाशिता इति नैते संस्कृतभाषायामपि प्रकाशयितुं नार्हन्ति। सन्ति हि भूयांसः संस्कृतमात्रप्रणयिनो ये किल नांशतोऽपि स्निह्यन्ति देशीय-भाषासु। अन्यद्धि सौष्ठवं भाषाणामन्यासामन्यच्च संस्कृतभाषायाः।" इति।

अत्रैव अप्पाशास्त्रिभिः कथितं यत् संवादरसस्य देशीयभाषामात्रास्वाद्यत्वे सर्वेभ्योऽपि नन्विङ्ग्रेजीपत्रेभ्यस्तिलाञ्जलिरेव प्रदेयः स्यात्। तानि यथा वैदेशिकभाषाभिज्ञानां कृते, एवं संस्कृतपत्राणि संस्कृतज्ञानां कृते सन्ति। तदेवं विचार्यमाणे नास्ति संस्कृतपत्राणां वैफल्यं नापि वा सूनृतवादिन्याः प्रतिज्ञाभङ्ग इति। एवं येन केनापि प्रकारेण संस्कृतप्रचारे प्रतिबन्धकीभूतानां मुखमुद्रणं कृतम् अप्पाशास्त्रिभिः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२१. प्रामादिकः किल समय-बन्धः।

एवं संस्कृतद्वेषिणां समुद्धूलन-पूर्वकं श्रीअप्पाशास्त्रिभिः महिष्ठेन उत्साहेन प्रक्रान्तं प्रकाशनं सूनृतवादिन्याः। वाई-क्षेत्रे मोदवृत्त-मुद्रणालये एव चन्द्रिकया सह सूनृतवादिन्याः मुद्रणं भवति स्म। यदा च सूनृतवादिन्याः प्रकाशनं निश्चितं, तदा समक्षम् एव केषांचित् महात्मनां मोदवृत्त-मुद्रणालयाधिपतिना सह चन्द्रिकायाः च सूनृतवादिन्याः च मुद्रणार्थं समय-बन्धः कृतः। यथायोग्यं मुद्रणादि-व्ययधनम् अपि प्रदत्तम्। इतः च प्रथमाङ्कम् आरभ्य सप्तमाङ्कं यावत् सूनृतवादिनी निरन्तरायम् एव प्रचलिता। अष्टमाङ्कीयः प्रबन्धः अपि १५–१–१९०७ दिने भौमवारे मुद्रापयितुं प्रदत्तः। १७–१–१९०७ दिने गुरुवासरे च पत्रिकायाः प्रकाशनं भवितव्यम्। प्रति-गुरुवासरम् एव हि सूनृतवादिन्याः प्रकाशनं प्रतिज्ञातम् आसीत्। ततश्च यथा सप्तानाम् अङ्कानाम् प्रकाशनं विनैव अन्तरायम् अभूत्, तथा अयमपि अष्टमोऽङ्कः प्रकाशितः भविष्यति इति श्रीअप्पाशास्त्रिणां संभावना आसीत्। किं तु अकस्मात् एव मोदवृत्त-मुद्रणालयस्य मनोहर-गोविन्द-अभ्यङ्कर-नामकः कार्यदर्शी तस्मिन् एव दिने (भौमवारे) अप्पाशास्त्रिणां गृहे समागम्य किमपि आरटितवान्। अप्पाशास्त्रिणः सूनृतवादिन्याः अष्टमाङ्के वृत्तमेतद् उपवर्णयन्ति स्म। अभ्यङ्करमहोदयः किल अवदत् —

'नेष्यतेऽतःपरं पूर्वनियमानुसारेण सूनृतवादिन्याः प्रकाशनमस्माभिरिति। गरीयसी ह्यतो नो हानिः संपद्यते। प्रामादिकः किल समयबन्धो यन्त्राधिपतेरित्यादि। अन्ततश्च यन्त्राधिपतिनाऽप्युपस्थायाऽऽमुक्तकण्ठं संमत्याभ्यङ्करवचनं प्रादायि तिलाञ्जलिः सत्याय।" इति।

अहो क्रौर्यं यन्त्राधिपतीनाम्! चन्द्रिकायाः प्रारम्भतः मुद्रणं मोदवृत्त-मुद्रणालये एव भवति स्म। तदानीं खलु तस्य प्रमुखः पं. काशीनाथशास्त्री लेलेमहोदयः आसीत्। किन्तु सोऽपि मोदवृत्तीय-जनानां दौर्जन्येन मोदवृत्त-संबन्धं परित्यज्य अन्यत् एव 'श्रीकृष्ण-मुद्रणालय' इति संज्ञकं मुद्रण-कार्यालयं संस्थापयामास। मोदवृत्तीयानां वञ्चनापाटवम् इदानीं श्रीअप्पाशास्त्रिषु प्रतिफलितम्— "प्रामादिकः किल समयबन्धः।" इति। इदं तु त्रिवारं सत्यं यत् मोदवृत्त-यन्त्राधीश्वरस्य एव अयं प्रमादः इति। न तु सूनृतवादिन्याः चन्द्रिकायाः च संपादकस्य।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२२. श्रीकृष्ण-मुद्रणालये —

अकाण्डे एव मोदवृत्तीयानां धौर्त्येन वञ्चिताः अप्पाशास्त्रिणः परश्वः एव (गुरुवारे) सूनृतवादिनी कथं प्रकाशनीया इति चिन्तायां मग्नाः आसन्। इदानीं स्मृतिसरणिम् आरूढः एतेषां सुहृत्-प्रवरः श्रीकाशीनाथ-शास्त्रिमहाशयः। तदाऽवे एव तेन सह संमन्त्र्य सपदि एव चन्द्रिकायाः सूनृतवादिन्याः च मुद्रणस्य समुचिता व्यवस्था विहिता। लिखितं खलु अप्पाशास्त्रिभिः — ( सू. वा. १। ८ )

" अस्तंगतश्च भगवता भास्वता सममेव सूनृतवादिन्या साकं विद्यमानो मोदवृत्तस्य संबन्धः। अपरेद्युश्च (बुधवारे) समनुगृहीता प्रतिज्ञाय प्रकाशन सूनृतवादिनी च चन्द्रिका च श्रीकृष्णमुद्रणालयाध्यक्षेण लेले श्रीकाशीनाथशास्त्रिणा। यदेतत् प्रदत्तमवसरेऽस्मिन् साहाय्यमस्मभ्यं श्रीमता काशीनाथशास्त्रिमहाभागेन तदर्थं किल परस्सहस्रान् धन्यवादा-नस्मै वितरामः। प्रयच्छामश्च धन्यवाद-सहस्रं मोदवृत्ताध्यक्षाय यदेतेन प्रादुष्कृत्यात्मनः स्वरूपप्रभां काल एव प्रबोधिताः स्म इति।" इति।

अतः परम् १८२८ शाकीय-माघसुदि चतुर्थीतः सूनृतवादिनी चन्द्रिकया सहैव श्रीकृष्ण-मुद्रणालये प्रकाशितुं प्रारब्धा।

२३. सरलसंस्कृतभाषैव सम्यगुपायः। — श्रीजयचन्द्रशर्मा

निर्दिष्टपूर्वम् एतत् यत् सूनृतवादिन्याः प्रचारे कीलकत्वम् आविष्कुर्वतां मुखमुद्रणं बहुभिः पाठकैः कृतम् इति। सूनृतवादिन्याः अष्टमाङ्के चन्द्रिका-संस्थापकानां पं. श्रीजयचन्द्रशर्मसिद्धान्त-भूषणमहा-भागानां ' सूनृतवादिन्या आविष्कारे उद्देश्यम् ' इत्याख्यः प्रबन्धः प्रकाशितः। तत्र सूनृतवादिन्याः प्रोत्साहनपरं, तद्द्वेषिणां तिरस्कारपरं च किंचित् विलिख्य प्रोक्तम् एतैः —

" अहो स कालश्चिराय गतः। तदानीं संस्कृतभाषा भारतीय-कीर्तिस्तम्भीबभूव। किन्तु संप्रति तत्र भाषायां युरोपीया जर्मनदेशीया यथा समुत्सहन्ते यतन्ते च, भारते तच्चतुर्थांशोऽपि नोपलक्ष्यते। फलतोऽपि शास्त्रीय-मर्मार्थं बोद्धुं सरल-संस्कृतभाषैव सम्यगुपायः। अस्माभिर्बहुधा दृष्टं श्रुतं च यद् देशान्तरेऽनेके विनापि व्याकरणाध्ययनं केवलमभ्या-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सत्रशेन संस्कृत-भाषायां व्युत्पत्ति लभन्ते, संस्कृतेनालपन्ति, श्लोकान् रचयन्ति, शास्त्राणि च प्रतिबुध्यन्त इति । " इति ।

अनेन लेखेन पं. जयचन्द्रशर्मणा संस्कृत-प्रचार-निदान-विषयकः दृष्टिकोणोऽपि स्पष्टीभवति । स खलु विनापि क्लिष्ट-व्याकरणाध्ययनं सरलसंस्कृतभाषया व्यवहरणम् एव । तदर्थमेव हि सूनृतवादिन्याः प्रयासः । अत एव च तस्याः उद्देश्यं विस्पष्टीकृतं पण्डितवर्यैः, अनुमोदिताः प्रचारकाः, विनिन्दिताः च द्वेष्टारः ।

## २४. वाईक्षेत्रे स्वदेशीय-संमेलनम् ।

सूनृतवादिनी खलु वृत्तान्तप्रधाना पत्रिका आसीत् । अतश्च तस्यां नानाविधवार्ताः तत्र तत्र च संपादकस्याभिप्रायाः स्वधर्मस्वराष्ट्रविषयकेण दृढाभिमानेन संपृक्ताः प्रधानलेखाः च भूयांसः एव प्रकटीबभूवुः । एतेन स्वातन्त्र्यान्दोलनेऽपि संप्राप्तं श्रीअप्पाशास्त्रिभिः किमपि नेतृत्वम् । यथा किल मोहमयी-कलकत्ता-सदृशेषु महानगरेषु जानपदमहासभायाः (Indian National Congress) अधिवेशनानि संपद्यन्ते स्म, एवं साधारण-नगरेषु, ग्रामेषु च अपि स्वराज्यान्दोलनम् अधिकृत्य सभाः भवन्ति स्म । तत्र वाईक्षेत्रवासिभिः राष्ट्रभक्तैः स्वदेशीय-संमेलनम् एकम् आयोजितम् । एतादृशकार्यकारिणां भूयसाम् एव यत्किंचित्-कारिता हानिप्रदा एव भवति । वाईनगरे च एतत्संमेलनान्दोलनकारिणां 'फटाटोपो भयंकरः' इत्येतादृशीं प्रवृत्तिं श्रीअप्पाशास्त्रिणः साक्षात्कृतवन्तः । संमेलनस्य यशस्वितायै पुनः मान्यतमः एव कोऽपि समपेक्षितः इति विचारेण संमेलनभक्तैः प्राथमिकाधिवेशने अध्यक्षपद-स्वीकारे प्रार्थिताः अप्पाशास्त्रिणः । ततः च —

"प्राथमिके किलाधिवेशनेऽनिच्छन्नपि नियोजितोऽध्यक्षपदे राशिवडेकरो विद्यावाचस्पतिः श्रीअप्पाशर्मा, किन्तु किं वा ततः परं संवृत्तम्? विचारयन्नपि नासौ जानाति ।" ( सू. वा. १/११ )

संमेलनं किल एतत् १८२८ शाकीयमाघे आयोजितम् आसीत् । एतादृशानि अधिवेशनानि पण्ढरपुर-कऱ्हाड-प्रभृतिप्रदेशेषु अपि संपन्नानि । एतानि खलु 'वाचामाडम्बरमात्रम्' आसन् । अभिप्रयन्ति स्म किल अत्र अप्पाशास्त्रिणः 'लाभः पुनरमुना नैव कश्चित्संपन्नः' इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२५. आवश्यक-कार्येषु विनियुज्यतां द्रविण-राशिः ।

संमेलनादि-व्यवसायेषु भूयिष्ठं धनं व्ययीभवति । तदनुसारं यदि नाम फलनिष्पत्तिः भवेत् तर्हि 'क्लेशः फलेन हि पुनर्नवतां विधत्ते' इति न्यायेन अवान्तर-फलानि मुख्य-फल-संपादनाय उत्साहं वर्धयेरन् । यदि तु एतत् विपरीतम् एव जायेत तर्हि सायासं संमेलनादि केवलं कष्टाय एव संपद्येत । अतः च एतादृश-संमेलनाद्यपेक्षया नगरस्य पारमार्थिकी सुधारणा विधातव्या इत्येतत् मतम् आसीत् अप्पाशास्त्रिणाम् । अत एव हि समुपदिष्टम् एतैः — 'वाईक्षेत्रीयैः पुनः गोरक्षणं, स्वदेशीय वस्तु-कार्यालयः, शर्करानिर्माणालयः, वैदेशिककलाशिक्षणम्, इत्याद्यावश्यककार्येषु विनियुज्यतां द्रविणराशिः' इति । वाईक्षेत्रे प्रतिवर्षं कृष्णानद्याः महोत्सवः प्रतितीर्थं महता उत्साहेन संपद्यते । तत् एतत् अभिलक्ष्य प्राहुः स्म अप्पाशास्त्रिणः —'यदि वाग्मि-जनोपन्यास-श्रवणेच्छा तदा 'कृष्णोत्सवे प्रतितीर्थमायोज्यन्तां कीर्तनानीवोपन्यासा अपि'। इति । (सू. वा. १।१२)

एतेन स्वराज्य-प्राप्तये धर्मपीठानाम् अपि सहयोगः समपेक्षितः इति सूचितम् अप्पाशास्त्रिभिः । किन्तु स्वराज्यम् एतेषां स्वधर्मानुसारि आसीत् इति नैव विस्मरणीयम् ।

२६. गणपति-तीर्थे प्रकाश-सभा ।

एवं स्वदेशीयान्दोलनस्य दिग्दर्शनं कुर्वद्भिः अप्पाशास्त्रिभिः संप्राप्तं मनाक् इव फलं स्वीयस्य परिश्रमस्य । संवृत्तपूर्वे स्वदेशीय-संमेलने किम् उपक्षिप्तं किं वा निश्चितम् इत्यादि विचारयितुम् १८२८ माघवदि अष्टम्याम् अन्या एव काचित् सभा 'प्रकाशसभा' इति वाईक्षेत्रे गणपतितीर्थे समभवत् । अत्रापि श्रीअप्पाशास्त्रिणः एव अध्यक्षाः आसन् । 'अधिवेशनं चैतन्निरन्तरायमेव निर्वृत्तम् ।' (सू. वा. १।१२)

एवमेव वाई-वासि-नागरिकाणां सार्वजनिक-सभा पुनरपि संवृत्ता । सभार्थम् आसन-फलकादिकं मोदवृत्त-कार्यालयात् समानीतम् । यत्र 'सभापतिपदार्थं प्रार्थितः काशीनाथशास्त्री पीठमारूढः तावत् मोदवृत्ताधिपतिः सभास्थं स्वीयं फलकं ( टेबल् ) सभापतिहस्तात् समाचिच्छेद ।' मोदवृत्तेन साकं काशीनाथशास्त्रिणः कलहः पूर्वं संवृत्तः आसीत् । किन्तु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सोऽयं वैयक्तिकः। सार्वजनिकसभायां तत् एतत् वैयक्तिकद्वेषादिकं दृष्ट्वा 'सार्वजनिकसभायामनुचितमेतत्' इति श्रीअप्पाशास्त्रिभिः मोदवृत्ताध्यक्षः बहुधा तिरस्कृतः।

**२७. न किल वयं गणयामश्चीत्कारम् एतस्य।**

श्रीअप्पाशास्त्रिभिः मोदवृत्त-मुद्रणालयस्य त्यागे निदानं सूनृतवादिन्याः अष्टमाङ्के प्रकाशितमेव। तं लेखं दृष्ट्वा मोदवृत्त-संपादकेन स्वपत्रस्य अङ्के श्रीमद्-अप्पाशास्त्रिणाम् उपरि भूयिष्ठाः आक्षेपाः कृताः। तान् एतान् समुद्धूलयितुकामैः विद्यावाचस्पतिभिः सूनृतवादिन्याः द्वादशाङ्के गर्जितम्— "अचिरोद्गतां फाल्गुनोपक्रममवबोधयन्तीं मोदवृत्तसंख्याम् अवेक्षमाणास्तत्र चास्मानधिकृत्य प्रकाशितप्रबन्धमवलोकमानाः —

'ददतु ददतु गालीर्गालिमन्तो भवन्तो
वयमिह तदभावात् तत्प्रदानेऽसमर्थाः।
जगति विदितमेतद् दीयते विद्यमानं
नहि शशकविषाणं कोऽपि कस्मै ददाति॥'

इत्येव प्रत्युत्तरयामः। अस्मदीयवैदुष्यप्रशंसाप्रशंसायां तु नांशतोऽप्यधिकारो मोदवृत्त-यन्त्राध्यक्षस्य। न खल्वार्द्रक-वणिजा क्रियमाणं रत्न-परीक्षणं किमप्युपकरोति। न किल वाई-क्षेत्रस्थः सूनृतवादिन्याः संपादक इति स्यादेतत्। किन्त्वसौ नूनं यत्र कुत्रापि ग्रामे वा पत्तने वा भूसंपत्तिमानेव नैव पुनर्मोदवृत्ताधिपतिरिव निःक्षेत्रो निःसदनश्चेति नैतद् विस्मर्यतां मोदवृत्ताध्यक्षेण। अत एव च यावान् मोदवृत्तयन्त्राधिपतेरधिकारो वाई-क्षेत्रे न किल ततः स्तोकमपि न्यूनः सूनृतवादिन्याः संपादकस्येत्यवगम्यतामेतेन। न किल वयं गणयामश्चीत्कारमेतस्येपि कृतमनभिज्ञप्रायेषु कटाक्षक्षेपेणेति शिवम्।" इति।

एवं विनयशालिनः सन्तोऽपि अप्पाशास्त्रिणः अन्यायं मनाक् अपि नैव सहन्ते स्म। आत्मज्ञानवताम् अपि एतेषाम् अभिमानः सुपथे एव व्यराजत।

**२८. श्रीमता महाराजेनापि किमनुष्ठितम्?**

चन्द्रिका-सूनृतवादिन्योः सौकर्यार्थं वाईक्षेत्रम् अधिवसद्भिः अपि न सर्वथा परित्यक्तं कोल्हापुरम् अप्पाशास्त्रिभिः। कारणान्तरवशात्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुहुर्मुहुः पश्यन्तः एव आसन् एते कोल्हापुरीयं स्थिति-गानम् । क्षेत्रगृहादिकं पुनः एतेषां कोल्हापुर-विभागे एव आसीत् । कोल्हापुरे स्थितानां ग्रामान्तरे वर्तमानानां च एतेषां श्रीशाहु-महाराजस्य वर्तने सूक्ष्मेक्षिका समवर्तत । पूर्वं खलु वेदोक्तं निमित्तीकृत्य स्वधर्माचरणार्थं महाराजः प्रार्थितः श्रीअप्पाशास्त्रिभिः । इदानीं तावत् अन्यत् एकं संपन्नम् । ईशपुत्रस्य १९०६ वर्षीये अन्तिम-मास-द्वये कोल्हापुरे लोक-प्रतिनिधीनां सभा ( Parliament ) संभूता । इदं कृत्यं च महाराजपक्षीयाणां भूयसाम् एव नासीत् अनुमतम् । तथापि प्रजानाम् एव संमत्या तत् इदं घटितम् । इदानीं च कोल्हापुर-राज्यस्य प्रधानसचिवः बर्वे नामकः आसीत् ब्राह्मणः । तस्यैव अधिकार-कक्षायां सभा इयं संजाता । अतश्च भूयांसः एव ब्राह्मणानाम् एव कर्म एतत् इति घोषं घोषं तिरश्चक्रुः ब्राह्मणान् । मुम्बई-टाईम्स-पत्रेण अपि प्रतिनिधि-सभा-विषये विरोधः एव दर्शितः । बीजं पुनः अत्र प्रजा-समुदायस्य ऐकमत्यम् आङ्ग्ल-शासन-विरोधम् अपि कुर्यात् इत्येव । संवीक्ष्य पुनः एतत् अप्पाशास्त्रिणः सूनृतवादिन्याः प्रथमे एव अङ्के प्रतिपादितवन्तः —

"स्वीकुर्मस्तावद्वयं क्षणं प्रतिवादि-परितोषाय परिषदियं ब्राह्मणानामेवेति । तथाऽपि नैतावताऽपहीयते समुचितत्वं तस्याः । स्वार्थमात्रम् उद्दिश्य प्रवर्तमानः किल दूषितः स्यात् । न तु लोकप्रतिनिधि-सभावस्थापने कोऽपि स्वार्थो नाम ब्राह्मणानां संसिध्यति । आत्मनश्चाधःपाते ब्राह्मणानेव हेतुतया व्यपदिशद्भिः कथ्यतां तावत् समुन्नतैर्मराठा-जातीयैः किंवा समनुष्ठितं संप्रति । श्रीमता महाराजेनापि तावत् किम् अनुष्ठितम् ? किमु विद्यन्ते कृषीवला इति न्यूनीकृतः क्षेत्रकरः ? किंवा दुर्भिक्षग्रस्ता इति वितीर्णं किमपि प्रजाभ्यः साहाय्यम् ? उताहो सलिलाभावतः क्लिश्यन्तीति निर्मितानि सरांसि ? समवस्थापितो वा कुत्राप्येकोऽपि वा निःशुल्को विद्यालयः । तत् किं तावदनुष्ठितं मराठाजातीयानां पक्षपातिनापि सर्वथा प्रभवतापि च श्रीमता महाराजेन ?" इति ।

एवं तर्जयित्वा कोल्हापुराधिपतिं सभ्यान् उपदिशन्ति स्म अप्पाशास्त्रिणः —

"न चापि सभेयं स्वप्नेऽपि नाम राज्ञे विद्रुह्यति । अन्यो हि राज-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्रोहः, अन्यच्च न्याय्यानामात्मनोऽधिकाराणां प्रार्थनम्। एषा किल न्याय्यान् प्रजाधिकारान् अभियाचते महाराजम्। आवेदयति चात्मनो दैन्यमेतस्मिन्। एवंविधायाश्च सभाया अवस्थापनेन अवश्यं प्रमोदभर-तुन्दिलेन भवितव्यं राज्ञा। प्रधानो हि राज्ञां धर्मः प्रजापालनं नामेति। किन्तु नाद्यापि समारूढोऽभ्युदयं भाग्यभानुः कोल्हापुरीयाणाम् इति संभाव्यते। तथापि अवश्यम् आसादयेत् एवाभ्युदयं सभेयमिति नात्र सन्देहः। तदस्ति नः प्रत्याशा यन्न परित्यज्यासुरुत्साहम् आत्मीयं कोल्हापुरीया इति।" इति। इति लोक-प्रतिनिधीन् उत्साहितवद्भिः अप्पाशास्त्रिभिः स्वीकृतः कोल्हापुराधिपतेः गरीयान् रोषः। पूर्वम् अपि धार्मिकान्दोलने श्रीमहाराजस्य प्रातिकूल्यम् एव प्रकटीकृतम् एतैः। इदानीं राजकारण-विषयेऽपि प्रातिकूल्यम् एव संपादितम् अमीभिः। अत एव **'जनपद-हितकर्ता त्यज्यते पार्थिवेन'** इति न्यायानुसारं श्रीअप्पाशास्त्रिविद्यावाचस्पति-नामधेयं विद्वद्रत्नं कोल्हापुराधिपतेः क्रोधस्य समुद्दीपनं बभूव।

## २९. वाई-क्षेत्रे ग्रन्थिज्वरः।

१८२८ शक-वर्षस्य फाल्गुन-मासीय-पूर्णिमायां सूनृतवादिन्याः चतुर्दशोऽङ्कः प्रकाशितः। ततःपरं फाल्गुनवदिसप्तम्याम् एव पञ्चदशोऽङ्कः अवतारणीयः आसीत्। किन्तु सः पञ्चदशोऽङ्कः १८२९ वर्षीयाधिक-चैत्र-सुदि चतुर्दश्यां प्रकाशम् आपन्नः। अर्थात् एकमासं यावत् सूनृतवादिनी प्रतिबद्धा। निदानं पुनः अस्य विलम्बस्य अप्पाशास्त्रिभिः सूनृतवादिन्याः पञ्चदशाङ्के स्पष्टीकृतम्। यथा—

"न किल एतत् स्वप्नेऽपि नाम विचिन्तितम् अस्माभिर्यत् सूनृतवादिनी यथाकथम् अप्यवितर्कितम् एव उपनतेन प्रतिहन्त्येन विघ्नजातेनेति। किन्तु का शक्तिरस्माकं प्रतिकूले विधातरि? अतश्च नैतदाश्चर्यं यत् परित्यज्य पञ्चदश्याः सङ्ख्यायाः प्रकाशनं प्रेरितानि तदात्व एव प्रकटपत्राणि अस्माभिः। संप्रत्यपि नैकान्ततः प्रशान्तो वाई-क्षेत्रे ग्रन्थि-ज्वरः। इदानीमपि नोपतिष्ठन्ति मुद्रणालयं यथापूर्वं कर्मकराः। यावच्छक्यं प्रयतयानुरञ्जनीयानि प्रिय-पाठकमहोदयानां चेतांसि इत्यत एव कर्मण्यत्र प्रवृत्ताः स्मः।' इति।

एवंविधेन संकटेन संस्कृतचन्द्रिकायाः प्रचारः अपि मुहुर्मुहुः खण्डितः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ३०. श्रीमज्जद्गुरोर्ब्रह्मभूयावाप्तिः ।

विदितं खलु भूयसाम् एव दक्षिण-भारतीयं सुप्रसिद्धं शृङ्गेरी-शारदा-पीठम्। यत् खलु श्रीमदाद्य-शंकराचार्य-चरणैः धर्म-रक्षणार्थं संस्थापितम्। एतस्मात् एव पीठात् दक्षिण-भारते संवृत्ताः नैकाः एव पीठशाखाः। तासु एव च एकं महाराष्ट्रप्रदेशे राजमानं सङ्केश्वरपीठम्। एतस्यैव अधिकारी परिव्राट् श्री. विद्यानृसिंहभारती नाम वर्षीयान् धर्माचार्यः १८२९ वर्षे चैत्रवदि ब्रह्मभूयं गतः। एष किल साङ्गलिमण्डलान्तर्गत-भिल्लवाटिकाक्षेत्रीयः। अस्य एव शिष्यः आसीत् ब्रह्मनाळग्रामीयः कोऽपि येन वेदोक्तान्दोलने कोल्हापुर-नरेशस्य पक्षो गृहीतः। अत एव अस्मिन् शिष्यस्वामिमहाभागे भृशम् एव क्षुब्धाः श्रीमदप्पाशास्त्रिणः। गुरुस्वामि-महाभागाः पुनः धर्म-मर्यादा-रक्षणे एव दत्तचित्ताः आसन् इति एते श्रीमदप्पाशास्त्रिणां श्रद्धाभाजनं बभूवुः। ब्रह्मलोकं गतेषु पुनः एतेषु शोकमग्नैः अप्पाशास्त्रिभिः सूनृतवादिन्याः षोडशसंख्यायाम् उपरिप्रदत्त-शीर्षकः प्रधानलेखः प्रकटीकृतः। अस्य च विषये यत् उक्तम् अप्पाशास्त्रिभिः तत् एतत् पठ्यतां संक्षेपेण पाठकैः। येन गुरुविषयिणी पीठविषयिणी च वाचस्पतीनां भावना विज्ञायेत। यथा—

"एष किल महात्मा कोल्हापुरान्नातिदूरवर्तिनि भिल्लवाटिकाग्रामे समधिगतात्मलाभोऽधीत्य साङ्गं वेदं निर्वर्तितगार्हस्थ्यश्चरमे वयसि धर्माचार्य-पीठमधिष्ठितः। धर्मपीठाधिष्ठितः पुनरयं महाभागो नासीत् संस्कृते निष्णातो नतरां च मीमांसायाम्। तथापि तद्विद्भ्योऽपि गरीयस्यासीदस्य धर्मशास्त्रे च तदनुष्ठाने च प्रीतिः। वेदशास्त्रसमुन्नतौ च गरीयान् आदर एतस्य। अवस्थापिता चानेनं सङ्केश्वरे वेद-शास्त्र-पाठशाला स्वीये मठे। अस्यैव च धर्मशासनसमये कदाचित् सुकृतातिशयपरिपाका-दिव कोल्हापुरीयाणां समनुगृहीतवन्तः कोल्हापुरं श्रीमन्तः शृङ्गेरीजगद्-गुरुपीठाधिपा उपागमनेन। ततःप्रभृति च अवस्थापितास्त्रिचतुराः शास्त्रिण आत्मनः सविध एतेन। वितीर्णं किल काभ्यश्चित् परिषद्भ्यः साहाय्यमेतेन। समुद्भूतः किल कियद्भ्यश्चिद्-वत्सरेभ्यः प्राग्-गोमान्तकप्रान्ते केषांचित् शूद्र-जातीयानां प्रक्षोभः। तदा पुनर्महात्मनाऽनेन तत्र गत्वा समुपदिश्य एतान् प्रशमितः सोऽयम्। एतेनैव च निर्णीतानि पुण्यपत्तनीया-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दीनि कियन्तिचिद् धार्मिकविवादजातानि। एतस्य चानुशासनेऽपूर्वा घटना नाम शिष्यद्वयकरणम्। तत्र ब्रह्मानाळकरोपाह्वो महीयस्या भूसंपदः कृते शूद्रानपि वेदाधिकारिणो निरणैषीत् इति अनर्हं एव जगद्गुरुपीठमारोढुम् इति अवधार्य मरीचिक्षेत्रवासिनं मूर्तमिव वेदावतारं काशीनाथदीक्षितं नाम शिष्यं चक्रे। बहिश्चकार च प्राचीनं शिष्यम्। ब्रह्मभूयं गतः पुनरयं महाभागो जलसमाधिविधिनैव समस्कारीति श्रूयतेऽस्माभिः। यद्यपि विद्यत एव यतीनाम् एवंविधोऽपि संस्कारस्तथापि नायमुचितो जगद्गुरुचरणानामित्येवास्मदीयोऽभिप्रायः। सामान्यतो हि निर्धना अपि पुत्रशिष्यादयः संन्यस्तानां पितृगुरुप्रभृतीनां निखननं तत्र च आयतनादि-निर्माणं वाञ्छन्ति। आस्तां तावत्। आचरिते किल एतस्य गुणा एव भूयांसः। एतस्य च ब्रह्मीभावेन गरीयसीम् एवाप्स्यते विरदं सङ्केश्वरजगद्गुरुपीठमिति शङ्कते नश्चेतः। आदित एव प्रदर्शितं विवादोत्साहित्वम् आदिमेनास्य शिष्येण। ग्राम्यजनमात्रानुशीलितः किलायं पन्था विवादो नाम। तद् यदि जगद्गुरुपीठाधिष्ठिता अपि अनुशीलयेयुः एनं महात्मानस्तदा को वा ग्राम्याग्राम्यमहत्तरयोर्विशेषः? अस्ति चात्रानयोः शिष्ययोरिव महाराष्ट्रीयाणामपि किमपि कर्तव्यम्"। इति।

एतावता प्रबन्धेन धर्मपीठ-विषयिणी दृष्टिः अप्पाशास्त्रिणां स्फुटीभवति। धर्मविरुद्धं निर्णयं, शिष्यद्वयकरणं, विवादं च पीठाधिपतीनां निन्दत्यप्पाशास्त्रिणः। सति प्रसङ्गे तत्प्रदेशवासिभिरेव पीठ-व्यवस्था विधेया इत्यपि कथयन्ति वाचस्पतयः। युक्तं चैतत्। अनुशिष्टं हि पीठाम्नाये श्रीशंकराचार्यैः —

"वर्णाश्रमसदाचारा अस्माभिर्ये प्रसाधिताः।
रक्षणीयास्त एवैते स्वे स्वे भागे यथाविधि॥
उक्तलक्षणसंपन्नः स्याच्चेन्मत्-पीठभाक्-भवेत्।
अन्यथारूढपीठोऽपि निग्रहार्हो मनीषिणाम्॥
एक एवाभिषेच्यः स्यादन्ते लक्षणसंयुतः।
तत्तत्पीठे क्रमेणैव न बहुर्युज्यते क्वचित्॥" इति।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

३१. धार्मिकानुशासन-विचारिणी परिषद्। "Religious Parliament"

यथा किल उक्तपूर्वं तथा सङ्केश्वरपीठस्य अधीश्वरभूतयोः द्वयोः शिष्ययोः विवादं समुत्प्रेक्षमाणैः अप्पाशास्त्रिभिः धर्मपीठविषयिणः स्वकीयाः विचाराः सूनृतवादिन्याः सप्तदशे अष्टादशे च अङ्के प्रकटीकृताः। तत्र प्रथमे लेखे धर्मपीठपतेः वैराग्यं, विद्वत्त्वम्, धर्ममात्रप्रणयिता, दयालुत्वं, प्रचारकत्वं चेत्यादि-गुणगणान् उपवर्ण्य द्वितीये धर्मपीठव्यवस्थायाः आदर्शः एकः समर्थितः। अस्मात् च काऽपि नूतना दृष्टिः परिचीयेत पाठकैः इति सः परिच्छेदः अत्र संपूर्ण एव समुद्ध्रियते — "यतश्च नावश्यकं संन्यासिनः किमपि द्रव्यं ततः परित्याज्यमेव द्वाभ्यामप्येताभ्यां सङ्केश्वरमठसंबन्ध्येतदित्येतदेव न्याय्यम्। एवं हि अवसर एव न स्याद् विवादस्येति। अथ कथं वा व्यवतिष्ठेत पीठं यदि परित्यज्येत संपदेषा शिष्याभ्यामेताभ्यामिति चेदत्रोच्यते —

धर्मपीठं हि नामैतत्-सार्वभौमपदमेवान्यादृशम्। धर्मसार्वभौमा ह्येते जगद्गुरुचरणा नामेति। सार्वभौमस्य चेदानीं नियन्त्रिता एवाधिकारा दृश्यन्ते। नियतं हि किमपि प्रातिवार्षिकं वेतनं समादायायमवतिष्ठते। अनुशासनं पुनः सर्वथा प्रजायत्तं भवति। युक्तं चैतदिति नात्र संदेहः। निक्षिप्यतां चात्र दृष्टिः श्रीमज्जगद्गुरुचरणशिष्याभ्यामेताभ्याम्। समालम्ब्यतां चेयं सुसंस्कृता सरणिः अनुशासनविषये। तथा हि। प्रथमस्तावद् उभाभ्याम् अपि एताभ्यां प्रातिवार्षिकं किमपि केवलस्यात्मनो गौरवपुरःसरं प्राणयात्रामात्रनिर्वाहार्थं वेतनमुपादेयम्। तत् च उभयोरपि पञ्चसाहस्रीतो नाभ्यधिकम्। अवशिष्टे तु लोकनियुक्तानामेव विद्वत्तमानां सभ्यानामधिकारो भवतु। यावन्तश्च जगद्गुरुपीठस्य अस्यानुशाने ग्रामास्तावत्सु प्रतिग्राममेकैकः सकलजननियुक्तः प्रतिनिधिरिति। समाहूय प्रतिनिधीन् सर्वांस्तदनुमत्या नियोज्या धार्मिकानुशासनविचारिणी (रिलिजस पार्लमेण्ट) परिषद्। एतयैव चानुष्ठेया मठव्यवस्था सर्वाऽपि। धर्मविचारो वा धर्मसंस्कारो वा सर्वोऽप्यनयैवानुष्ठेयः। जगद्गुरुपीठाधिष्ठितेन पुनः पुरुषेण योगशास्त्राभ्यासादिना क्षपणीयम् आयुरात्मीयम्। स्वाक्षरीकरणीयानि च तत्र तत्रावसरे परिषदानया विहितान्यनुशासनपत्राणि। प्रतिषण्मासं सकृद्विचारणीयम् अनया परिषदा जगद्गुरुमठीयायव्ययादिकं च धार्मिकाणि कृत्यानि चेति नोऽभिप्रायः।" इति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यनेन धर्मपीठ-विषयिणी प्राचीन-वैभव-संरक्षणात्मिका नवीना योजना श्रीमदप्पाशास्त्रिभिः पुरस्कृतेति प्रतीयेत। सङ्केश्वर-पीठं निमित्तीकृत्य सर्वेषामेव धर्मपीठानां विषये एतादृशी व्यवस्था अप्पाशास्त्रिभिः संसूचिता। इतः उत्तरं प्रतिग्रामं वेदशास्त्रपाठशाला स्थापनीया, देवमन्दिराणाम् अनुशासनं विधेयं, निराधाराणाम् आश्रयः दातव्यः महोत्सवादिभिः जनानां धर्मपथे प्रवर्तनं साधनीयम् इत्यादि सुविशदं निरूप्य प्रबन्धान्ते विद्यावाचस्पतयः प्राहुः स्म —

"तदेवं विधेयः सर्वोऽपि पण्डितः संसारः श्रीमद्भिर्जगद्गुरुचरणैः। यदि चैतदिदानीमनुष्ठीयेत तदा स्यादेतदाचरितमनयोः (शिष्ययोः) आदर्शभूतं पीठाधिपतीनाम् अपरेषाम्। अपूर्वं चालौकिकं चैतत्। अभिलष्यामः किल वयं चिरजीवित्वं च गौरवरक्षां च जगद्गुरुपीठस्य। स एव च तीव्रतरोऽभिलाषो मुखरयत्यस्मान्।" इति।

### ३२. विना धर्मं सुदुर्लभमेव राष्ट्रियत्वम्।

परिचितम् एव पाठकानां भारत-धर्म-महामण्डलस्य नाम। अस्य च तानि तानि अधिवेशनानि तत्तेषु क्षेत्रेषु संपद्यन्ते स्म। वाराणस्यां भारत-धर्म-परिषदः अधिवेशने श्रीअप्पाशास्त्रिणः उपस्थिताः आसन् इति निवेदितपूर्वम्। १८२९ तम-शक-वर्षस्य वैशाखमासे महामण्डलस्य अधिवेशनं नासिक-क्षेत्रे संपन्नम्। जानपदमहासभायाः सदस्याः अन्ये च केचित् स्वदेशीयान्दोलनप्रेमिकाः धार्मिकाणां तिरस्कारं चक्रुः। धर्मसभानां च स्वदेशीयान्दोलने अकिञ्चित्करत्वं प्रतिपादयामासुः। तत् एतत् अभिलक्ष्य सूनृतवादिन्याः २९ वर्षीय-वैशाख-वद्य-तृतीयाङ्के प्रोक्तम् अप्पाशास्त्रिभिः—

"राजकीयान्दोलने श्रद्दधानाश्चैते धर्मोन्नतिं तृणाय मन्यन्ते। न जानीमः कियद्वा साधुत्वममीषामेवंविधस्य विचारस्येति। वयं तु धर्म एवास्माकमभ्युदये हेतुरित्येव बाढं विश्वसिमः। कामयामहे च महीयसापि परिश्रमेणोन्नतिमेतस्य। ये ये किलापादितवन्तोऽभ्युदयं देशमात्मीयं, धार्मिकप्रवरा एवैते प्रायेण समभूवन्। यदि च स्यात् किमपि जगति साधनमैक्यस्य तदा तन्नास्त्येव धर्मादन्यदित्येवास्माकं विश्वासः। यत् किलेदानीं काम्यते राष्ट्रियत्वं नाम संघात-बलं भारतवर्षस्यार्वाचीनैस्त-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

देतदपि विना धर्मं सुदुर्लभमेव। 'भवन्तु नाम नाना-विधा भारतवर्षीया देशाः, सन्तु नामैतेषु प्रचारस्तासां तासां भिन्न-भिन्नानां भाषाणाम्, भवन्तु नामैतेषां परस्परविभिन्ना देशाचारास्तथापि यावद् विद्यते सनातनो भारत-धर्मस्तावदेकेनैव सूत्रेण संबद्धाः सर्वेऽपि भारतवर्षीयाः सुहृद एवान्यो-न्येषाम्। एक एव ह्यमीषां धर्म इति। भ्रममात्रमूलकाः पुनर्विचारा एवामीषामैकमत्यं विनिघ्नन्ति। अत एव च मतानामेवंविधानां दूरीकर-णमपेक्ष्यते। तत्रैव चातिमात्रमुपयुक्तं परिषदामेवंविधानामधिवेशनम्।" इति।

एतेन राजकीयान्दोलने धर्मो महान् सहायभूत इति श्रीअप्पा-शास्त्रिणां धारणा व्यक्तीभवति। धर्मसभाभिः स्वातन्त्र्यान्दोलनविचारः अपि तावत् कर्तव्यः एव इति उद्देश्यम् एतेषां विचाराणां प्रकटं विज्ञायते।

## ३३. अवश्यमनुष्ठेया महोत्सवाः।

सूनृतवादिन्याः चतुर्विंशे अङ्के शिवराज-महोत्सवम् अधिकृत्य प्रधानलेखः प्रकाशितः। तस्य अन्तिमः परिच्छेदः महोत्सव-विषयकं श्रीमदप्पाशास्त्रिणां विचारं विस्पष्टयति। वीक्ष्यतां तावत् अयम् —

"तदेवं शक्येतैवावबोद्धुं मतिमद्भिः कस्यायं महोत्सव इति। नूनं भारतवर्षीयाणां स्वातन्त्र्यस्यैवायं महोत्सवः। भारतवर्षीयाणां निरतिश-यस्य सौख्यस्य निःसीमितस्य चानन्दस्यायं महोत्सवः। महीयानयमाचार्यो विविधदुःखविह्वलानां भारतीयानाम्। महदेतदाश्वासस्थानमेतेषाम्। अवश्यमङ्कुरग्राहि किल महोत्साहबीजमिदं भारतीयानाम्। महोत्सवा ह्येवंविधाः पुरस्तादुपस्थापिता अपाकुर्वन्ति विस्मृतिपटलं लोकानाम्। प्रबोधयन्ति कर्तव्यम्। सूचयन्ति न्याय्यमध्वानम्। लम्भयन्ति च पारमा-र्थिकं सौख्यमिति। अतश्चावश्यमनुष्ठेया महोत्सवा एवंविधा इति शिवम्।" इति।

प्रतिज्ञातं किल पूर्वं सूनृतवादिन्याः उद्देशे संस्कृतपण्डितानां राज-कीय-विषय-बोधनम्। तत् एतादृशैः प्रबन्धैः सुष्ठु संपादितम् अप्पा-शास्त्रिभिः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ३४. प्रद्वेषणं नितान्तमेव अन्याय्यम् ।

स्वातन्त्र्यान्दोलने कृतपदानां भूयसाम् एव मनःसु धर्मविषये विरोधः एत्र आसीत् । ते हि मेनिरे यत्, भारतवर्षे विविधाः धर्माः सन्ति, अत एव च धर्मं परित्यज्य एव राष्ट्रियम् ऐक्यं सुकरं, राजकीयान्दोलनं च सुफलं संपद्येत इति । एतत् च विचारयितुम् अप्पाशास्त्रिभिः 'राजकीयान्दोलनं च धर्मश्च इत्याख्यः प्रधानलेखः सूनृतवादिन्याः ६-६-१९०७ दिवसीये अङ्के लिखितः । तत्रत्याः अन्तिमाः पङ्क्तयः यथा —

"यथा हिन्दुमाहम्मदैरेवं हिन्दुष्वपि विभिन्न-धर्मपथानुयायिभिर्नात्र विरोधिभिर्भवितव्यम् । तत एव च यथा वङ्गेषु राजकीयान्दोलनकारिणो हिन्दव इति माहम्मदैरेतेषु प्रद्वेषाविष्करणमन्याय्यमेवं पञ्चाम्बुष्वपि राजकीयान्दोलनकारिणः प्रायेणार्यसमाजीया इत्यतः सनातनधर्मीयैरमीषां प्रद्वेषणं नितान्तमेवान्याय्यम् । न चापि प्रद्वेषोऽयं धर्ममनुसरति । प्रत्युताधर्ममेव । आत्मविनाशमूलत्वादेतस्य । अवश्यमनुपालनीयो धर्मः स्वीयः । न चातः स्तोकमपि प्रभ्रष्टैर्भवितव्यम् । किन्तु समाने श्रेयसि प्रयतमानाः सहभूता अपि विधर्मीया इत्येव न खलु प्रद्वेष्टव्याः केचिदपि । प्रत्युतासाधारणस्य स्नेहस्यैवामी आस्पदीकरणीयाः । एतावता यदुच्यते कैश्चित् कूपमण्डूकैर्विरुध्यते राजकीयान्दोलनेनास्मदीयो धर्म इति तदेतन्महीयस एवाज्ञानस्य विलसितमिति ब्रूमः । नास्ति हि राजकीयान्दोलनेन समं धर्मस्य स्तोकोऽपि विरोध इति । " इति ।

एतेन स्वातन्त्र्यान्दोलन-विषयिणी विशाल-दृष्टिः अप्पाशास्त्रिणां विस्पष्टा भवति ।

## ३५. भारते सिंहले ब्रह्मदेशे पाश्चात्त्येषु च प्रदेशेषु ।

सूनृतवादिन्याः वैभवम् आलोक्य प्रमुदित-स्वान्ताः भूयांसः एव ग्राहकत्वं स्वीचक्रुः । तथैव पुनः प्रचार-क्षेत्रम् अपि एतस्याः प्रवृद्धम् । विद्योदयस्य १९०७ वर्षीये जुलै-मासस्य अङ्के दृश्यते —

"भारते सिंहले ब्रह्मदेशे पाश्चात्येषु च प्रदेशेषु सविशेषं प्रचरन्ती सूनृतवादिनी साप्ताहिकी संस्कृतपत्रिका । अस्यां च धार्मिकान् सामाजिकान् राजकीयांश्च विषयानधिकृत्य विरचिताः प्रबन्धाः प्रकाश्यन्ते । भूयांसः खल्विदानीं के वयम् ? कुत्र वा वर्तामहे ? कुत्र च गन्तव्यम् अस्माभिः?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

किमस्माकमनुष्ठेयम्? किमस्माकम् आवश्यकम् इत्यादि नावबुध्यन्ते संस्कृत-मात्राभिज्ञाः। अतस्तदेतत् तानवबोधयितुं यावच्छक्यं शुश्रूषयितुं सनातनं भारतधर्मं पत्रिकेयं प्रचार्यते। आदर्शमस्या अवेक्षितुमभिलष्यद्भिरर्धानक-मूल्यं शुल्कपत्रं प्रेर्यम्। मूल्यमस्याः सह-प्रापण-व्ययेन रूप्यक-त्रितयम्। अस्याश्च भूयांस्यप्रार्थितोऽनतानि प्रशंसा-पत्राणि पण्डित-प्रवराणाम्।" इति।

एतेन सौष्ठवं सूनृतवादिन्याः समुद्द्योत्यते। यथापेक्षं ततोऽपि वा सम-धिकतरं सूनृतवादिन्याः प्रचारम् अभिलक्ष्य श्रीमदप्पाशास्त्रिणाम् उत्सा-हस्य महापूरः अवर्धत। ग्राहकाः अपि विद्यावाचस्पतीन् प्रार्थयामासुः —

**३६. "बृहत्तरीक्रियतामाकार एतस्याः।" —**

इति। सप्रमोदोत्साहम् एव स्वीकृतमेतत् अप्पाशास्त्रिभिः। एतद्-विषये खलु निवेदयन्ति स्म अप्पाशास्त्रिणः — (सू. वा. १।३४)

"संप्रति किल संसूच्यते कैश्चित् सूनृतवादिन्याः प्रणयिभिर्बृहत्तरी-क्रियतामाकार एतस्या इति। संतुष्यामः किल वयं सूनृतवादिनीगतेना-मीषामेवंविधेन प्रेम्णा। यदि च न स्यात् प्रतिकूलं दैवमेतस्यास्तदाऽऽगामिनो वत्सरात् प्रभृत्यवश्यमाकारमेतस्या अभिवर्धयिष्यामः। यथा किल इदानीम् अनुगृह्यत एवमेव चेदितः परमप्यनुगृह्येत तदाऽवश्यं शक्येताका-रोऽस्या अभिवर्धयितुम्। न किल संभावित प्रागस्माभिः कालेनैतावता भविष्यत्येतावान् प्रचार एतस्या इति। ग्राहका एवास्या न यथाभिलाषं संपद्येरन्नित्येव हि समवधारितं कैश्चित्। किन्तु संप्रति संपन्ना एवाभि-लषिता ग्राहका एतस्याः। यदि चेदानीमेकैकोऽस्याः प्रणयी नव्यमेकैकं प्रणयिनं संपादयेत्तदा नूनमितोऽप्यायतां च परिणद्धां चैनामचिरादेव प्रकाशयिष्यामः। तत् त्वर्यतां कालातिपातमसहमानैः अस्याः प्रणयिभिरिति प्रार्थ्यतेऽस्माभिः।" इति।

यथा खलु परिपूर्णोऽपि महासागरः परिपूर्णं चन्द्रमसम् अभिलक्ष्य अतिवेलं वर्धते, तथा विद्यावाचस्पतीनां महोत्साहः पाठक-धौरेयाणां कामनाम् एनां निभाल्य समृद्धः बभूव। किन्तु हा धिक्, तावदेव संपन्नम् —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

३७. **ग्रन्थि-ज्वर-हतकेन कवलीक्रियमाणं वाई-क्षेत्रम् ।**

सूनृतवादिन्याः वर्धनस्य सूचनालेखः सूनृतवादिन्याः ३४ तमे १५-८-१९०७ दिवसीये अङ्के प्रकाशितः। तत्रैव 'किमप्यावेदनम्' प्रकाशितम् अप्पाशास्त्रिभिः। तत्र उक्तम् एतैः —

"संप्रत्यपि जिघत्सतीव व्यादाय वदनं वाईक्षेत्रे परिभ्रमन् करालकालसोदरो ग्रन्थि-ज्वरः पौरानित्यस्ति प्रकाशने विलम्बस्य संभावनेत्येतदप्यावेद्यते प्रिय-पाठक-महाभागेषु।" इति।

३५ तमे अङ्के च विज्ञापन-लेखे लिखितम् —

"निवेदितपूर्वमेवास्माभिः श्रीमत्सु यादृशीं किलापन्नं दशां भुवनभीषणेन गरीयसा ग्रन्थि-ज्वर-हतकेन कवलीक्रियमाणं वाईक्षेत्रमिति। यत्सत्यं समवेक्षमाणो निर्घृणतरं निरर्गलं च चेष्टितमस्य ज्वर-हतकस्य '**अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्।**' एतेन किल स्वैरमेव प्रजासु संचरता प्रलयसमयेनेव समाक्रम्यमाणं सर्वथा 'शून्यमिदानीं जीर्णारण्यप्रायं वाईक्षेत्रम्।" इति।

वाईनिवासिनां ग्रन्थिज्वरेण व्यग्रतयैव सूनृतवादिन्याः प्रकाशनं मासत्रयं यावत् प्रतिबद्धम्। परिवर्तनीयं चेदानीं प्रकाशनस्थानमिति यावत् अयं विचारः स्पृशति अन्तरङ्गं श्रीअप्पाशास्त्रिणां तावदेव —

३८. **केषांचित् वाई-वासि-खलानां दौर्जन्यम् —**

प्रकटीबभूव। श्रीमदप्पाशास्त्रिणः हि कस्मिंश्चित् अभियोगावर्ते निपतिताः। सुष्ठु खलूक्तं 'संपत् संपदमनुबध्नाति विपद् विपदम्' इति। ग्रन्थि-ज्वर-संकटम् उत्तीर्य सूनृतवादिन्याः प्रकाशने यावत् दत्तचित्ताः भवन्ति एते तावत् आपतितः अयम् अभियोगः।

यदा किल अप्पाशास्त्रिणः वाईक्षेत्रे समागताः तदा तस्यां विद्वद्धुर्याणां द्वन्द्वम् आसीत्। तत्र एके पं. **त्र्यम्बकशास्त्रिलेलेमहाभागाः** अपरे च पं. **नारायणशास्त्रि मराठे**महोदयाः। एतयोः द्वयोः अपि पण्डितवर्ययोः एकैका पाठशाला अवर्तत। तत्र पं. **लेले-शास्त्रिणः** व्याकरणं पाठयन्ति स्म। पं. **मराठे-शास्त्रिणः** च न्यायं च वेदान्तं च अध्यापयन्ति स्म। यदा वाईग्रामे मध्यवीथ्याम् अप्पाशास्त्रिभिः निवासः कृतः तदा तेषां गृहेऽपि पञ्चषाः छात्राः साहित्यं पठितुम् आगच्छन्ति स्म। तेषु एव

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्यतमः **श्रीदिगम्बरशर्मा गोसावी**-महाभागः। अयं च अप्पाशास्त्रिणां सकाशात् शिशुपालवधं, दशकुमारचरितं, मुद्राराक्षसं, शाकुन्तलं च इत्यादि समधीतवान्। अस्मिन् च छात्रे श्रीमदप्पाशास्त्रिणां समधिकम् आसीत् वात्सल्यम्। अयमेव शिशुप्रायः छात्रः श्रीमदप्पाशास्त्रिणां व्यसनस्य निमित्तम् इव अभवत्। तत्रत्यैः च अपरैः खलैः छिद्रम् एतत् विशालीकृतं, तत् च अभियोगरूपे पर्यवसितम्। तत् इत्थम् —

कोल्हापुरीयं वेदोक्तप्रकरणं तावत् परिचितमेव पाठकैः। **ब्रह्मनाळकरो**पनामकैः जगद्गुरुशिष्यस्वामिभिः कोल्हापुरनरेशाय वेदाधिकारं दत्त्वा कोल्हापुरमण्डलान्तर्गतं धर्मपीठवैभवं स्वायत्तीकृतम्। किन्तु संतप्तैः श्रीअप्पाशास्त्रिभिः भृशं निर्भर्त्सिताः शिष्यस्वामिनः। अत एव **धोण्डशर्मा** नाम **ब्रह्मनाळकर**स्वामिनां पुत्रः किमपि कूटकार्यम् अनुष्ठितवान्। स चायं वेदोक्तविषये संमतिलेखम् एकं विरचय्य वाईक्षेत्रीयाणां तत्र स्वाक्षरं ग्रहीतुं मठीयं कंचन भृत्यं वाईग्रामं प्रेषयामास। तदनुसारं वाईक्षेत्रे समागतः अयं भृत्यः स्वाभीष्टं साधयितुं समुपचक्रमे। तत्रत्याः पुनः केचित् खल-प्रवृत्तयः तस्य अनुकूलाः अभवन्। किन्तु तैः स्वाक्षरीकरणं न अनुमतम्। वाईक्षेत्रस्थत्वेन स्वाक्षरीकरणाय पुरस्कृतः एतैः श्रीअप्पाशास्त्रिणाम् एव शिष्यः पूर्वनिर्दिष्टः दिगम्बरशर्मा। आश्वासितः अयं मठीयभृत्येन 'स्वाक्षरे कृते पारितोषिकं किमपि प्रदीयेत' इति। धनलोभेन पुनः बालबुद्धिना **दिगम्बरशर्म**णा स्वीकृत्य एतत् कृता तत्र स्वाक्षरी। तस्मिन् च लेखे अप्पाशास्त्रिणां निन्दा आसीत्। अथ मठीयभृत्यः अयं स्वाक्षरीयुक्तं लेखम् आदाय प्रतस्थे कोल्हापुरं प्रदत्तवान् **धोण्डशर्म**णे तम् इमम्। **धोण्ड**महोदयेन च कोल्हापुरीये एव कस्मिंश्चित् वृत्तपत्रे 'वाईकराणां वेदोक्तविषये संमतिः अस्ति।' इति विज्ञापनं कृत्वा प्रकाशितः अयं लेखः। दृष्ट्वा च इमं लेखं पठित्वा च तत्रत्यं निन्दाजातं **धोण्डशर्म**णि अभियोगः कृतः अप्पाशास्त्रिभिः। छात्रस्य तु **दिगम्बरशर्म**णः मूढबुद्धित्वात् एव नासौ दोषवान् इति गृहीतम् एव एतैः। अभियोगे अस्मिन् बहवः एव वाईक्षेत्रीयाः **धोण्डशर्म**णः अनुकूलाः अप्पाशास्त्रिणां च प्रतिकूलाः आसन्। वाय्युपमण्डलाध्यक्षः (मामलेदार) अपि अत्र कर्मणि न्यायापेतः सन् श्रीमदप्पाशास्त्रिणां प्रतिकूलः एव आसीत्। प्रवृत्ते च अभियोगे निरुपायतया **धोण्डशर्म**णा स्वीकृतः स्वदोषः। अयं पुनः क्षमाम् एव याचितवान्। तदा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रुद्धैः अपि अप्पाशास्त्रिभिः दयालुतया अभियोगः प्रत्यावर्तितः। अहो महतां कठोरत्वं च कोमलत्वं च! उक्तं हि —

'वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति॥' इति।

अस्मात् च अभियोगात्मकात् प्रतिबन्धकात् न पारितं सूनृतवादिन्याः चन्द्रिकायाः च प्रकाशनम् अप्पाशास्त्रिभिः। ग्रन्थिज्वरपीडिते खल-भूयिष्ठे वाईक्षेत्रे च तत् एतत् असुकरम् इति —

३९. पुनरपि कोल्हापुरमेव —

समाश्रितम् एतैः। मुख्यतः ग्रन्थिज्वरभीत्या एव वाईक्षेत्रं परित्यक्तम् एतैः। किन्तु तत्रापि अयं नृत्यन् एव आसीत्। उक्तं च अप्पाशास्त्रिभिः — (सू. वा. १।३५)

"अतश्च यदेव परिहर्तुं परित्यक्तं वाईक्षेत्रमस्माभिस्तदेव प्राप्ताः स्मो दुर्विषहं दुःखजालं कोल्हापुरेऽपीत्यहो प्रभावो नियतेः। प्रियपाठकाः! नास्ति खल्विदानीं प्रायेण प्रादेशमात्रोऽपि प्रदेशः कोल्हापुरे यत्र न हाहाकारो नोद्वेगो न विलापो, न वा विषादः परिस्फुरति। सर्वथा स्थाने खल्वभिहितं ग्रन्थिज्वरप्रभावमवेक्षमाणेन केनापि —

"य एवासीत् प्रातः प्रमदभरमग्नः सखिजनैः।
वितन्वन्नालापं निरतिशयसौख्यः किल जनः॥
स एवायं सायं पितृपतिपुरीमेति सहसा।
दयाशून्यग्रन्थिज्वरदहनलीढः क्षितितले॥" इति।

कोल्हापुरे च समागत्य श्रीमतां पन्तामात्यबावडेकराणाम् एव प्रासादे पत्रिका-कार्यालयः व्यवस्थापितः एतैः। समर्थमुद्रणालये च वेङ्कटेश्वरमुद्रणालये च संकल्पितं मुद्रणम्। मुद्रणीयाः पत्रग्रन्थयः पुनः वाईक्षेत्रे एव अवशिष्टाः आसन्। न पुनः इदानीं ग्रन्थिज्वर-पीडा-समेते वाईक्षेत्रे गमनं शक्यम् आसीत्। अत एव यथोपलब्धम् अन्याः एव पत्रग्रन्थयः क्रीताः अप्पाशास्त्रिभिः मनसि कृतं च प्रकाशनं पत्रिकायाः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**४०. प्राणाभ्यधिकैः सुहृद्भिश्चिरकालिको विप्रयोगः ।**

किन्तु हा धिक् । अद्यापि विपदा अप्पाशास्त्रिविषयकः प्रणयः मनाक् अपि न न्यूनीकृतः । अपि तु संवर्धितम् एतेषु विपत्परंपरायाः उत्कृष्टं प्रेम । ग्रन्थिज्वरेण हि अभिभूता अप्पाशास्त्रिणां द्वितीय-भार्या आत्मजेन सह इहलोकं विद्यावाचस्पतिं वृद्धां च श्रीमतीं श्वश्रूदेवीं परित्यज्य दिवं प्रतस्थे । विलपन्ति स्म च वाचस्पतयः — (सू. वा. १ । ३५)

" कोल्हापुरमुपस्थितानां ह्यस्माकमुपस्थितः प्राणाभ्यधिकैः सुहृद्भिश्चिरकालिको विप्रयोगः । येषां किल परलोकप्रयाणेन त्रिकला इवाङ्गेन संवृत्ताः स्मः । " इति ।

एतदपि प्रधानं निदानं पत्रिकायाः प्रचार-स्थगनस्य । कर्णे क्रियन्तां श्रीअप्पाशास्त्रिणाम् एव वर्णाः — (सू. वा. १ । ३५)

" इत्थंविधां च विपदमनुभवतः कस्य वा पुरुषस्य स्वास्थ्यं स्थिरपदत्वमुपयातु ? अस्वस्थे च मनसि कुतः प्रस्फुरणं वाचो निःस्यन्दानाम् ? विना च वाङ्निःस्यन्द-परिस्फुरणं कथं नाम प्रकाश्यन्तां मासिकपत्रिकादीनि ? तत एव च विलम्बम् इमं मर्षयेयुर्दयारसपेशलान्तःकरणाः प्रियपाठकमहाभागा इत्यस्ति नो बलीयसी प्रत्याशा । न खल्वितोऽपि वृत्तमात्मीयमुपवर्ण्य प्रियपाठक-महोदयानां कुसुमपेलवानि चेतांसि क्लेशयितुमिच्छामः । " इति ।

विज्ञायेत खलु अनेन प्रघट्टेन श्रीमदप्पाशास्त्रिणां दाक्षिण्यं च सहानुभूतिश्च विनयश्चेति । निवेदितपूर्वम् अप्पाशास्त्रिभिः एव प्रथमपत्न्याः परलोकप्रयाणावसरे 'भार्यैव हि गुणवती प्रधानमवलम्बनं सांसारिकाणां पुरुषाणां, विशेषतश्च मादृशानां दरिद्रधुर्याणाम् ' इति । तदानीं तु सांपत्तिकी एव दुरवस्था अविद्यत । इदानीं पुनः पितृवैधुर्यं, दारिद्र्यं, व्याधिकल्लोलः इत्यादयः नैकाः विपत्तयः आसन् । एवम् अपि अनुकूलतमा गृहलक्ष्मीः पुरुषस्य सर्वदुःखहरा भवति । तस्याः एतस्याः परलोकप्रयाणेन यत् दुःखं समनुभूतं स्यात् अप्पाशास्त्रिभिः, स्वयमेव विचार्यतां तत् इदं पाठकैः ।

श्रुत्वा पुनः इमं वृत्तान्तं मित्रगोष्ठ्याम् अपि (खं. ४ । ६) विलापः प्रादुरभूत् —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

" संस्कृतचन्द्रिकायाश्चरमजीवातुभूतस्य सूनृतवादिन्याः संपादकस्य अप्रतिभ-लेखकस्य संस्कृतसमाजेषु सादरमुद्गीयमान-नामधेयस्य श्रीमतोऽप्पाशर्म-विद्यावाचस्पति-महाशयस्य सहधर्मिणी च पुत्रश्च बन्धवश्च केचन परं लोकमुपागच्छन्निति जानन्तश्च ज्ञापयन्तश्च वयं प्रकामं विषीदामः । " इति ।

## ४१. अतः परं च कोल्हापुरादेव ।

सूनृतवादिन्याः ३४ तमोऽङ्कः वाईक्षेत्रे १८२९ शकवर्षीयश्रावण-सुदिषष्ठ्यां (१५-८-१९०७) प्रकाशम् उपयातः । तदूर्ध्वं मास-त्रयं यावत् पूर्व-निर्दिष्ट-प्रतिबन्धवशात् सूनृतवादिन्याः च चन्द्रिकायाः च प्रकाशनं स्थगितम् आसीत् । यद्यपि नैवविधाभिः प्राणस्पर्शिभिः अपि विपज्जालैः संपीडिताः अप्पाशास्त्रिण तथापि पत्रिका-प्रकाशन-प्रीतिः प्रियतमा लेखनी च नैतान् त्यक्तुं प्राभवत् । प्रशान्तप्राये च ग्रन्थिज्वरे '**सन्तोष एव पुरुषस्य परं निधानम्**' इत्येव समाधाय पुनरपि पत्रिकासंपादने मनः कृतम् एतैः । पूर्वोक्तप्रकारेण समर्थ-वेङ्कटेश्वर-मुद्रणालययोः संमुद्रणव्यवस्थां विधाय अप्पाशास्त्रिभिः सूनृतवादिन्याः ३५ तमोऽङ्कः २९ वर्षीय-कार्तिक-सुदि-नवम्यां (१४-११-१९०७) प्रकाशितः । ततः परं च प्रथम-खण्ड-समाप्ति यावत् निर्विघ्नप्रायं प्रकाशनम् अभवत् सूनृतवादिन्याः । उक्तं किल श्रीअप्पाशास्त्रिभिः —

" परिवर्तितं खल्विदानीं सूनृतवादिन्याः प्रकाशनस्थानमस्माभिः । अतः परं चेयं कोल्हापुरादेव नियतकालं प्रकाश्येत । भूयांसमेव समयं न प्रकाशिता सूनृतवादिनीति प्रकाशितपूर्वसङ्ख्यातः परामेव सङ्ख्यामारभ्य सूनृतवादिनी प्रकाश्यते । यदा प्रकाश्येतास्या पञ्चाशी सङ्ख्या तदैव परिसमाप्येत प्रथमः खण्ड एतस्याः । ततः परमेव च नव्यं खण्डमुपक्रंस्यामहे । " इति ।

## ४२. प्राचीन-भारत-मासिक-संकल्पः ।

सूनृतवादिन्याः प्रथमखण्डीयपञ्चत्रिंशत्तमाङ्कात् आरभ्य, अर्थात्, कोल्हापुरागमनात् प्रभृति पूर्वोक्तं 'भारती-भवनम्' इति विज्ञापनं संक्षिप्ततया प्राकाशत । मुखपृष्ठे 'प्राचीन भारत' इति संज्ञकम् अन्यत् एव महाराष्ट्रभाषामयं विज्ञापनम् अप्पाशास्त्रिभिः प्रत्यङ्कं प्रकाशयितुम् आरब्धम् । तत् एतत् —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

" प्राचीन भारत

ह्या नांवाचें डेमी अष्टपत्री आकाराचें ४८ पृष्ठांचें मासिक-पुस्तक येत्या चैत्र-शुद्ध-प्रतिपदेपासून सुरू करण्याचा आमचा विचार आहे. ह्यांत भारतवर्षांतील प्राचीन राजकीय, सामाजिक व मुख्यत्वेंकरून धार्मिक विषयांची माहिती सरळ व सुबोध अशा मराठी भाषेंत देणार आहों. शिवाय सांख्यादि दर्शनांचें मराठी विवरण, स्मृतींचे व उपनिषदांचे सरळ अनुवाद, वैदिक व इतर संस्कृत वाङ्मयावरून सुचणारे विचार आणि धर्म-शास्त्र-ग्रंथांचीं, उपयुक्त माहितीच्या भरपूर टीपांनीं युक्त अशीं भाषांतरें हीं यथावकाश प्रसिद्ध करण्याचा आमचा उद्देश आहे. या उपयुक्त कार्यास महाराष्ट्रभाषाभिज्ञ रसिक अवश्य आश्रय देतील अशी आशा आहे. पुस्तकाची वार्षिक वर्गणी टपालहांशिलासह आगाऊ तीन रुपयेंच ठेविली आहे. पत्रव्यवहार 'म्यानेजर, संस्कृत चंद्रिका, कोल्हापूर सिटी ' ह्या पत्त्यावर करावा " इति ।

अस्य च विज्ञापनस्य सामान्यतः तात्पर्यं यथा —

" 'प्राचीन भारत " इति संज्ञकं डेमी-अष्टपत्रात्मकं ४८ पृष्ठ-परिमितं (महाराष्ट्रभाषामयं) मासिकपत्रम् आगामि-चैत्रशुक्लप्रतिपदातः प्रचारयितुम् इच्छामः। अत्र भारतवर्षीय-प्राचीन-राजकीय-सामाजिक-धार्मिकादि-विषयाणां परिचयः सरलसुबोधया महाराष्ट्रभाषया प्रकाश्येत। साङ्ख्यादि-दर्शनानां स्मृतीनाम् उपनिषदां च सविवरणम् अनुवादाः, वेदादि-संस्कृत-वाङ्मयाभ्यासवशात् प्रादुर्भूताः विचाराः धर्म-शास्त्रीय-ग्रन्थानां सुविपुलटिप्पनीसनाथाः अनुवादाः च यथावसरं प्रकाशयितुं वयं कामयामहे। समुपयुक्ततमं कर्म एतत् महाराष्ट्रभाषाभिज्ञाः रसिकाः सनाथयेरन् इति दृढम् आशास्महे। मासिक-पुस्तकस्य प्रापण-व्यय-सहितं मूल्यं पुनः अग्रिमप्रदेयं रूप्यकत्रयमेव । पत्रव्यवहारः 'संस्कृत-चन्द्रिकायाः व्यवस्थापकः, कोल्हापुरम्, इत्यत्र विधेयः। " इति ।

पाठकमहाभागाः । यैः विज्ञायते संस्कृतभाषा तेषां कृते **संस्कृत-चन्द्रिका** इति मासिकी, **सूनृतवादिनी** इति साप्ताहिकी चेति पत्रिका-द्वितयं संचालितं श्रीअप्पाशास्त्रिभिः । संस्कृतभाषान्तर्गतं पुनः वैभवं संस्कृतज्ञानां कृते सुबोधं सत् अपि, ये न जानन्ति भाषाम् एनां ते एते

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha.

केवल-महाराष्ट्र-भाषाभिज्ञाः कथं कारं जानीयुः ? अतो महाराष्ट्र-भाषाभिज्ञानां कृते निर्दिष्टपूर्वं मासिक-पत्र-प्रचारणम् एतैः संकल्पितम्। एतेन प्रतिभायाः गारुत्मतः वेगः इव महोत्साह-संपन्नत्वं सततोद्यम-शीलत्वम् अपि श्रीअप्पाशास्त्रिणां स्पष्टीभवति। किन्तु यथा विज्ञापितपूर्वं 'कथा-कल्पद्रुमः' च 'समस्यापूर्तिखण्डं' चेति पत्रिका-द्वितयं मनसि एव केवलं विलीनम् अभवत्, तथैव **प्राचीनभारत**-संकल्पः अपि आत्मनि एव जीर्णः बभूव।

**४३. क्रीतं मुद्रायन्त्रमस्माभिः।**

पत्रिकाणां प्रकाशने खलु मुद्रण-सौकर्यं प्रथमं निदानम्। स्वाधीनं हि मुद्रणकार्यं यथाकालम् एव प्रकाशयेत् पत्रिकाः इति। इत्थं विचिन्तयद्भिः एव अप्पाशास्त्रिभिः सूनृतवादिन्याः प्रथम-खण्डीये चतुस्त्रिंशे अङ्के (१५–८–१९०७) लिखितम् आसीत् — 'सूनृतवादिन्याश्चन्द्रिकायाश्च कृते कामपि सुव्यवस्थामास्थातुमिच्छन्तोऽपि कालमेतावन्तं निष्फलप्रयासाः समभूम। तथाप्यचिरादेवैनामास्थास्यामो येन प्रमोदेरन् प्रियपाठकमहाभागाः।" इति। सेयं सुव्यवस्था नाम मुद्रणालयस्य संस्थापना एव। एतदपि निवेदितम् अप्पाशास्त्रिभिः सूनृतवादिन्याः ३५ तमेऽङ्के (१४–११–१९०७) —

"अभिलष्यते किलास्माभिरचिरादेव स्वीय एव मुद्रायन्त्रे प्रकाशनं सूनृतवादिन्याः। तत एव च क्रीतं मुद्रायन्त्रमस्माभिः। किन्तु कुतोऽपि दैवकृतात्प्रतिबन्धकाद्विलम्बते सोऽयं मनोरथोऽस्माकम्। अतः परमपि साधयिष्यामः स्वीयमभिलषितं यदि नावहेत् प्रातिकूल्यं नियतिः। प्रतिष्ठापिते च स्वीये मुद्रायन्त्रे सूनृतवादिनीमवश्यं बृहत्तरीकरिष्यामः।" इति।

**४४. मोहमयी-विभागाधिपतेः पत्रिका।**

सूनृतवादिन्याः १।३७ अङ्के (२८–११–१९०७) मुम्बई-प्रान्तीय-राज्यप्रमुखस्य क्लार्क-महाभागस्य काऽपि पत्रिका संस्कृतेन अनूद्य प्रकाशिता अप्पाशास्त्रिभिः। तदानीं किल महाराष्ट्रेषु ग्रन्थिज्वरस्य प्रलय-कालसहोदरं भीषणं ताण्डवं प्राचलत्। अत एव ग्रन्थिज्वर-प्रतिबन्धकोपायानां लसीका-वेधादीनां परिचय-प्रदानार्थं तत्र च वृत्तपत्र-संपादकानां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साहाय्य-प्रार्थनार्थं च मुम्बई-विभागाध्यक्षेण पत्रिका इयं पत्रिकासंपादकेभ्यः प्रेषिता। अप्पाशास्त्रिभिः च तस्याः संस्कृतानुवादः सूनृतवादिन्यां प्रकाशितः। संक्षेपतः सेयम् एषा पत्रिका —

"अतीते किल सप्ताहे महाबळेश्वरवर्तिनो राजकीय-कार्यालयात् समागता सेयमस्मत्सविधे (पत्रिका)। अस्याश्चायं सामान्यतोऽनुवादः —

१९०७ वर्षे राजकीय-मन्दिरम्। महाबळेश्वर
नोव्हेम्बरीये षष्ठे दिवसे।

सप्ततार-मण्डलान्तःपातिनि वाई-क्षेत्रे निवसति —
सूनृतवादिन्याः संपादके —

यत् किलानुभूयन्ते ग्रान्थिकसंनिपातजन्याः क्लेशा भारतवर्षीयैस्तत्र प्रकटीकृतैव नातिपूर्वं सपरिव्यथं सहवेदना श्रीमता सार्वभौमेन। यच्चामयेनामुना प्राणैर्वियुज्यमानैर्मनुजैर्दुःखाब्धौ निपतन्ति संख्यातिगानि भारतवर्षीयकुटुम्बकानि तेनापि नितान्तमेव दूयन्त इङ्ग्लण्डीयाः सर्वेऽपि। अवश्यं सप्रतीकारोऽयं प्राणपरिक्षयः। शक्याश्च परिरक्षितुं प्राणाः परःसहस्राणां पुरुषाणाम्। किन्त्वनुशास्तृभिः स्वयं प्रयुक्ता अभ्युपाया विना जानपदसाहाय्यं नालं भवेयुः। अतश्चाविशिष्टेषु मनुजेषु प्रचरतां संवादपत्रिकाणां संपादकेषु समापतति गरीयान् भारः। × × ×

एषा किल मदीया भवत्सु विज्ञप्तिर्यत् प्रचार्यतां पुरानिर्दिष्टा प्रवृत्तिः प्रजासु श्रीमद्भिः। आधीयतां च सविशेषं प्रयत्य क्लेशेभ्यश्च निधनतश्चैताः परिरक्ष्य मे साहाय्यम्। न चापि शक्यमितोऽप्यधिके शोभने कर्मणि संवादपत्रसंपादकानां गौरवमुपयोक्तुमिति।" इति।

अस्मिन् च पत्रके ग्रन्थिज्वरशान्तये प्रयोज्यविषयः अपि स्वच्छतालसीका-वेधादिः परिचायितः। अप्पाशास्त्रिणां पत्रपाण्डित्यकीर्तिः शासनेनापि संमता इति प्रतीयते। अस्मात् च अङ्कात् प्रभृति श्रीमदप्पाशास्त्रिभिः ग्रन्थिज्वरम् अधिकृत्य एव प्रधान-लेख-माला प्रकाशयितुम् उपक्रान्ता।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**४५. अवश्यमुपकारको ग्रन्थि-ज्वर-लसीका-वेधः ।**

ग्रन्थिज्वरम् अधिकृत्य षट्प्रबन्धाः विलिखिताः अप्पाशास्त्रिभिः । तेषु लेखेषु आयुर्वेद-पद्धत्या संक्षेपतः व्याधि-निरासोपायः, शुद्धवाताावरणम्, लसीका-वेधस्य आयुर्वेद-संमतत्वम्, लसीकया विद्धगात्राणाम् अपि मरणे निदानानि, लसीकावेधस्य च आवश्यकत्वम् इत्यादि सुष्ठु निरूपितम् । दृश्यताम् अत्रत्यः कियान् अपि भागः प्रिय-पाठक-महोदयैः —

"सू. वा. १ । ३७. (२८–११–१९०७) लेखाङ्कः १ —

'यत् किलेदानीमुदीर्यतेऽर्वाचीनैर्निवासपरित्याग एव ग्रन्थिज्वरे प्रधानः प्रतीकार इति, तदेतदपि प्रतिपादितं प्राचीनतमेन भगवताऽऽत्रेयेण '**हितं जनपदानां च शिवानामुपसेवनम्**' इत्यभिदधानेन । यदेतद् वाय्वादीनां वैगुण्यं तत्र खल्वधर्म एवैको हेतुरित्यप्यभिहितं तेनैव 'सर्वेषामप्यग्निवेश ! वाय्वादीनां यद् वैगुण्यमुत्पद्यते तस्य मूलमधर्मः' इति ।

सू. वा. १ । ३८. (५–१२–१९०७) लेखाङ्कः २ —

'मुनयश्चाधर्ममेवंविधामयानां बीजतया चक्षाणाः 'संक्षेपतः क्रियायोगो निदान-परिवर्जनम्' इति च वदन्तो धर्मस्यैव ग्रन्थिज्वरादि-जनपदध्वंसनकरामयापनेतृत्वमभिव्यञ्जयन्ति । अतस्तावत् स्वधर्मानुष्ठान एव सविशेषं प्रवर्तनीयाः प्रजाः श्रीमता मोहमयी-विभागाध्यक्षेणेति प्रार्थ्यतेऽस्माभिः ।

सू. वा. १।३९ (१२–१२–१९०७) लेखाङ्कः ३ —

'यत् पुनर्मूषकाणां मानुषाणां च शरीरं प्रविशतस्तथाविधप्रवेश-प्राग्भाविनो ग्रन्थिज्वरस्य निदानं तदेवादितोऽनुसंधाय निराकरणीयम् इत्येष एव साधीयान् पन्थाः । इत्थं च मूषकाणां संहाराय न किल व्ययीकरणीयम् अपरिमितं प्रजानां द्रव्यमनशास्तृभिरित्येवात्र अभिप्रेयतेऽस्माभिः ।'

सू. वा. १।४० (१९–१२–१९०७) लेखाङ्कः ४ —

'अथेदानीम् अत्रैकम् अवशिष्टमिदं विचारयितुम् इच्छामो यदेतत् सांप्रतमुपायतयाभिप्रेयते कैश्चिल्लसीकावेधाख्यं (इनाक्युलेशन्) कर्म तदेतद्धितकरमहितकरं वेति । अत्रैवमाहुः प्रमाणपरतन्त्रा भूतार्थविदः । उपकरिष्यत्येव सर्वथा लसीकावेध इति । एवं सात्म्यभावमापन्नं ग्रन्थिज्वर-बीजायितं विषं न ज्वरोत्पत्तौ प्रभविष्यतीति । न चैतन्न विदितं प्राचीनैः । अत एव हि मसूरिकाया लसीकया वेधमनुशासत्येते ।'

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सू. वा. १।४१ (२६-१२-१९०७) लेखाङ्कः ५ —

'यच्चोक्तं प्राचीनैर्विषस्य विषमौषधमिति। तस्यापि ननूत्पत्तिरियमेव यन्मात्रया समासेवितं विषं स्वसमजातीयविषान्तरप्रतिबन्धकमिति। एतदेव च सात्म्यतापादनं ग्रन्थि-ज्वर-बीजस्य। तत एव च नैतद् रोगं जनयतीत्यपि द्रष्टव्यम्। एवं चावश्यमुपकारको ग्रन्थिज्वर-लसीकावेध इत्येवातः पर्यवस्यति।'

सू. वा. १।४४ (१६-१-१९०८) लेखाङ्कः ६ —

'तद् यदि(लसीकावेधे) वैमुख्यमेतदपाकर्तुम् अभिलष्यतेऽनुशास्तृ-प्रवरैस्तदा प्रथमस्तावद् यथा न घटेत लसीकाया अयोगो मिथ्यायोगोऽति-योगो वा तथैव प्रयतनीयम्। तत्र च लसीका-निर्माण-प्रवीणानां दक्षाणामेव भिषजां नियोजनं, यूरोपीयाणामेव गात्रेष्वादितो लसीका-वेध-परीक्षणं, यैश्च यूरोपीयाणां गात्राणि विध्यन्ते तैरेव भिषग्भिर्भारतीयानां गात्रवेधः, लसीकया विद्धगात्रे पुरुषे ग्रन्थिज्वरेणैव दिवं प्रयाते, वेधितरि वैद्येऽभियोगा-रचनं विचार्य चैतत्कृतं लसीकावेधं सत्यपराधे परुषतरं दण्डनमित्येत एव प्रधानतमा अभ्युपाया इति नो बुद्धिः।" —

— इति। षण्णां लेखानाम् इमे अंशाः अतीव स्वल्पाः एव इति बोध्यम्। अनेन ग्रन्थिज्वरविषयः अप्पाशास्त्रिभिः सांगोपाङ्गं चर्चितः इति स्फुटीभवति। आयुर्वेद-तत्त्व-वैशारद्येन सह लौकिक-वृत्ति-कौशल्यम् अपि स्पष्टं भवति विद्यावाचस्पतीनाम्।

## ४६. NOTICE TO ADVERTISERS (विज्ञापयितृभ्यः सूचना।)

**सूनृतवादिनी** खलु इदानीं नैक-प्रदेश-संचारिणी पत्रिका-समभवत्। औषध-पुस्तकादीनां भूयांसि विज्ञापनानि अत्र प्रकाश्यन्ते स्म। आगामिवर्षे च सूनृतवादिन्याः विशालीकरणं संकल्पितम् अप्पा-शास्त्रिभिः। तत्र प्रबन्धानां याचनायाः नैव आसीत् आवश्यकता। स्वयमेव श्रीअप्पाशास्त्रिणः तदर्थं समर्थाः आसन्। किन्तु विज्ञापनानां पराधीनत्वम् एव आसीत्। अतः विज्ञापयितॄणां परिचयाय अप्पाशास्त्रिभिः सूनृतवादिन्याः प्रथमखण्डीये ४४ तमेऽङ्के (१६-१-१९०८) आङ्गल-भाषामयं विज्ञापनम् एकं प्रसिद्धीकृतम्। तद् यथा —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"This Sanskrit weekly paper Sunritavadini has a very wide circulation in all parts of India, Burma and Ceylon, and the next year which is second of the paper begins with the first of Chaitra 1830 Shaka. The size of the paper is to be made larger from the first issue of the next year. Advertisers have a special advantage in publishing their advertisements in the Sunritavadini in as much as the paper is very largely circulated in India and reaches almost to all parts of the Empire. Rates of advertisements are quoted on each issue of the paper. Special rates may be granted on application." इति।

अस्य चायम् अर्थः —

"सूनृतवादिनी नामेयं संस्कृत-साप्ताहिक-पत्रिका भारते ब्रह्मदेशे सिंहले च सुविस्तृतं प्रसारम् अधिकरोति। आगामिनि च चैत्रसुदिप्रतिपदातः प्रारप्स्यमाणे १८३० तमे शकवर्षे प्रथमाङ्कतः एव आकारम् अस्याः अभिवर्धयितुम् इच्छामः। सूनृतवादिन्यां विज्ञापन-प्रकाशनार्थं विज्ञापयितारः विशिष्टं सौकर्यं विन्देरन्। यतो हि पत्रिका इयं विशालीभविष्यति। व्याप्नोति च सेयम् आङ्ग्ल-साम्राज्यस्य प्रायशः सर्वानेव विभागान्। विज्ञापनमूल्यानि तु पत्रिकायां प्रत्यङ्कं प्रकाश्यन्ते। विशेषतः पुनः आवेदन-प्रेषणेन शक्येरन् इमानि संमन्तुम्।" इति।

एवं सूनृतवादिन्याः आगामिवर्षे बृहत्तरीकरणं संकल्प्य तद्विषयिणी योजनाऽपि कार्ये अन्विता अप्पाशास्त्रिभिः। प्रकारेण च एतेन परं प्रचारण-नैपुण्यम् एतेषां प्रकटं भवति।

## ४७. मोहमय्यां परेलीय-रसायन-शालायाम्।

पठितमेव पाठकैः ग्रन्थि-ज्वरं विषयीकृत्य श्रीअप्पाशास्त्रिभिः सुविशद-चर्चामयं लेखषट्कं प्रकाशितम् इति। अत्र च भारतीय-वैद्यशास्त्रोपस्कृतः एव लसीकावेधः इति ग्रन्थिज्वर-लसीका-वेधः अपि उपकारकः एव स्वीकार्यः एव चायम् इति प्रतिपादितम् एतैः। अथ ग्रन्थिज्वर-प्रतिबन्धिकायाः लसीकायाः निर्माणं तस्याः वेधः च इत्यादि-कार्यकलापानां प्रत्यक्षः प्रयोगः कर्तव्यः प्रदर्शनीयः च अयं वृत्तपत्र-संपादक-महत्तरेभ्यः इति निश्चित्य १८२९ शकवर्षीयपौषवदि २ तिथौ (२१ जानेवारी १९०८)



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुम्बई-राज्य-प्रमुख-शासकेन श्रीमता क्लार्कमहाशयेन महाराष्ट्रीयनेतृभ्यः आमन्त्रणं दत्तम्। लसीका-प्रयोगः तु अयं मोहमयीनगरे ( Bombay ) परेलीय-रसायन-शालायां संवृत्तः। तदर्थं च शतप्रायाः मोहमयी-विभागीयाः पत्रिका-संपादकाः संगताः। तेषु लोकमान्यतिलक-शिवरामपन्तपराञ्जपे-प्रभृतयः महामान्याः यथा निमन्त्रिताः आसन् तथैव श्रीअप्पाशास्त्रिणाम् अपि कृते निमन्त्रणम् आसीत् एव। लसीका-प्रयोगस्य समयः चतुर्थघण्टा आसीत्। तत्समये बहवः एव संपादकाः समागत्य रसायन-शाला-गर्भं भूषयामासुः। अद्यापि क्लार्कमहोदयः नागतः इति प्रबोधनकार ठाकरे, पराञ्जपेप्रभृतयः राजकीयान्दोलन-सूत्रधाराः तु रसायन-शालायाः बहिः वर्तमाने उद्याने एव समुपविष्टाः आसन्। अवसरे च एतस्मिन् संप्राप्ताः तत्र उष्णीषम् अपाकृष्य करवस्त्रेण मस्तकस्थ-घर्मबिन्दून् मार्जयन्तः अप्पाशास्त्रिणः। ते तु सवेगं रसायन-शालायाम् एव गन्तुम् आरब्धाः। तदा तान् एतान् समाहूय प्रोक्तं श्री. ठाकरेप्रभृतिभिः — "शास्त्रिवर्याः! अत्रैव समुपविश्यतां तावत्।" अप्पाशास्त्रिभिः पृष्टम् — "ननु संवृत्तः एव श्रीमता क्लार्कमहोदयेन निर्दिष्टः समयः। तत् अभ्यन्तरे गत्वा उपविशामः" इति। इतरे पुनः अवोचन् — "तथापि नैव आगतः अद्यापि सः क्लार्कमहाभागः। आगते च तस्मिन् अवश्यमेव अभ्यन्तरे समुपविष्टैः प्रत्युत्थानं कर्तव्यं स्यात्। न पुनः अभीष्टः अस्माकं वैदेशिकस्य स्वातन्त्र्यापहारिणां प्रतिनिधेः अस्य प्रत्युत्थानात्मकः सत्कारः। अतः तस्य प्रवेशानन्तरम् एव वयं प्रवेक्ष्यामः। ततश्च नैव स्यात् अवसरः प्रत्युत्थानस्य इति।" आकर्ण्य च एतत् परं प्रीताः स्वदेश-प्रणयि-धुर्याः अप्पाशास्त्रिणः तत्रैव उद्याने उपविष्टाः।

अथ संप्राप्ते श्रीमति क्लार्कमहाभागे प्रविष्टे च रसायन-शालायां सर्वेऽपि बहिष्ठाः अभ्यन्तरे समागताः। तत्र च यत् संवृत्तं तत् एतत् केनापि मोहमय्याः वार्ताहरेण लिखितं सूनृतवादिन्यां ( १।४५।२३-१-१९०८ ) च प्रकाशितम्। तत् यथा —

' सायं चतुर्वादनावसरे समागतेषु परेलीयरसायनशालायां तेषु तेषु संपादकेषु प्रदर्शितं चिकित्साशास्त्र-निष्णातैः कैश्चन यूरोपीयैर्लसीका-निर्माणम्। अन्ततश्च समुपस्थिते श्रीमति मोहमयीविभागाधिपतौ क्लार्क-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महाभागे लसीकानिर्माणं वेधनं चाधिकृत्य किमप्युपन्यस्तं केनापि यूरोपीयेण। अन्ततश्च श्रीमान् मोहमयीविभागाध्यक्षोऽपि किमपि समुपन्यास्थत्। ततः परं च विद्धः कोऽपि पारसीक-जरठः। अपरश्च कोऽपि यवीयान् संपादकः समवीविधद् गात्रमात्मीयम्। तदनु च प्रकाशितायां श्रीमता तिलकमहोदयेन लसीकानिर्माणविषये कृतज्ञतायां समुपहृतं संपादकोपस्थानकार्यम्।" इति।

एतस्मिन् एव दिने संमिलितैः एतैः संपादकैः श्री. **अरविन्दघोष**-महाभागस्य **श्रीपराञ्जपे**महोदयस्य च पुरस्कारेण राजकीयान्दोलन-विषयेऽपि सभा समायोजिता आसीत्।

## ४८. चन्द्रावाडी-प्रासादे व्याख्यानं सत्कारः च।

१८२९ शकवर्षीये पौषे उपरि-निर्दिष्ट-कार्यार्थं मोहमयीं गतानां श्रीअप्पाशास्त्रिणां तत्रत्य श्रीसद्धर्मकौमुदीसभायां व्याख्यानं संवृत्तम्। तस्य वृत्तान्तः संस्कृतचन्द्रिकायाः चतुर्दश-खण्डीय-नवमेऽङ्के संदृश्यते। सोऽयम् —

"कुतोऽपि कारणान्मोहमयीं गतः संस्कृत-चन्द्रिकायाः संपादकः श्रीमानप्पाशर्माविद्यावाचस्पतिस्तत्रत्यया श्रीमत्या सद्धर्म-कौमुदी-सभया प्रार्थितः 'सनातन-धर्म-विषयका आक्षेपास्तत्समाधानं च' इत्येनं विषयम् अधिकृत्य संस्कृतया गिरा समुपन्यास्थत्। सम्यक् च संभावितोऽयं सद्धर्म-कौमुदीसभाया आलम्बनभूतैः श्रीमद्देवकीनन्दनमहाराज श्रीमद्गोकुलनाथ-महाराजादिभिः।" इति।

अयमेव वृत्तान्तः तदानीन्तने **सद्धर्म**संज्ञके संस्कृत-मासिक-पत्रे प्रकाशितः मनाक् इव विस्तरेण, यथा —

"मोहमयी-पत्तने कस्यचन कार्यस्य वशात् तद्विभागाध्यक्षेण समाहूतैः संस्कृतचद्रिका-सूनृतवादिनी-संपादकैः सनातन-धर्मानुयायि-प्रवरैः श्रीविद्यावाचस्पति-श्रीमदप्पाशास्त्रिभिः १८२९ पौषवदि पञ्चम्यां गुरौ गोस्वामि-तिलक-श्रीमद्देवकीनन्दनाचार्याणां सभापतित्वे तेषामेव चन्द्र-वाटिका-(चन्द्रावाडी)-प्रासादे सनातन-धर्मे ह्याक्षेपास्तत्परीक्षा चेत्यमुं विषयमुपन्यस्यद्भिराधुनिकरीत्या स्त्रीणां पाठशालास्वध्ययनविधिर्गुणकर्म-विभागेन वर्ण-व्यवस्था विधवोद्वाहो विदेश-गमनं समुद्र-यानं चेत्यादयो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विषयाः पूर्वं मनोहरया शैल्या समनूद्य, प्राकाश्यत पुनस्तेषामशास्त्रीयत्वमन्याय्यत्वमनिःश्रेयसकरत्वमनभ्युदयकरत्वमधर्मत्वं च प्रबलानि पुरस्कुर्वद्भिः श्रुति-स्मृति-पुराण-प्रमाणानीति प्रावहदमन्दसंमोदरसश्चेतसि सभास्ताराणाम्। अवसिते चैतस्मिन् व्याख्याने बृहन्मन्दिराधीश्वर-गोस्वामि-श्रीगोकुलनाथाचार्यैर्गोस्वामि-श्रीदेवकीनन्दनाचार्यैश्च धन-वस्त्रादिना सुसत्कृताः। सभायामस्यां व्याख्यान-वाचस्पति-दीनदयालुशर्माणोऽपि संनिहिता आसन्निति।" इति।

अस्मिन् अवसरे सरस्वती-संज्ञक-हिन्दीभाषामय-पत्रिकायाः अन्यतम-लेखकाः पं. श्रीहरिहरसुरूपशास्त्रिणः अपि संनिहिताः आसन्।

एतेन खलु विज्ञायेत पाठकैः यथा राजकीयेषु लौकिकेषु च आसीत् महिमा श्रीअप्पाशास्त्रिणां तथा धार्मिकेषु अपि विषयेषु तावान् एव ततोऽपि वा समधिकतरः एव सोऽयम् आसीत् इति। अस्यां सभायां ये विचाराः अप्पाशास्त्रिभिः प्रकटीकृताः तेषां दर्शनं सूनृतवादिन्यां (प्रथमखण्डीय २७–२८–२९–३०–३१–३२–३४ प्रभृतिषु अङ्केषु) 'समाजसंस्कारः' इति लेखमालायां भवति।

**४९. धारवाडनगरे बृहत्तरं संस्कृत-विद्या-मन्दिरम्।**

एतत् तु परिचितम् एव पाठकानां यत् व्याख्यान-महोत्सवाद्यर्थं श्रीअप्पाशास्त्रिणः धारवाड-हुबळी-प्रदेशे मुहुर्मुहुः गच्छन्ति स्म इति। गीर्वाणवाणी-परिचरणे बद्धादराणां तेषां संस्कृत-विद्योन्नतिः अपि प्रचार-विषयीभूता। धारवाड-नगरे च गुणेन आकारेण च महत्तरा संस्कृत-पाठशाला विराजते। तस्याः च तदानीन्तनीं व्यवस्थां संदृश्य भृशं प्रीताः अप्पाशास्त्रिणः। पाठशालायाः एतस्याः सौभाग्य-संपादनार्थं सूनृतवादिन्याः प्रथमखण्डीये ४५ तमेऽङ्के (२३।१।१९०८) पाठशालाम् एव अधिकृत्य प्रधानलेखः प्रकाशितः एतैः। नाम चास्य लेखस्य 'दीयतामितो दृष्टिः' इति। अस्मिन् च लेखे संस्कृतविद्यायाः परिस्थितिः, पूर्वतनं संस्कृतविद्या-मन्दिर-वैभवम् इत्यादि समुपवर्ण्य धारवाडीय-पाठशालायाः परिचयोऽपि प्रदत्तः।

पाठकमहाभागाः! अस्य चरितप्रबन्धस्य लेखकोऽपि ननु धारवाडीय-पाठशालायाः एव च्छात्रः। अतो विद्यामन्दिरस्य अस्य वर्णनम् उल्लङ्घ्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नैव पुरः प्रचलितुम् उत्सहते लेखनी एतस्य। तत् दृश्यतां श्रीअप्पा-शास्त्रिणाम् एतद्विषयकः वचोविन्यासः —

"अस्ति चात्र-(धारवाड)-निवासी कोऽपि व्यवहाराजीवी श्रीमान् गुरुनाथरायो नाम। एतेन किल प्रतिष्ठापितं किमपि महत्तरं संस्कृत-विद्या-मन्दिरम्। विद्यामन्दिरं खल्वेतत् त्रितलं तत्रादितो वाचन-मन्दिरम्। द्वितीयेऽध्यापनशाला। तृतीये तूपन्यासादि-व्यवस्थोचिता भूमिः समुल्लसति। समीचीन-समीर-संचारे मानस-प्रसादन-पटीयसि सरस्तीरे प्रतिष्ठापितमेतत्। अत्रैव च विद्यते छात्रावासः। वसन्तश्चात्र विद्यार्थिनोऽन्नं च वसनं च साधीयोऽधिगच्छन्तो निश्चिन्तमेवाधीयते। आचार्याश्चात्र सकल-तन्त्र-निष्णाता हृदयालवो वत्सलाश्च विनियुक्ताः। कुमारानिव चात्मनोऽध्यापयन्ति च्छात्रानेते। एतदीये च वाचनालये भारतवर्षीयेषु तेषु तेषु प्रदेशेषु संमुद्रितानि प्रायेण सर्वाण्येव विद्यन्ते संस्कृत-पुस्तकान्युपयुक्तानि। येनाध्ययने च च्छात्राणाम् अध्यापने च आचार्याणां महदेव सौकर्यं संपद्यते। तदेवं सर्वथा नितान्तमेवोपयुक्तं विद्यामन्दिरमेतत्।" इति।

इतःपरं च संस्कृत-विद्या-रक्षणस्य संस्कृत-विद्या-मन्दिरस्य कृते साहाय्य-प्रदानस्य च आवश्यकत्वं प्रतिपादितम्।

**५०. संस्कृत-चन्द्रिकायाः प्रकाशः।**

चन्द्रिकायाः त्रयोदश-खण्ड-समाप्तेः अनन्तरं सूनृतवादिन्याः प्रकाशने निमग्नैः अप्पाशास्त्रिभिः ग्रन्थिज्वरादि-कारणवशात् चन्द्रिकायाः नियत-कालं प्रकाशनाय च प्रभूतम्। चतुर्दश-खण्डस्य प्रथमम् अङ्क-त्रयं शकस्य १८२९ वर्षीय-चैत्र-वैशाख-ज्येष्ठानां यथासमयं प्रकाशितमेव। किंतु पुरतः वाईक्षेत्रे ग्रन्थिज्वरः, स्थानपरिवर्तनम्, पत्न्याः स्वःप्रयाणम्, इत्यादिकारणैः तद्वर्षीये पौषमासे एव चतुर्थादि-नवमान्तानां चन्द्रिकाङ्कानां प्रकाशनं युगपत् एव संमिलिततया कृतम् एतैः। अस्मिन् संमिलिताङ्के विलम्ब-निदान-निवेदनावसरे प्रोक्तम् —

"न खलु संभावितमस्माभिर्यद् वाई-क्षेत्र-सदृशेषु पुण्यप्रायेष्वपि प्रदेशेषु भवेयुरकारणविद्वेषिणः केऽपि दुरात्मान इति। किन्तु व्यपगतोऽय-मिदानीं सुदूरादेव भ्रमोऽयमस्माकम्। अत्र ह्यसहमाना इव सुखनिवासम-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्माकं केऽपि दुर्जनधौरेया न्यपातयन् नवोद्भाविते कस्मिंश्चिदभियोगचक्रे स्वप्नेऽप्यसम्भवनीयेऽस्मान्। दिष्ट्या तावत् प्रयस्यद्भिरपि नाधिगतोऽत्र प्रमाणमालेशोऽपि, किन्तु क्व वा तथाविधत्वमापन्नेषु प्रमाणापेक्षा। तत एव च विनाऽपि प्रमाणमारोपितो न्यायैकपक्षपातिना प्राड्विवाकेन दोषोऽस्मासु। कथञ्चित् पुनरतो मुक्ताः स्म इति नूनमसौ कृपैव परमेशस्य प्रभावो वा श्रीमतां विशुद्धतमस्य प्रेम्णः।" इति।

एतेन वाईक्षेत्रीय-खलानां दौर्जन्यशल्यं गाढमेव निखातम् आसीत् अप्पाशास्त्रिणां हृदये इति व्यज्यते।

### ५१. पण्डित-महासभा-प्रतिष्ठापनविचारः।

सुनृतवादिन्याः प्रथमखण्डीय ३७ तमेऽङ्के (२८-११-१९०७) पण्डितमहासभाम् अधिकृत्य मञ्जुभाषिण्यां प्रकाशितपूर्वः प्रबन्धः पुनर्मुद्रितः। यथा स्वदेशविचाराय भारतमहासभा इति संस्था विद्यते, तथा स्वधर्म-विचाराय संस्कृत-विद्या-विचाराय च पण्डित-महासभा आवश्यिका इति मञ्जुभाषिणी-लेखस्य पिण्डितार्थः। श्रीमदप्पाशास्त्रिभिः तदानीं समनुमोदितम् इदम्। उक्तं च 'अत्र च विषये बह्वस्ति नो वक्तव्यम्। तदेतदन्यदावक्ष्यामः।' इति।

अथ लब्धावसरैः अप्पाशास्त्रिभिः सूनृतवादिन्याः ४६ तमे च ४७ तमे च इति अङ्कद्वये (३०-१-१९०८। ६-२-१९०८) पण्डितमहासभाम् अधिकृत्य प्रधानलेखद्वयं लिखितम्। अस्मिन् च प्रबन्धे साङ्गोपाङ्गं विचारितः पण्डित-महासभा-विषयः। अतश्च तत्रत्य. कोऽपि प्राधानिकः अंशः समुद्धृत्य पाठकेभ्यः उपह्रियते। सोऽयम् एतादृश. —

"संदृश्यते हि सम्प्रति सर्वत्रापि गरीयान् परिवर्तः। नहि संप्रति शतायुषः सुदृढशरीरा बुद्धिमत्तरा आदर्शभूताश्च पुरुषा अत्र भारते वर्षे। न धर्माभिमानः। न श्रद्धा। न देवेषु भक्तिः। न गुरुषु गौरवम्। न स्वायत्तानि शिल्पानि। न स्वदेशानुरागः। नापि वान्यत् किमपि यदेव पूर्वमत्र प्राद्योतिष्ट। संप्रति पुनर्दुबलप्रायाः परपिण्डोपजीवित्वमेव जन्मनः साफल्यहेतुरित्याकलयन्तः पाश्चात्यानेव दैवतानि मन्वानाः प्रायेण संदृश्यन्ते नव्या भारतवर्षीयाः। न ह्यमी आत्मनो हितमत्रबुध्यन्ते।

तदिदानीं किंवाऽत्र भारतवर्षहानौ निदानमित्येवादितो विचारणीयं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवति। एवं च यदि विचार्येत तदाऽधर्म एव केवलमवनतौ निदानमिति स्फुटीभवति। यदा च पल्लवादिमात्रं परिदधानाः साम्प्रतिकानां समुन्नतमानिनां पूर्वे पुरुषा द्विपदाः पशव इव सञ्चेरुस्तदा किलास्मदीयमेतद् भारतं तत्तादृशेनाभ्युदयेन समुल्ललितं स्वर्गमप्यतिशेते स्म। कुतः पुनरेतदिति चेद् विचार्येत तदा भगवतः सनातनधर्मस्यानुपालनमेवात्र हेतुतया पर्यवस्यति। तदा हि भारतवर्षीयैरुन्नतिपथमारोपितः सनातनो धर्मः।

संदृश्यते चेदानीमवह्रासो भगवतः सनातन-धर्मस्य। तत एव च सूपपन्नेदानीमियमवनतिर्भारतीयानामिति जानीयुरेवेदं धीमन्तः। यदि च सनातनधर्म-परित्याग एवावनतौ हेतुर्यदा चावश्यकं तत्परिवर्जन-पुरस्सरं सनातन-धर्मावलम्बनमेव तदा कथमधर्मः परिवर्जनीयः, कश्च सनातन-धर्मानुशीलनस्य प्रकारः, कश्चास्य प्रचारणोपाय इत्यादिकमवश्यं विचारणीयं भवति।

धर्मविचारे च नहि विना पण्डितान् अन्येषाम् अधिकारः। धर्मो हि विना मीमांसां व्यवस्थाप्यमानः सर्वथैव निर्व्यवस्थतामुपयाति। सर्वथैव च विप्लवते। पण्डिता एव च जानन्ति मीमांसाम्। तत एव च पण्डितैरेवाखिलैर्भारतवर्षीयैरेकत्र संभूय विचारणीयोऽयं विषयः। तत एव चेदानीं पण्डितमहासभाया आवश्यकत्वम् आकलयामः।

तत्र तावत् सनातनधर्मोन्नतिरेव प्रधानमुद्देश्यमेतस्याः। सनातनधर्मोन्नतौ च सनातनधर्मरहस्यानां ज्ञानम् आवश्यकम्। तच्च नहि विना संस्कृत-भाषावगतिं सम्यक् संभवति। तत एव च यथा भारतेऽत्रवर्षे सर्वत्रापि सविशेषमेव प्रचरेत् संस्कृता भाषा तथैवानया प्रवर्तितव्यम्। एवं सकलसाधारणत्वमापन्ना संस्कृता भाषा संजनयेत् परस्परं व्यवहारे सौकरीं तत्तद्देशीयानाम्। समुपचाययेच्च सौहार्दम्।

भवन्ति किल जटिलतमानि कियन्तिचित् सनातनधर्मस्य तत्त्वानि। तत एव नैतानि सामान्यतः परिचितसंस्कृतेनावगन्तुं शक्यन्ते। तेन तथाविधानां तदवबोधनाय सुबोधतमानि कियन्तिचित् पुस्तकान्यवश्यं प्रकाशनीयानि यानि सरल-संस्कृत-भाषया ग्रथितानि स्युः। अत्र च विषये वैदेशिकानां प्रयासः सर्वथानुकरणीयः। तैः किल विनामूल्येन स्तोकतमेनापि वा मूल्येन वितीर्यन्ते धर्म-पुस्तकान्यात्मीयानि। एवं किलास्माभिरप्यनुष्ठेयम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र च भूपति-साहाय्य-निरपेक्षाणां स्वतन्त्राणां पाठशालानामत्रस्थापनमावश्यकम्। पाठ्यपुस्तकानि चात्र तथाविधान्येव नियोक्तव्यानि यैः किलाधीतैर्नांशतोऽपि प्रच्यवेयुर्धर्मतश्छात्राः। अवबुध्येरंश्चाशेषम्। समासादयेयुश्चात्मोन्नतिम्। एतस्य च कर्मणः कृते पाश्चात्त्यानामपि विज्ञानपुस्तकानां संस्कृत-भाषयानुवादनावश्यकम्। आशास्महे च वयमवश्यं प्रतिष्ठापनमेतस्याः। यावच्छक्यं चावश्यमेतस्याः प्रतिष्ठापने साहाय्यमारचयिष्यामः।" इति। अस्माच्च प्रबन्धात् प्रतीयुः पाठकाः यत् स्वदेश-स्वधर्मसमुन्नयनार्थमेव पण्डितमहासभायाः प्रतिष्ठापनम् अभिलषितम् अप्पाशास्त्रिभिः। संस्कृत-विद्यया सह एव नव्यविज्ञानस्य अपि समुत्कर्षः एव अभीष्टः एतेषाम्। यदर्थं खलु आजीवितं पत्रिका-प्रचारणादीनां प्रयासाः कृताः तानि सर्वाणि उद्देश्यानि अप्पाशास्त्रिभिः अस्मिन् पण्डितमहासभाविषयके प्रबन्धद्वये सुविशदं समुल्लिखितानि। अत एव च अत्रत्याः प्रधानांशाः सविस्तरम् अस्माभिः समुद्धृताः। यस्यैव कृते इदानीं हिन्दीभाषायाः आवश्यकत्वं मन्यते शासकादिकैः, तस्मै भारतीयानाम् ऐक्याय साधारणभाषात्वेन संस्कृतम् एव प्रचारणीयम् इति प्रतिपादितम् अप्पाशास्त्रिभिः। एतेन कोऽपि द्रष्टृत्वविशेषः एतेषां स्फुटीभवति।

### ५२. धर्मे सर्वं प्रतिष्ठितम्।

'धर्मे सर्वं प्रतिष्ठितम्' इत्येतद् घोषवाक्यं सूनृतवादिन्याः। तत् एव अधिकृत्य सूनृतवादिन्या ४९ तमेऽङ्के प्रबन्ध एकः अवतारितः अप्पाशास्त्रिभिः। स्वराज्यान्दोलनस्य विविधानि मतानि पर्यालोच्य तस्य धर्ममूलकत्वम् एव राष्ट्रोन्नतिकारकम् इति प्रतिपादितम् अत्र। प्रोच्यते स्म खलु विद्यावाचस्पतिभिः —

"न खलु किञ्चिदपि नाम तदस्ति यदनुपासिते धर्मे न शक्यते संपादयितुम्। तत एव चोक्तं भगवत्या श्रुत्या 'धर्मे सर्वं प्रतिष्ठितम्' इति। प्राचीनमतानुयायिनामेव चैतन्मतं साधीय इत्याकलयामः। तथाहि। यदेतत् स्वदेशीयान्दोलनमित्यभिमन्यतेऽर्वाचीनैस्तत् किल समनुपालिते धर्मे प्रशमपुरःसरं स्वयमेव संघटेतेति नात्र संदेहः। म्लेच्छनिर्मितानां म्लेच्छस्पृष्टानां च द्रव्याणां सुदूरतः परित्याज्यस्यैव धर्मेणोच्चमानत्वात्। स्वायत्तानुशासनमपि सनातनस्य धर्मस्याश्रयणे फलतः समुपभुज्येतैव भारतवर्षीयैः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतस्य हि समवलम्बने नांशतोऽप्यावश्यकं स्याद्राजकीयं कर्मेति । सर्वेऽपि स्वस्वमर्यादया पराविरोधेनैव वर्तमाना न विवादमीहेरन् नापि वा स्तेयादिषु प्रवर्तेरन् । तस्मात् समाश्रीयतामादितः सनातनो धर्म एव । न चैवं साम्प्रतिकानां स्वदेशीयान्दोलनादीनां परित्याग एवास्माभिरभिप्रेयत इति भ्रमितव्यम् । वयं हि स्वदेशीयान्दोलनादीनां दृढमूलतामभिलष्यन्तः सनातनधर्मस्यैव च तत्र प्रभुत्वमवधारयन्तस्तदनुसारित्वमेवैतेषां वाञ्छाम इति ।" इति ।

एवं स्वदेशीयान्दोलनस्य फलं धर्मराज्यम् एव भाव्यम् इत्यासीत् संभावना श्रीअप्पाशास्त्रिणाम् ।

**५३. सूनृतवादिन्याः प्रथमखण्डस्य पूर्तिः ।**

१८२९ वर्षीये फाल्गुनसुदितृतीयायां (५-३-१९०८) सूनृतवादिन्याः ५० तमः अङ्कः प्रकाशितः । अयमेव च सूनृतवादिन्याः प्रथमखण्डस्य अन्त्यः अङ्कः । अस्मिन् अङ्के 'वत्सरान्ते विज्ञप्तिः' इति प्राधानिको लेखो विराजते । अत्र हि सूनृतवादिनी-संकल्पात् प्रभृति एतदङ्क-प्रकाशन-पर्यन्तः सर्वोऽपि इतिहासः संक्षेपेण उल्लिखितः । पुनरपि सूनृतवादिन्याः उद्देश्यं स्पष्टीकृत्य तत्र एतद्वर्षे प्रकाशितप्रबन्धानां सिंहावलोकनं कृतम् । संस्कृतभाषायाः प्रचारविषयेऽपि उद्देश्यं स्फुटीकृतम् ।

उक्तपूर्वं खलु अप्पाशास्त्रिभिः 'सूनृतवादिनीं परस्मिन् वर्षे बृहत्तरीकरिष्यामः' इति । किन्तु —

'यावत्यत्रापेक्ष्यते सामग्री न किल तावती समुपस्थितेत्यनन्यगतिकाः कर्मण्यत्र कालं कियन्तमप्यपेक्षमाणाः स्मः ।' इति प्रोक्तमेतैः । राजकीय-विषयाणां ज्ञानं संस्कृत-पण्डितानां कृते सुकरं स्यात् इत्येव हि अन्यतमः प्रधान-उद्देशः सूनृतवादिन्याः । तम् एतम् उपवर्ण्य उक्तम् अप्पाशास्त्रिभिः —

'सर्वथाऽनुचितमिदानीं राजकीय-विषय-वैमुख्यं भारतीयानामिति नैतद्विस्मरणीयं केनापि भारतवर्षीयेणेति स्मार्यतेऽस्माभिः' इति ।

**५४. संस्कृतमेवैका भारतीयानां भाषा ।**

भूयसां खलु नव्यशिक्षितानां 'मृतभाषा संस्कृतम्' इति घण्टाघोषः । तम् एतम् उल्लिख्य प्राहुः अप्पाशास्त्रिणः —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"विदितमेवैतत् प्रिय-पाठक-महाभागानां यदिदानीं 'मृतभाषा' इति व्यपदिश्यते भगवती गैर्वाणी वाणी पाश्चात्त्यैश्चार्वाचीनैर्भारतवर्षीयैश्च नव्यशिक्षितैरिति। न खल्वेतत् संभाव्यतेऽस्माभिर्वचनमेतदाकर्णयतो न विदीर्येत मनः कस्यापि स्वदेशाभिमानवतो भारतवर्षीयस्येति। अपरं हि वैभवं भारतीयानां संस्कृता भाषा। अथवा प्राणा एवेयमेतेषाम्। यच्च भारतीयानां ज्ञानं तदेतत् संस्कृतभाषयैव संघटितम्। ततश्च यदि मृतैव संस्कृतभाषा तदा किमिव पाञ्चभौतिकेनामुना फलममीषां शरीरेण? अत एव च यथा न स्यान्मृतव्यपदेशभाजनं भगवती संस्कृता वाणी तथैव प्रयतनीयं भव्यमभिलष्यद्भिर्भारतवर्षीयैरित्येतदेव न्याय्यम्। तच्च यथा भाषेयं व्यवहारोपयोगित्वमापद्येत तथा प्रयतनम्। व्यवहारोपयोगित्वं चास्या नहि विना सामयिकविषयविचारमन्तरा संभवति। सामयिकानां च विषयाणां प्रकाशनं यथा संवादपत्रेण शक्यते प्रविधातुं नैवं मासिकपत्रिकादिभिरित्यत एव प्रकाश्यते सेयं साप्ताहिकी संस्कृतपत्रिका सूनृतवादिन्यस्माभिः। ये तु सामयिकेषु राजकीयादि-विषयेषु क्रियमाणमुपयोगमेतस्या न विषहन्ते, ये चापकर्षमेवास्याः संभावयन्त्येतेन जानन्तु नामैते किमपि। न खलु वयं तदर्थं सूनृतवादिनीं प्रकाशयाम इति। तेषामेव हि कृते सेयं प्रकाश्यते ये किल सर्वाङ्गीणमेतस्याः प्रचारमभिवाञ्छन्ति, ये चास्याः प्रत्युज्जीवनमभिकाङ्क्षन्ति। येषां च संस्कृतमेवैका भारतीयानां भाषा भवत्वित्यभिप्रायः।" इति।

स्वतन्त्रे भारते का नाम सर्वराष्ट्रव्यापित्वेन सर्वभारतीयसाधारणी स्यात् भाषा इति विषयस्य उत्तररूपेण एव सूनृतवादिनी प्रचारिता अप्पाशास्त्रिभिः। अतश्च संस्कृतभाषायाः भारत-राष्ट्रभाषात्वस्य सर्वाद्यं द्रष्टृत्वम् अप्पाशास्त्रिणः अधिकुर्वन्ति।

## ५५. सूनृतवादिनी-वर्तिनः प्रबन्धाः।

एवं संस्कृत-संवाद-पत्रिकायाः उद्देश्यम् उपवर्ण्य सूनृतवादिन्यां प्रकाशितप्रबन्धविषयेऽपि अप्पाशास्त्रिभिः सूचितम् — "न किल न प्रकाशिताश्चिरोपयोगिनो विषया अस्माभिः। नापि वा केवलं राजकीयानेव विषयानधिकृत्य प्रकाशिताः प्रबन्धाः सर्वेऽपि। किन्तु राजकीयानिव सामाजिकान्, सामाजिकानिव च धार्मिकान्, धार्मिकानिव च दार्शनिकान्,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दार्शनिकानिव वैज्ञानिकान्. वैज्ञानिकानिव च सामयिकानपरानपि विषयानधिकृत्येति। संपादकीय-टिप्पन्यां किल विशेषतो राजकीया एव विषयाः समालोच्यन्त इति नैतत्तिरोहितम्।" इति।

तत्र केषांचित् प्रबन्धानां परिचयः प्रदत्तपूर्व एव। तेन सूनृतवादिनीगतां प्रतिपादनशैलीम् अप्पाशास्त्रिणां परिचितुयुः एव पाठकाः। अतः इदानीं प्रबन्धांशाः नोपह्रियन्ते। किन्तु अप्पाशास्त्रिणां सूचनानुसारं विभागशः केचित् प्रबन्धाः नामतः एव निर्दिश्यन्ते। तथाहि।

१. **राजकीयाः** — स्वदेशीयान्दोलनम्। कस्येदं निर्वासनम्। उदाराश्चानुदाराश्च। सौराष्ट्रसंवादाः। जानपदमहासभा। मृदुतीव्राः। पञ्चाम्बुप्रक्षोभः। वङ्गविक्षोभः। भारतसचिवश्च भारताधिकृतश्च। लेखनस्वातन्त्र्यस्य शिरश्छेदः। इत्यादयः।

२. **सामाजिकाः** — किमपराद्धं ब्राह्मणैः। भारतधर्ममहामण्डल्याधिवेशनम्। धर्मपीठानि च धर्माचार्याश्च। समाजसंस्कारः। पण्डितमहासभा। जानपदशिक्षणम्। स्त्रीशिक्षणम्। इत्यादयः।

३. **धार्मिकाः** — ग्रहणम्। मकरसंक्रमणं च तिलाश्च। होळाकामहोत्सवः। को बतास्माकीनो धर्मग्रन्थः। शृङ्गेरीपीठं च प्रकाशश्च। भारतधर्ममहापरिषच्च पतितपरावृत्तिश्च। समुद्रयानं च द्विजन्मानश्च। आशौचसंपातः। इत्यादयः।

४. **दार्शनिकाः** --- अपि विद्यते कश्चिवज्जीवो नाम। मा कर्मफलहेतुर्भूः।

५. **वैज्ञानिकाः** — ग्रहणम्। ग्रन्थिज्वरः। विज्ञानविलासः।

६. **सामयिकाः** — श्रीशिवराजमहोत्सवः। सामाजिकमेलकम्। बोअराणां स्वराज्यम्। रासबिहारीघोषभाषणम्। पञ्जाबिपत्राभियोगः। वैलायतिको भारतीयकार्यालयः। काम्बोजाधिपतेः संदेशः। इत्यादयः।

७. **परिचयाः** — लालालजपतरायस्य जीवनचरितसंग्रहः। श्रीमानमोलकरामः। साहिगीलालहंसराजः। श्रीमाँल्लालाजसवन्तरायः इ.।

८. **विनोदलेखनात्मकाः** अपि केचित्-प्रबन्धाः अत्र वर्तन्ते। किन्तु एते नातिविस्तृताः। एतेषां पुनः क्वचित् वैनोदिकम्, अन्यत्र हृदयरञ्जनम्, क्वापि च विनोदवाक्यानि इति शीर्षकाणि सन्ति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतदतिरिक्तं विज्ञापनानि, वृत्तान्ताः, इत्यादिरूपम् अपि लेखन-जातं सूनृतवादिन्यां भूयिष्ठम् आसीत्। विज्ञापनेषु मालविका-व्याख्यायाः पं. श्री. अन्नदाचरणतर्कचूडामणेः पुस्तकानां च विज्ञापनं प्रत्यङ्कम् उपलभ्यते। A Guide to Kamshastra इत्याख्यं विज्ञापनद्वयमपि आवत्सरम् आसीत्। तथैव The Atank Nigrah Pills इति औषधस्य बृहत् विज्ञापनं मुहुर्मुहुः एव प्रकटितम्। कोल्हापुरवासी पं. बालशास्त्रितोरोमहाशयस्य भृगुसंहितायाः विज्ञापनं कोल्हापुरगमनान्तरं सूनृतवादिन्यां प्रकाशयितुं प्रारब्धम्। कलकत्तातः प्रकाशितस्य The Dawn मासिक-पत्रस्य विज्ञापनम् अन्तिमाङ्कद्वये उपलभ्यते।

एवं प्रायः निखिलान् विषयान् अधिकृत्य अप्पाशास्त्रिभिः सूनृत-वादिन्यां लेखनं कृतम्।

**५६. सूनृतवादिन्याः लेखकाः।**

सूनृतवादिन्यां तावत् विपुलं लेखनम् अप्पाशास्त्रिणाम् एव विद्यते स्म। क्वचित् पुनः अन्येषां लेखनं समुपलभ्यते। पं. जयचन्द्रसिद्धान्त-भूषणः, पं. अर्जुनवाडकर-श्रीनिवास-(अण्णा)-शास्त्रिणः, पं. विधुशेखर-भट्टाचार्यः, महीशूरस्थः पं. गोपालाचार्यः इत्येते अन्यलेखकेषु प्रधान-लेखकाः। अप्पाशास्त्रिणां तत्र तत्र केऽपि **प्रतिनिधयः** अपि आसन्। ते तु तत्तद्विभागीयवार्तां प्रेषयन्ति स्म। तत्र केषांचित् नामानि यथा— श्रीमाधवः (बडोदा), पेनकोण्डावासी (पेनकोण्डा), नरोत्तमचन्द्रशास्त्री (पेशावर), मुरलीधरशास्त्री (हैदराबाद), महागणपतिः (सुरत), श्रीरामः (वाराणसी), "भवदीयः संस्तुतः" (मोहमयी) इति। **पत्रा-ण्यपि** कानिचित् सूनृतवादिन्यां प्रकाशितानि। तल्लेखकेषु प्रधानाः एते आसन् —

पं. दुर्गाप्रसादद्विवेदी, पं. उपाध्यायश्रीजगदीशः, कविभूषणः (कैरविणी) पं. सु. रामशास्त्री (हरिकेशपुरी), पं. शङ्करशास्त्रिपदे (बडोदा) इत्यादयः।

**५७. इत्येतन्मे कुटुम्बकम्।**

चन्द्रिकां सूनृतवादिनीं च महिष्ठेन उत्साहेन प्रचारयितुम् उद्युक्ता-नाम् अप्पाशास्त्रिणां नासीत् कौटुम्बिकं किमपि सुखं नाम समनुभवितुं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भागधेयम् । एषां किल द्वितीयपत्नी ग्रन्थिज्वरप्रभावात् दिवम् आरुरोह इति निवेदितपूर्वम् इदम् । अस्यां पुनः एकमात्रः एव तनयः जज्ञे । तथापि अयमपि अल्पायुः एव आसीत् । इतः उत्तरं पुनर्विवाहः न विधेयः इत्यासीत् विचारः श्रीअप्पाशास्त्रिणाम् । किन्तु श्रीमत्याः मातुः निर्बन्धवशात् मासत्रयात् अनन्तरम् एतैः पुनरपि परिणीतम् । (मार्ग. १८२९) अस्यां तृतीयभार्यायां तनयः एकः समुत्पन्नः । कौटुम्बिकं पुनः सुखं लेशतोऽपि विद्यावाचस्पतिभिः नानुभवितव्यम् इत्यासीत् ईश्वरेच्छा । ततश्च इयम् अपि भार्या अचिरात् एव केनापि निमित्तेन दिवम् अलंचकार इति नैतत् चित्रम् । अथापि श्रीमदप्पाशास्त्रिणां समाधानबलम् अपूर्वम् एव आसीत् । श्रीशकरीबालाचार्यपुणेकराय प्रेषिते पत्रे लिखन्ति स्म अप्पाशास्त्रिणः —

"जननी श्रीगिरां देवी पिता देवः सदाशिवः ।
धनं च विपुला कीर्तिस्तनया किल चन्द्रिका ॥
बान्धवास्त्वादृशाः स्निग्धा इत्येतन्मे कुटुम्बकम् ।
इति मत्वा न शोचामि शोच्यमात्मानमन्वहम् ॥" इति ।

पठित्वा इमं श्लोकं पाठकैः स्वयमेव विचिन्त्यतां धैर्यम् अप्पाशास्त्रिणाम् ।

अस्मिन् एव अवसरे कोल्हापुरीय-राजाराम-महाविद्यालयस्थाः संस्कृताध्यापकाः पं. गणेशशास्त्रिरुकडीकरमहोदयाः निवृत्ताः अभवन् । तत्स्थाने समपेक्षितः आसीत् कोऽपि पण्डितः । नियोजकैः अप्पाशास्त्रिणां नाम पुरस्कृतम् । अप्पाशास्त्रिभिः तु 'कृताध्ययनेषु शास्त्रनिष्णातेषु वरिष्ठः' इति स्वमित्रवर्याणां पं. बाळशास्त्रिहुंपरीकराणां निर्देशः कृतः । हुपरीकराश्च अध्यापकाः संवृत्ताः ।

## ५८. पत्रिकायाः प्रचार-शैथिल्यम् ।

यद्यपि कौटुम्बिकं सुखं न लब्धम् अप्पाशास्त्रिभिः तथापि सारस्वतसौभाग्यम् एतेषां सुसमृद्धम् आसीत् । 'अङ्गीकृतं सुकृतिनः परिपालयन्ति' इति सूक्तिः अप्पाशास्त्रिणां विषये पूर्णतया चरितार्था समभवत् । १८३० तम शकवर्षात् प्रभृति सूनृतवादिन्याः द्वितीयखण्डः प्रारब्धः । तस्याः च द्वितीयखण्डस्य प्रथमाङ्कः १८३० शाकीय चैत्रसुदिपूर्णिमायां प्रकाशितः । अस्मिन् वर्षे संस्कृतचन्द्रिकायाः प्रकाशनं नैव

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संवृत्तम् । गार्हंसौकर्याभावः, राजकीयः कोपः इत्येव तावत् निदानं प्रकाशनप्रतिबन्धस्य । १८३० तमे शाकवर्षेऽपि गतवर्षवत् समर्थ-वेङ्कटेश्वर-मुद्रणालययोः मुद्रणं, श्रीपन्तामात्यप्रासादात् च प्रकाशनं प्रारब्धम् आसीत् । श्रीमत्पन्तामात्यप्रासादे एव पुनः निवासः आसीत् अप्पाशास्त्रिणाम् । अस्मिन् वर्षे सूनृतवादिन्याः केवलं विंशतिः एव अङ्काः प्रकाशिताः । एतावता द्वितीयः खण्डः तु नैव पूर्णः । १८३० वर्षीये वैशाखमासे अप्पाशास्त्रिणः प्रतिवर्षानुसारं श्रीशंकराचार्योत्सवम् उद्दिश्य हुबळीनगरं गताः । तत्र विद्वद्रत्नमहामहोपदेशकाः पं. श्रीकृष्णशास्त्रिणः, धारवाड-पाठशालायां प्रधानाध्यापकाः प्रकाण्डपण्डिताः श्रीविरूपाक्षशास्त्रिणः च समागताः आसन् । उत्सवस्य-तृतीये दिने अप्पाशास्त्रिणां सभापतित्वे पुणेकर-रावबहादूरपेण्डसे महाभागस्य शंकराचार्यचरितम् अधिकृत्य महाराष्ट्र-भाषायाम् उपन्यासः संपन्नः । वैशाखसुदिचतुर्दश्यां श्रीअप्पाशास्त्रिभिः वर्णव्यवस्थाम् अधिकृत्य महाराष्ट्रभाषायां व्याख्यानं कृतम् । तस्य च तात्पर्यं तैः एव अनन्तरं संस्कृतेन निवेदितम् ।

## ५९. कोल्हापुरे आन्दोलनम् ।

कोल्हापुरीयं वेदोक्तप्रकरणम् पठितम् एव वाचकमहाभागैः । यथा खलु अन्यत्र सर्वत्रापि स्वातन्त्र्यान्दोलनं प्रवृत्तं तथा कोल्हापुरेऽपि तत् एतत् प्रसृतम् आसीत् । अत्र स्वातन्त्र्यान्दोलनकर्तारः प्रो. **विजापूरकर**-पं. **सातवळेकर**प्रभृतयः आसन् । श्री**विजापूरकर**महोदयैः ग्रन्थमाला इति मासिकपत्रं प्रकाशितम् । तदनु समर्थसंज्ञकं साप्ताहिकपत्रम् एतैः प्रारब्धम् । तदुत्तरं पुनः विश्ववृत्तम् इति मासिकपत्रकं समुपक्रान्तम् । पत्रिकात्रयम् अपि एतत् मराठी-भाषायाम् एव प्रकाश्यते स्म । पं. सातवळेकराणाम् अपि लेखाः अत्र प्रकाश्यन्ते स्म । मुंबईतः प्रकाश्यमाने राष्ट्रमतसंज्ञके पत्रेऽपि एतेषां प्रबन्धाः प्रकाशिताः । अप्पाशास्त्रिणः अपि विद्याविलासः, समर्थः, विश्ववृत्तं, राष्ट्रमतं चेति पत्रेषु मध्येमध्ये मराठी-भाषया लिखन्ति स्म । एतानि पत्राणि स्वातन्त्र्यान्दोलनस्य पुरस्कारकाणि आसन् । कोल्हापुराधिपतिः च इङ्ग्रज-राज्यानुशासनस्य भक्तः आसीत् । अतश्च तस्य पत्रिका-संपादकानां तल्लेखकानां च उपरि क्रूरदृष्टिः आसीत् । विश्ववृत्त-मासिकपत्रे पं. सातवळेकराणां "वैदिक

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रार्थनेची ओजस्विता " इत्ययं लेखः प्रकाशितः। तम् अधिकृत्य अभियोगः प्रचलितः। पं. सातवळेकराः लुप्तत्वेन स्थिताः। अभियोगस्य च अस्य निर्णयः श्रीपण्डितरावप्रमुखानां केषांचित् पुरस्कारेण युरोपीयन्यायाधीशस्य पुरतः एवं संवृत्तः यत् लेखः अयं निर्दोषः एव इति। तदानीं पं. सातवळेकराः प्रकटीबभूवुः। किन्तु परिपीडाशङ्कया ईशपुत्रीये १९०८ वर्षे द्वाभ्याम् अपि श्रीविजापूरकर-सातवळेकराभ्यां कोल्हापुरं परित्यक्तम्।

**६०. अप्पाशास्त्री कारागृहे बध्यताम्।**

इदानीं कोल्हापुरे राजविरोधिनः केवलं श्रीअप्पाशास्त्रिणः एव आसन्। सोऽयं विरोधः द्वेधा। प्रथमः तु तस्य प्रकारः धार्मिकः। द्वितीयः तु राजकीयः। धार्मिकः विरोधः पुनः वेदोक्तान्दोलनविषयकः। तत्र कोल्हापुराधिपतेः तदनुकूलशिष्यस्वामिनां च अप्पाशास्त्रिभिः प्रखरः विरोधः कृतः इति ज्ञातमेव इदं पाठकानाम्। राजकीयः विरोधः अपि द्विप्रकारकः। अन्तर्गतराज्यानुशासनविषयकः एकः। इङ्ग्रजराज्यानुशासनविषयक. द्वितीयः। प्रथमः पुनः कोल्हापुरीय-लोकसभा-संस्थापनस्य अभिनन्दनेन, कोल्हापुराधिपतेः 'किं कृतं महाराजेन?' इति कार्यपरीक्षणेन च अप्पाशास्त्रिभिः संपादितः। द्वितीयः विरोधः पुनः श्रीमदप्पाशास्त्रिणां प्रबन्धेषु स्वदेश-धर्म-पुरस्कारेण प्रत्यक्षं परिस्फुरति स्म। अत एव स्वराज्यस्थः कण्टकः एव अयम् इति बुद्धिः कोल्हापुराधिपतेः बभूव। एतां च विरोधिनीं प्रवृत्तिं स्थगयितुं कोल्हापुराधिपतिना भूरिनियन्त्रणानि कृतानि। 'मानहानिव्यञ्जकलेखने प्रकाशिते सति सहस्ररूप्यकाणि दण्डः प्रदेयः स्यात्। किं च कोल्हापुरनिवासार्थं प्रतिभूः आवश्यकः' इति निर्बन्धौ कोल्हापुरेश्वरेण श्रीमत्सु अप्पाशास्त्रिषु स्थापितौ।

भट्टविद्याभूषणतांबेशास्त्री नाम कश्चित् विद्वत्-प्रवरः श्रीअप्पाशास्त्रिणां सुहृद् आसीत्। तेन **कुण्डार्कः** इति संस्कृत-ग्रन्थस्य महाराष्ट्रभाषायां विवरणं कृतम्। अस्य च पुस्तकस्य प्रकाशनं प्रतिश्रुतम् अप्पाशास्त्रिभिः। किन्तु एतादृश-प्रतिबन्ध-बाहुल्यात् न संघटितम् एतत्।

अस्मिन् च संकटे बहु प्रयत्य सूनृतवादिन्याः विंशतिः अङ्काः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अप्पाशास्त्रिभिः प्रकाशिताः। सूनृतवादिन्याः प्रारम्भेऽपि कोल्हापुरीयं राजकीयादि-वातावरणं प्रतिकूलम् आसीत् अप्पाशास्त्रिणाम्। अत एव वाईक्षेत्रे एव निवासः कृतः एतैः। अभियोगानन्तरं तु श्रीमत्-पन्तामात्यानां कथनेन एते पुनरपि कोल्हापुरं प्रत्यागताः आसन्। किन्तु इदानीं कोल्हापुरीयं सर्वम् अपि श्रीमदप्पाशास्त्रिणां प्रतिकूलं बभूव। श्रीमत्-पन्तामात्याः अपि कोल्हापुरनरेशस्य एव सेवकाः। अतः अप्पाशास्त्रिभ्यः आश्रयस्य प्रदानं नाम कोल्हापुराधिपतेः रोषाय आमन्त्रणम् एव आसीत्। विचिन्त्य च एतत् पन्तामात्यमहोदयैः अपि स्वाश्रयः शिथिलीकृतः। तथापि अप्पाशास्त्रिभिः स्वविचार-प्रकटन-पारतन्त्र्यं नैव स्वीकृतम्। इदानीम् अपि तेषां सूनृतवादिनीभियं सर्वथा समुद्धूल्य ' किमिदानीमनुष्ठेयं ब्राह्मणैः ? " (सू. वा. २।१–२) वर्णव्यवस्थायामाक्षेपाः समाधिः च। (सू. २।८–९–१०–११), ' अपि नाम परिवर्तनीयं स्वरूपं धर्मस्य?' (सू. २।१४) इत्यादि धार्मिकान्, तथैव ' केसरिणि राजविद्रोहः (सू. २। ११–१२–१३) ' धर्माधिकरणे तिलकोपन्यासः ' (सू. २।१५–१७) ' महात्मनस्तिलकस्य निर्वासनम् ' ( सू. २।१६ ) इत्यादि राजकीयान् च लेखान् पर्जन्यवर्षम् आविष्करोति स्म। कोल्हापुरनरेशः पुनः सनातनधर्मपरम्परायाः इङ्ग्रजराज्यविरोधकानां स्वातन्त्र्यान्दोलनस्य च सर्वथैव विरोधकः अवर्तत। संतप्तेन च कोल्हापुराधिपतिना आदिष्टम् —

" गृह्यताम्, अप्पाशास्त्री कारागृहे बध्यताम् " इति।

कोपः तावत् अयं कोल्हापुरमहाराजस्य श्रीमत्-पन्तामात्यमहाभागैः मनाक् इव कथंचित् सौम्यः कृतः। विज्ञापिताः च अप्पाशास्त्रिणः कोल्हापुरराज्यपरित्यागार्थम्। गृहीतार्थैः अप्पाशास्त्रिभिः पन्तामात्यानां सूचना शिरसिकृता।

### ६१. सप्ततारे ततश्च पुण्यपत्तने।

इदानीं १८३० तमं शकवर्षं समाप्तप्रायम्। सूनृतवादिन्याः द्वितीयखण्डस्य विंशतितमः अङ्कः प्रकाशितः एव आसीत्। अतः परं तु कोल्हापुरे अस्याः प्रकाशनम् अशक्यम् एव इति। कोल्हापुर-राज्यात् अन्यत्र गमनम् आपतितम्। अप्पाशास्त्रिभिः सप्ततार-( सातारा )-नगरे सूनृतवादिन्याः प्रकाशनस्य व्यवस्था विहिता, किन्तु तत्रापि ग्रन्थिज्वरस्य पीडा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रारब्धा । उच्यते खलु **'प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः'** इति । अतश्च सप्ततारपुरं त्यक्त्वा पुण्यपत्तनं प्रति समागताः अप्पाशास्त्रिणः । तत्र च ५७३ सदाशिव-वीथी इत्यत्र निवास-सौकर्यं विधाय पत्रिकयोः मुद्रणं व्यवस्थापयितुं समुपचक्रमिरे । किन्तु दौर्भाग्यवशात् निसर्गतः एव पुण्यमये पुण्यप्रदेशेऽपि चन्द्रिकायाः सूनृतवादिन्याः च संमुद्रणस्य सौकर्यं न लब्धम् । स्वकीयं मुद्रायन्त्रम् अपि संस्थापयितुं नैव पारितम् अप्पाशास्त्रिभिः । चन्द्रिकायाः कृते पूर्वं निर्धारिता नीवी-धन-व्यवस्था अपि नाद्यापि परिपोषम् अवाप । मुहुर्मुहुः आपतितैः संकटैः अप्पाशास्त्रिणां जीवनं धनहीनं विपन्मयं चासीत् । समाहितमनस्कानाम् अपि एतेषां मनः पत्रिकयोः प्रकाशनव्यवस्थायाः चिन्ता व्याकुलीचकार । अतः च प्रकाशनार्थं स्थानान्तरम् एव निर्धारितम् एतैः ।

**६२. मोहमय्यां पत्रिका-प्रकाशनम् ।**

**'राष्ट्रमतम्'** इति संज्ञकं महाराष्ट्रभाषामयं वृत्तपत्रं मोहमयीतः प्रादुर्भवति स्म । अस्य पुनः प्रकाशनस्थानं 'वर्तमान एजन्सी, गिरगांव' इति आसीत् । **राष्ट्रमत**-पत्रिकायाः लेखकवर्गे अप्पाशास्त्रिणाम् अपि नामधेयं संनिविष्टम् आसीत् । अप्पाशास्त्रिणां स्वकीय-संस्कृतनिष्ठं प्रखरं भारत-प्रेम **राष्ट्रमत**-संचालकेन पूर्वोक्त-संस्थायाः कार्याध्यक्षेण **गणपतराव मोडक**-संज्ञकेन महाशयेन प्रत्यक्षीकृतम् आसीत् । अयम् अपि पुनः महाभागः तादृशः एव आसीत् । अतश्च समानशीलयोः एतयोः सौहार्दम् अविलम्बितम् एव मूर्तताम् आपन्नम् । व्यसने मित्रपरीक्षा संपद्यते । एतस्यां च मैत्री-परीक्षायां समुत्तीर्णः एव श्रीमान् सुगृहीत-नामा **गणपति मोडक**महाभागः । सूनृतवादिनी च १८३१ शकवर्षस्य ज्येष्ठतः मोहमय्यां वर्तमानएजन्सीद्वारा प्रकाशितुम् उपक्रान्ता । द्वितीय-खण्डस्य एकविंशः अङ्कः इदानीं मोहमय्यां ज्येष्ठमासीयशुक्लतृतीयायां प्रकाशम् आपन्नः । तस्मिन् च अङ्के श्रीमदप्पाशास्त्रिभिः समुपवर्णितं सर्वम् एतत् विपज्जालम् । चन्द्रिकायाः अपि प्रकाशनस्य भारः वर्तमान-एजन्सी-संस्थायाम् एव निक्षिप्तः । इदानीं पत्रिकयोः प्रकाशनस्य चिन्ता मनाक् इव अप्पाशास्त्रिणां हृदयं परित्यक्तवती ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं १८३१ शकवर्षीय-ज्येष्ठतः पत्रिका-प्रकाशनं मोहमयीतः प्रक्रान्तम्। प्रायः वर्षावधि स्थगितायाः संस्कृतचन्द्रिकायाः अपि प्रकाशनं संबभूव। चन्द्रिकायाः चतुर्दश-खण्डस्य १०–११–१२ इति अन्तिमम् अङ्क-त्रयं १९०९ वर्षीये एप्रिलमासे प्रकाशितम्। चतुर्दशखण्डस्य नवम-संख्या-प्रकाशनपर्यन्तं संपादकस्थाने श्रीअप्पाशास्त्रिभिः प्रथमसंपादकस्य श्रीमतो **जयचन्द्रशर्मणः** एव नामधेयं समुल्लिख्यते स्म। इदानीं पुनः 'वर्तमान एजन्सी' संस्थायाः संचालकेषु अन्यतमस्य **अच्युतरावमोडक**-महाशयस्य आग्रहेण सेयं रीतिः परिवृत्ता। तदारभ्य चन्द्रिकायाः मुखपृष्टे एवम् उल्लिखितम् —

'सुगृहीतनाम्ना पण्डितेन

पं. **जयचन्द्रशर्म**सिद्धान्तभूषणभट्टाचार्येणादितः प्रवर्तिता

**संस्कृतचन्द्रिका**

नाम मासिकपत्रिका

राशिवडेकरेण श्रीअप्पाशर्मविद्यावाचस्पतिना संपादिता।' इत्यादि। **श्रीजयचन्द्रभूषण**महोदयाः तु सूनृतवादिनीप्रारम्भसमयतः एव श्रीकाश्यां निवसन्ति स्म। पत्रिकयोः प्रकाशनं वर्तमानएजन्सीद्वारा समभवत्, तथापि मुद्रणम् एतयोः मोहमय्यां वेङ्कटेश्वर-वन्देमातरम्-राष्ट्रमतप्रभृतिमुद्रणालयेषु संवृत्तम्।

**६३. भारतधर्ममहामण्डलतः सन्मानपत्रद्वयम्।**

श्रीअप्पाशास्त्रिणां सनातनधर्मसमर्थकत्वं सर्वत्र विश्रुतं बभूव। भारतधर्ममहामण्डलस्य कार्यकलापान् अधिकृत्य अपि सूनृतवादिन्यां सुष्ठु विवेचनं कृतम् अप्पाशास्त्रिभिः। स्वपत्रिकाद्वारा च भाषणद्वारा च स्वदेश-स्वधर्म-स्वसमाजविषयकाः स्वकीयाः संस्कृत-विचाराः प्रकटीकृताः एतैः। अप्पाशास्त्रिणः इत्येकं तदानीं पण्डित-मण्डली-मण्डनायमानं रत्नमेव आसीत्। पत्रिका-प्रचार-कौशल्येन, भाषा-सौष्ठवेन, प्रखर-धर्मनिष्ठया, तादृश्या एव स्वराष्ट्रभक्त्या, व्याख्यानचातुर्येण च एते भारतीयसंस्कृत-विश्वस्य अलंकारः इव अभूवन्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पाठकमहाभागा: ! विद्यैव तावत् मानुषाणां प्रधान: अभ्युदयहेतु: । सा च निरस्तसर्वसंशया निश्चितनिष्ठा निर्दोषा विनयसमुपेता च सती सुविशदा सरस्वती इव शोभते। आसीत् च विद्यावाचस्पतीनां विद्या तादृशी एव। तत् एतत् एतेषां सर्वशास्त्रपारदर्शित्वं संवीक्ष्य प्रीतेन वाराणसेय-भारतधर्ममहामण्डलेन १८३१ शकवर्षीयचैत्रसुदिदशम्यां (१९६६ वैक्रम-वर्षे) विद्या-मानपत्रं श्रीअप्पाशास्त्रिभ्य: वितीर्णम्। तत्रैव विद्यालंकार: इति बिरुदं समर्पितं मण्डलेन। अयं च अस्य संमानपत्रस्य आरम्भ-श्लोक: —

'महतस्तमस: पारे पुरुषं ह्यतितेजसम्।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नम: ॥'

एवं एतादृशं मृत्युविजयनिदानं ज्ञानं श्रीअप्पाशास्त्रिणां बिरुदसमर्पणेन पूजितं मण्डलेन।

किन्तु अप्पाशास्त्रिण: केवलं शास्त्रमात्रनिष्णाता: पण्डिता: नासन्। 'य: क्रियावान् स पण्डित:' इत्यभियुक्तोक्ति: श्रीअप्पाशास्त्रिषु सार्थम् अन्विता आसीत्। तै: हि विद्यावृद्धये धर्मप्रचाराय च नितान्तं प्रयत्य भाषणमाला: लेखमाला: पत्रिकामाला: च प्रादुर्भाविता: आसन्। समुचित-धर्मोपदेशकस्य सुष्ठु कार्यम् एतै: संपादितम् आसीत्। अत एव विद्या-लंकार: इति बिरुदं समर्पितवता अपि महामण्डलेन अप्पाशास्त्रिणां सत्कृतौ मनाक् इव न्यूनता अनुभूता। अत एव च तदानीम् एव द्वितीयम् अपि एकं '**महोपदेशक**'-मानपत्रं मण्डलेन अप्पाशास्त्रिषु वितीर्णं, यत्र उक्तम् —

'भवतो गुणै: प्रसन्नेयं विराड्-धर्म-सभा भवन्तं महोपदेशकाधिका-रोपाधिभ्यामलंकृत्य प्रसन्नतामेति।' इति।

अनेन अखिल-भारतीय-संस्थया सत्कृतानाम् अप्पाशास्त्रिणां गौरवं परमं महिमानं लेभे। संस्कृत-विद्याप्रचाराय सनातनधर्म-प्रचाराय च ये ये प्रयासा: अप्पाशास्त्रिभि: अनुष्ठिता: तत्तेषां प्राप्तिपत्रम् एव आसीत् इदं मानपत्र-द्वयम्। विशेषत: पुन: द्वितीयम् एव मानपत्रं किमपि महत्त्वं बिभर्ति। यत्रत्य: हि प्रारम्भश्लोक: एतादृश: —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'अकुण्ठं सर्वकार्येषु धर्मकार्यार्थमुद्यतम् ।
वैकुण्ठस्य हि तद्रूपं तस्मै कार्यात्मने नमः ।। इति ।

धर्मकार्यार्थम् उद्यतत्वम् एतेषां न हि संमानपत्रम् अपेक्षते स्म। किन्तु समुत्तेजनाय महामण्डलेन एव आविष्कृतः अयं सत्कार-मार्गः इति सुज्ञेयम्। न हि क्वापि उपलब्धम् अस्माभिः उपाधिप्राप्तये परीक्षापाठ्य-ग्रन्थानाम् अध्ययनं परीक्षार्थं समुपस्थानं वा अप्पाशास्त्रिणाम्। किन्तु अमीषां कार्यम् एव आलोक्य अखिल-भारतीय-विद्वद्भिः, तादृशसंस्थाभिः च संमानिताः एते ।

**६४. १८३१ शकवर्षीयः हुबळी-शांकर-महोत्सवः ।**

१८३० शकवर्षीयमहोत्सवस्य वृत्तं प्राक् निवेदितम् । ३१ तमे वर्षे बहवः विभिन्नप्रदेशीयाः श्रीशंकराचार्यमहोत्सवार्थं समागताः। धारवाडतः पं. **श्रीकृष्णशास्त्रिणः**, पं. **विरूपाक्षशास्त्रिणः**, पुण्यपुरात् B. A. बिरुदशाली **माधवरावमोडक**महाभागः, श्रीअप्पाशास्त्रिणः मोहमयीतः श्री. **विश्वनाथ-मराठे**प्रभृतयः ऋतुपुर-नरगुन्द-मूळगुन्द-नवलगुन्द-प्रभृति-कर्णाटक-प्रदेशीय-विभिन्नग्रामेभ्यः अपि भूयांसः एव च्छात्रादयः उत्सवार्थम् आगताः। अस्मिन् उत्सवे चतुर्थ-दिवसे छात्र-परीक्षोत्तरं श्रीअप्पाशास्त्रिणाम् 'अष्टादश-पुराणानि' इति विषयम् अधिकृत्य उपन्यासः प्रारब्धः। किन्तु वृष्टिवशात् अयम् अर्धे एव विच्छिन्नः। पञ्चमे च दिवसे पुनः प्रवृत्तः अयं परिसमाप्तः। पारितोषिकाणि च्छात्रेभ्यः वितीर्णानि। तदुत्तरम् अप्पाशास्त्रिभिः पुनरपि संस्कृतभाषया उपन्यासः प्रारब्धः। विषयः तु 'अपि नाम मृता संस्कृतभाषा' इत्ययम् अभूत् । एनम् एव अप्पाशास्त्रिणाम् प्रतिपाद्यम् अन्ते **श्रीविरूपाक्षशास्त्रि-श्रीकृष्णशास्त्रिणौ** उपोद्बलयामासतुः ।

श्रीमदप्पाशास्त्रिणां भाषासौष्ठवसमेतं वक्तृत्वम् आकर्ण्य वङ्गीयैः 'विद्यावाचस्पतिः' इति बिरुदम् एतेभ्यः समर्पितम् आसीत् । कर्णाटक-प्रदेशीयाः वृद्धमहत्तराः अद्यापि सभक्त्युन्मेषम् एव संस्मरन्ति श्रीमदप्पा-शास्त्रिणां सर्वाङ्गीण-सौष्ठव-शालि वचोविन्यास-विलासम् । अद्यापि किमपि निधानम् इव नितरां संरक्षन्ति कर्णाटक-पण्डिताः अप्पाशास्त्रिणां वाङ्मयं यशः। अहो एतेषाम् अप्पाशास्त्रिषु आदरः ! !

यद्यपि सर्वत्रैव संवृत्तः परिचय-स्नेह-प्रभावः श्रीअप्पाशास्त्रिणां तथापि कर्णाटकप्रदेशीयः एतेषां सुहृद्वर्गः भूयिष्ठः एव आसीत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

६५. पुराणानुवादप्रपञ्चः ।

१८२५ तमे शकवर्षे श्रीमदप्पाशास्त्रिभिः ऋणनिर्यातनाय वाई-क्षेत्रीय-पुराण-प्रकाशन-मण्डल्याः कृते श्रीविष्णुपुराणं महाराष्ट्रभाषायाम् अनूदितम् इति कथितपूर्वम् एतत् । तदानीम् एव कस्मिंश्चित् पत्रे केरलीयनृपवर्याय मानविक्रमममहोदयाय निवेदितम् एतैः —

'पुनः पुराणं च भविष्यसंज्ञं नृपप्रकाण्डा अनुवादयिष्ये ।
भारं लघूकर्तृमृणस्य मूर्ध्नि स्थितं गरीयांसमजस्रमेव ॥' इति ।

यदा पुनः कोल्हापुरस्य प्रातिकूल्येन सूनृतवादिन्याः प्रकाशनार्थं वाईक्षेत्रे निवासः प्रारब्धः, तदैव अप्पाशास्त्रिभिः मोदवृत्त-कार्याध्यक्षस्य अनुमत्या तदर्थं भविष्यानुवादः प्रारब्धः । किन्तु 'प्रामादिकः किल समयबन्धः' इति यदा सूनृतवादिन्याः मुद्रण-विषये मोदवृत्ताधिपतिना उक्तं, तदा अप्पाशास्त्रिभिः परित्यक्तं मोदवृत्तमुद्रणालयं, निवेदितं च सूनृतवादिन्याम् — 'इतः पूर्वं च मोदवृत्तयन्त्राधिपतेः प्रार्थनया चाग्रहेण च परित्यज्याप्यावश्यकमात्मीयं कार्यं भौमवासरं यावदनुवादितं महाराष्ट्रभाषया भविष्यपुराणमस्माभिः । उत्तरपर्वण एव केवलमध्यायत्रयमनुवादितम् । तदतः परं मोदवृत्ते प्रकाश्यमानाः प्रकाशयिष्यमाणा वा पुराणानां मन्वादिस्मृतीनां वाऽनुवादाः श्रीअप्पाशर्मविद्यावाचस्पतिप्रणीता इति न केनापि भ्रमितव्यम् ।' इति ।

ततश्च मोदवृत्त-संपर्क-त्यागोत्तरं चन्द्रिका-सूनृतवादिन्योः प्रकाशने निमग्नैः अप्पाशास्त्रिभिः भविष्यानुवादाय न लब्धः अवसरः । तथापि मध्ये मध्ये समवलम्ब्य समयं कियन्तम् अपि तैः पूरितः अयम् अनुवादः । अनुवादः चायं वाईक्षेत्रीय-पुराण-प्रकाशन-मण्डल्या एव १८३१ शकवर्षे प्रकाशितः ।

पुण्यपुरीय-गणेशविष्णुचिपळूणकरमण्डल्याः कृते श्रीमन्महाभारतानुवादः प्रारब्धपूर्वः एतैः । आदि-सभा-पर्वणोः च अनुवादः श्रीभानु-श्रीवातार-श्रीआठल्येमहाभागानां त्रयाणां साहाय्येन कृतः एतैः । सोऽयं १९०४ तमे ख्रिस्तवर्षे प्रकाशितः । अस्मिन् १८३१ तमे वर्षे अप्पाशास्त्रिभिः श्रीमन्महाभारतस्य वनपर्व संपूर्णतया अनुवादितं प्रकाशितं च समभवत् एतत् । एवं शान्तिपर्वणः अपि अनुवादः श्रीमोडकसाहाय्येन संपादितः एतैः । सोऽपि अनुपदम् एव प्रकाशितः अभवत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

### ६६. संस्कृतचन्द्रिकाया विरामः ?

पठितपूर्वम् एव पाठकैः यत् १८३१ शकवर्षस्य आरम्भे चन्द्रिकायाः चतुर्दशखण्डस्य अन्तिमाङ्कत्रयस्य प्रकाशनं 'वर्तमान एजन्सी' द्वारा समभूत् इति। मोहमयीम् उपगतायाः चन्द्रिकायाः वार्षिकं मूल्यं रूप्यकद्वयम् (विदेशे ७ शिलिंग) अभूत्। तदुत्तरं पञ्चदशखण्डस्य अङ्कद्वयं क्रमशः प्रकाशितम्। त्रयोदशखण्डम् आरभ्य संस्कृत-चन्द्रिकायाः प्रकाशने अप्पाशास्त्रिभिः महती पीडा समनुभूता। इदानीं पुनः यावत् तस्याः प्रकाशने किमपि स्थैर्यं प्राप्यते तावत् एव अन्यैव अवर्णनीया आपत्तिः समापतिता। सा च नाम 'वर्तमान एजन्सी'-संस्थायाः विकलत्वम् एव। अतश्च १९०९ ख्रिस्तवर्षीयात् ऑगस्टमासात् परवर्ती चन्द्रिकायाः प्रपञ्चः केवलं नामशेषः एव समभवत्। अतश्च चन्द्रिकायां प्रारब्धानां निबन्धानां कथानां च भूयांसः एव अंशाः अपूर्णत्वेन एव स्थिताः। "**लावण्यमयी**" इति **बङ्किमचन्द्रस्य** बृहत्कथा अप्पाशास्त्रिभिः संपूर्णतयैव (वङ्गीय-भाषातः) संस्कृतभाषायाम् अनुवादिता। किन्तु **इन्दिरा, देवी कुमुद्वती, कृष्णकान्तनिर्वाणम्** इत्यादिकथाः अपूर्णाः एव स्थिताः। एवं पञ्चमखण्डे प्रारब्धम् **अधर्मविपाकं** नाटकम् अपि नैव पूर्णतां प्राप्तम्।

चन्द्रिकायाः कनीयसी भगिनी इदानीं ग्राहकमहोदयानां प्रणयातिशयस्य एकमात्रं स्थानम् आसीत्। अतः साऽपि तावत् चिरमेव प्रचरतु इति बुद्ध्या संस्कृत-चन्द्रिकागतं मनः एतैः सर्वथा सूनृतवादिन्याम् एव प्रोतम्। किन्तु इयम् अपि ज्येष्ठभगिन्याः विरहं नैव बहुकालं सोढवती। अत्र पुनः निदानं श्रीअप्पाशास्त्रिलेखनी-प्रभावेण प्रदीप्तायाः चन्द्रिकायाः स्वधर्म-स्वराष्ट्र-निष्ठत्वम् एव। एतत् एव राष्ट्रियं स्वरूपं शासकानां मनःसु रोषम् उत्पादयामास। चन्द्रिका च तद्रोषस्य बलिः अभवत्।

### ६७. यथाप्रतिज्ञं प्रबन्धावतारः।

सूनृतवादिन्याः उद्देशाः तावत् आदर्शाङ्के अप्पाशास्त्रिभिः प्रतिपादिताः एव। एतस्याः प्रथमखण्डस्य पूर्तिनिवेदनावसरे अपि पाठकमहाभागैः सूनृतवादिनीवर्तिनां विषयाणां वैविध्यं परिचितम् एव। यथा प्रथमे खण्डे एवं द्वितीये खण्डे तादृशान् एव प्रबन्धान् अवतारयामासुः श्रीअप्पाशास्त्रिणः। संस्कृतप्रचारस्य कोऽपि अवसरः एतैः न परित्यक्तः। 'भारत-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वर्षीया विद्यार्थिनः' इति विषयम् अधिकृत्य श्रीअप्पाशास्त्रिभिः त्रयोदश लेखाङ्काः प्रणीताः। 'अन्त्यजाश्च सनातनधर्मश्च' 'श्रीमती भगवद्-गीता' 'धर्मशिक्षणं चात्याचाराश्च' 'वैदेशिकस्य हिन्दुतापत्तिः' 'एकवाक्यताया आवश्यकता' 'औत्तरध्रुवदर्शनम्' स्वदेशीयशर्करा-निर्माणम्' 'व्योमयानानि' 'विश्वविद्यापीठम्' इत्यादि नैकविध-विषयकाः प्रबन्धाः, संपादकीयाभिप्रायाश्च किमपि वैशिष्टयं धारयन्ति। स्वातन्त्र्यान्दोलने श्रीमदप्पाशास्त्रिणां विचाराः तीव्रपक्षीयाः आसन्।

बडोदानगर्यां १८३१ वर्षीये कस्मिश्चित् मासे महाराष्ट्रसाहित्य-संमेलनस्य अधिवेशनं संवृत्तम्। तत्र 'भारते एकभाषायाः आवश्यकता' इति विषये व्याख्यानानि कुर्वद्भिः भूयोभिः 'हिन्दीभाषायाः' समर्थनं कृतम्। केवलं बडोदानगराधिपतिना एव संस्कृतभाषायाः एव एकता-सामर्थ्यं प्रतिपादितम्। संस्कृतविद्वांसः अपि अत्र केचित् समुपस्थिताः आसन्। वृत्तमेतत् वर्णितम् अप्पाशास्त्रिभिः —

### ६८. कवलीक्रियामहे विषादेन! (सू. वा. २।४२)

"प्रयच्छामः किल धन्यवादाननेकशो वयं बडोदाधिनाथाय येन महाराष्ट्रभाषाप्रणयिनापि सता संस्कृतभाषायामादरः प्राकाशि। संनिहिताः किलेदानीं संस्कृत-भाषा-पण्डितत्वेन प्रथिता भूयांसः पुरुषाः। एतेषु च कलिकातासंस्कृतविद्यामन्दिरस्य भूतपूर्वा अध्यक्षा महामहोपाध्यायाः **श्रीहरप्रसादशास्त्रिणो डॉ. भाण्डारकराश्चेत्येवमादयः प्रमुखाः।** अत्र च श्रीहरप्रसादशास्त्रिभिरिङ्ग्रेजीभाषयैवोपन्यस्तमिति प्रकाशयन्तः कवली-क्रियामहे विषादेन। **भाण्डारकरमहोदयैस्तु** महाराष्ट्र्या समुपन्यस्तम्। वस्तुतः पुनरनायासोपनतः सोऽयमवसरो यत्र शक्यं संस्कृतभाषायाः सर्वाङ्गरमणीयत्वं च सार्वभौम-पदार्हत्वं च प्रत्याययितुं **हरप्रसादशास्त्रि-प्रभृतिभिः** पारमार्थिकैः पण्डितप्रवरैः। यदि संस्कृतपण्डिता एव समुपेक्ष्य विपत्पङ्कमग्नायाः शिरसि संस्कृतभाषायाः पदं वितरेयुस्तदा कुत्र विकि-रतु समुद्धारकामुका सेयं तपस्विनी सप्रत्याशमात्मनो दृष्टिम्?" इति।

इयं श्रीमदप्पाशास्त्रिणां संपादकीया टिप्पनी संस्कृतभाषायाः सार्वभौमपदोचितत्वमिव विश्वविश्रुतयशसाम् अपि केषांचित् कृतेः अनौचित्यं निःसंकोचं प्रतिपादयति। भारतीयम् ऐक्यं संस्कृतभाषया एव सुशकम् इति बडोदानरेशेन प्रतिपादितेऽपि यत् संस्कृतपण्डितप्रकाण्डा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

असंस्कृतया म्लेच्छभाषया वा एकताविषयकं मनोगतम् उदीरयन्ति तेन खलु नितमां व्यथितान्तःकरणा स्यात् समस्त-भारत-व्यापिनी संस्कृत-भारती इत्यत्र नैव संदेहलेशोऽपि। संस्कृतप्रणयी वैदेशिकोऽपि तावत् खिद्येत अवसरेऽस्मिन् संस्कृत-पण्डितानाम् असंस्कृतोद्‌गारैः। किं पुनः विस्मयास्पदम् अत्र यत् संस्कृतसरस्वतीसेवनमेव जीवनव्रतत्वेन अङ्गीकृतवतां सर्वत्र सर्वथा सर्वविधाभिः सर्वविषयकं संस्कृतभाषायाः सामर्थ्यं निर्दशितवताम् अप्पाशास्त्रिणां लेखनीपदक्रमाः विलपन्ति 'कवलीक्रियामहे विषादेन' इति? इदमेव संस्कृतभाषायाः सार्वभौमभाषास्पदत्वं नाम राष्ट्रभाषात्वम् सूनृतवादिन्याः द्वितीयखण्डस्य ४४ तमाङ्कीय संपादकीय-टिप्पन्याम् अपि समर्थितम् अप्पाशास्त्रिभिः। तत्र विद्यापीठे उपरितनेषु शिक्षणेषु देशीय-भाषाणाम् अन्तर्भावं समालोच्य प्रतिपादितम् अप्पाशास्त्रिभिः —

### ६९. संस्कृतभाषायाः सार्वभौम-पद-परिमण्डनम्।

"अपि च काम्यते किलेदानीं समस्वरमेव निखिलस्यापि भारतवर्षस्य काचिदेकैव भाषा सर्वैः। सा च हिन्दीभाषैव प्रविधेयेत्यभिमन्यते विद्वायमानैः कैश्चित्। न जानीमः कुतो वा नार्हति भाषासु सार्वभौमपदं सर्वाङ्गमनोरमा भगवती गैर्वाणी वाणीति। अत्रोच्यते कैश्चिन्न किल भूयांस एव जानन्ति संस्कृतां वाचमिति। किन्तु तुल्य एवायं दोषः। हिन्दीमपि हि नैव सर्वेऽपि जानन्ति। यथा च सुबोधां हिन्दीं भूयांसो जानीयुरेवं संस्कृतामपि न किल नैव जानीयुः। अद्यापि ननु विद्यत एव कियताप्यंशेन प्रचारः सर्वत्रापि भारते संस्कृतभाषायाः। इतः किल प्राक् पञ्चाशतो वर्षेभ्यो नासीदध्ययनाध्यापनादि-प्रचारो भूयान् भारते वर्ष इङ्ग्रेजी-भाषायाः प्राक् पुनः शतान्नैवासावभवत्। तथापि नन्विदानीं सर्वत्रापि भारते निरर्गलः प्रचार एतस्याः। आपन्नेव च सार्वभौमपदमिदानीमेषा। तद्यदि काम्यते भारतवर्षीयैस्तदा नास्त्येव दुर्घटत्वं सर्वत्रापि संस्कृतभाषायाः प्रचारस्य।" इति। (सू. वा. १८३१ आश्विन ३०)

संस्कृतराष्ट्रभाषात्वस्य प्रतिपादनमिदं सर्वथा न्याय्यम् एव। इदानीम् अपि हि विभिन्नप्रान्तीयानां मिथः विद्वेषेण भारतराष्ट्रस्य विपर्यस्तत्वं परिजिहीर्षुभिः अवश्यं मनसि कर्तव्यम् एतत्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

### ७०. पराकाष्ठा पत्रकला-कौशलस्य ।

गभीरं विविधशास्त्रीयपाण्डित्यं, लोकवृत्तनिपुणत्वं, धर्मप्रचारकत्वं, वाग्मित्वं, कुशललेखकत्वं, राष्ट्रभक्तत्वम् इत्यादिगुणगणाः यथा श्रीमदप्पाशास्त्रिषु प्रकर्षेण समवर्तन्त तथैव पत्रिकाप्रचारणकौशल्यम् अपि एतेषु सुतरां प्रदीप्तम् आसीत् । सूनृतवादिन्याः प्रारम्भे 'त्रिशत्येव ग्राहकाणां दुर्लभा' इति भूयोभिः एव प्रतिपादितम् आसीत् । किन्तु अप्पाशास्त्रिणां पत्रप्रचारण-नैपुण्येन अचिरादेव सहस्रावधिग्राहकाः सूनृतवादिन्याः स्पृहयालवः समभवन् । देशविदेशेषु भूयान् एव अस्याः प्रचारः संवृत्तः ।

सुनृतवादिनी खलु साप्ताहिकी वृत्तान्त-प्रधाना पत्रिका आसीत् । वृत्तपत्रस्य च वृत्तानां प्रत्यग्रहत्वम् इत्ययम् आवश्यकतमः महान् गुणः । वृत्तपत्रसंपादकस्य कौशल्यं वृत्तानां नवीनत्वे साद्यस्कत्वे च प्रकटीभवति । आसीत् च अयं गुणः श्रीअप्पाशास्त्रिषु । तथा हि ।

१९०८ तमखिस्तवर्षीयजुलैमासस्य द्वाविंशे दिने (२२।७।१९०८) बुधवारे रात्रौ नववादनसमये श्रीलोकमान्यतिलकमहोदयानां द्वीपान्तरनिवासस्य शिक्षा संजाता । तद्विषयकम् अभियोगकर्म तत्समये समाप्तम् । इयं वार्ता द्वितीयदिने गुरुवासरे सूनृतवादिन्यां प्रकाशिता । तस्मिन् अङ्के द्वितीयतृतीयपृष्ठयोः सर्वे स्तम्भाः कृष्ण-मसी-दण्डैः रेखिताः । तिलकमहाशयस्य दण्डन-विषये संतापः अनेन व्यक्तीकृतः अप्पाशास्त्रिभिः । वार्ता चेयम् इत्थं प्रकाशिता ।

---

हा धिक् कष्टम् ! ! !

दण्डितो

महात्मा तिलकः

बुधे निशि नववादनं यावत्प्रचलितमभियोगकर्म । अन्ततश्च दण्डितः श्रीमांस्तिलकमहोदयः षड्वार्षिकं द्वीपान्तरवासं रूप्यकाणां च सहस्रमिति ।

---

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतस्मात् प्रतीयते सूनृतवादिन्याः अङ्कस्य मुद्रणसमये एव प्राप्ता इयं वार्ता श्रीअप्पाशास्त्रिभिः इति। एतेन खलु व्यवसायेन तिलकमहाशयानाम् अभियोगकर्मणि दत्तावधानाः आसन् अप्पाशास्त्रिणः इत्यपि स्फुटीभवति। यदा च दण्डिताः तिलकमहाभागाः मण्डालेकारावासं प्रतिप्रस्थिताः तदा सूनृतवादिन्याः द्वितीयखण्डस्य त्रिंशेऽङ्के 'हा समय! दारुणः खल्वसि।' इतिशीर्षकः तिलकप्रयाणम् उद्दिश्य प्रधानलेखः अप्पाशास्त्रिभिः प्रकाशितः। यस्य शीर्षस्थाने लघीयसी तिलकप्रतिमाऽपि संमुद्रिता अस्ति। तत् एवं कौशल्यम् अप्पाशास्त्रिणां वृत्तपत्रपाण्डित्यकलशायितम् इति विस्पष्टं प्रतीयते।

एवं सूनृतवादिन्याः २ खण्डस्य १९ अङ्के समुपलभ्यते "संप्रति किल दिने दिने सविशेषमेवोन्नतिमुपारोहति चीनप्रदेशः। सोऽयमचिरादेव निखिलेऽपि भूवलये प्रधानतरो बलवत्तमश्च स्यात्। न केनाप्यपहन्तुं शक्येत।" अनेन हि दूरदर्शित्वम् अप्पाशास्त्रिणां पत्रकलाधोरण्याः स्पष्टीभवति।

## ७१. सागरा प्राण तळमळला — भारतमातेचें उत्तर

कै. स्वातन्त्र्यवीर-सावरकराणां महासागर-महोत्पातः सुप्रसिद्धः। ततश्च स्वकीयमुक्तये कृतप्रयत्नाः अपि एते दुर्दैववशात् पुनरपि आङ्ग्लशासकानां हस्तसात् बभूवुः। ततः प्राक् यदा पुनः एते इङ्ग्लडदेशे स्थिताः तदा समुद्रतीरस्थं ब्रायटनसंज्ञकं ग्रामं गताः। सोऽयं समयः २९–७–१९०९ दिवसात्मकः। तदानीं स्व-मातृभूमि-स्मरणेन गाढेन भारत-भू-प्रणयेन च संभृतान्तःकरणानां तस्याः पारतन्त्र्यवशात् व्याकुलित-हृदयानां च एतेषां मुखारविन्दात् 'सागरा प्राण तळमळला' (सागराकुलाः प्राणा मे।) इति सुप्रथिता कविता आविर्बभूव। सेयं मुम्बईवर्तिनि राष्ट्रमतपत्रे प्रकाशं गता। प्रपठ्य चैतां समनुशील्य च भावम् अत्रत्यं द्रुतान्तःकरणैः अप्पाशास्त्रिभिः अपि तस्याः कवितायाः धीरप्रदम् उत्तरं विवृण्वती महाराष्ट्रभाषामयी "भारतमातेचें उत्तर" (भारतमातुः उत्तरम्) इति कविता प्रणीता। प्रकाशिता च सेयं राष्ट्रमत-पत्रिकायाम् एव।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

७२. वेणीसंहार-व्याख्या।

मोहमयीविभागीयेन विश्वविद्यापीठेन ईशपुत्रस्य १९१०-११ वर्षयोः महाविद्यालयस्य प्रथमवर्षार्थं (पी. ई. श्रेण्याम्) वेणीसंहारं नाम नाटकं पाठ्यत्वेन नियुक्तम्। तस्मिन् च नाटके अप्पाशास्त्रिभिः १८३१ शकवर्षस्य मार्गशीर्षे (डिसेंबर १९०९) बालबोधिनी व्याख्या विरचिता। मूलसंहितायाः संशोधनार्थम् अष्ट पुस्तकानि समासादितानि अप्पाशास्त्रिभिः। तानि च यथा —

" तत्रादिमं मेजर क्यांडी महोदयेन पुण्यपत्तने १७७८ तमे शकाब्दे शिलायन्त्रे संमुद्रितम्। अपरं श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यप्रणीत-व्याख्यासनाथं तेनैव कलिकातायां मुद्रितम्। इतरन्निर्णयसागराधिपतिना मोहमय्यां प्रकाशितं श्रीजगद्धरव्याख्यासमुल्लसितम्। अन्यद् गोडबोले इत्युपाह्वैः श्रीनारायणरायैः पुण्यपत्तने मुद्रापितं जगद्धरव्याख्यया प्रोद्भासितम्। तदितरद् द्रविडमहोदयैः संमुद्रितं मूलमात्रम्। तदपरं हस्तलिखितं कोल्हापुरनिवासिभिः श्रीबालकृष्णाचार्यखुपेरकरैः समर्पितम्। अन्यच्चान्ध्राक्षरमुद्रितम्। इतरच्च स्वीयं हस्तलिखितमिति।'

एवं प्रायः समस्त-भारत-व्यापिनां वेणीसंहारपाठानां समवलोकनं कृत्वा श्रीमदप्पाशास्त्रिभिः शुद्धपाठः संशोधितः। अतः अयं किमपि महत्त्वम् आवहति। वेणीसंहार-नाटके च प्राचीनं टीकाद्वयं विद्यते। तद्विषये प्रोक्तमप्पाशास्त्रिभिः —

" अधिगतं चात्र प्राचीनं व्याख्याद्वितयमस्माभिः। तत्रादिमा महामहोपाध्यायेन श्रीमता जगद्धरेण प्रणीता। अपरा तु श्रीमता तारानाथ-तर्कवाचस्पतिभट्टाचार्येण। उभावप्येतौ व्याख्यातारौ विद्वत्तमावभिवन्द-नीयौ चास्माकमित्यत्र नास्ति नः संदेहलेशोऽपि। तथापि तु नांशतोऽपि व्यापारितमेताभ्यां व्याख्यानिर्माणे सावहितं चेत इत्यनन्यगत्यैव वक्तव्यं भवति।" इति।

अतः परं श्रीअप्पाशास्त्रिभिः पूर्वोक्तव्याख्याद्वये वर्तमानाः त्रुटयः उपवर्णिताः। वेण्यां च समीचीनव्याख्यायाः अभावात् एव तैः अस्यां व्याख्या विरचिता। व्याख्या चेयं सुविस्तरा।

महाविद्यालयीनविद्यार्थिनां विशेषोपयोगाय इङ्ग्रेजी-टिप्पनी अपि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्ते निवेशिता अप्पाशास्त्रिभिः। तदानीं पुण्यपत्तने फर्ग्युसनविद्यामन्दिरे श्रीकृष्णरायद्रविडनामानः अध्यापकाः आसन्। तैः एत्र इङ्ग्रजीटिप्पनी विनिर्मिता।

अस्मिन् व्याख्यापुस्तके संस्कृतव्याख्यायाः पृष्ठानि सार्धत्रिशतं वर्तन्ते। नाटकगत-पात्राणां सूचीपत्रम् अपि निवेशितम् अत्र। व्याख्यायाः प्राक् नाट्यशास्त्रपरिचायकः नाटककर्तुः श्रीभट्टनारायणस्य कालनिर्णय-विमर्शपरः च पञ्चविंशतिपृष्ठात्मकः उपोद्घातः संयोजितः। एवमेतत् सर्वाङ्गसुन्दरं वेणीसंहार-व्याख्या-पुस्तकं कोल्हापुरे श्रीवेङ्कटेश्वर-मुद्रणालये (संस्कृतव्याख्यां), पुण्यपत्तने आर्यभूषणमुद्रणालये (इङ्ग्रजी-टिप्पनीं) संमुद्रय श्रीअप्पाशास्त्रिभिः एव प्रकाशितम्। व्याख्याप्रारम्भे नियुद्धे दुर्योधनं हत्वा द्रौपदीयुधिष्ठिरयोः समीपे आगतस्य भीमसेनस्य चित्रम् अपि योजितम्। व्याख्या चेयं श्रीअप्पाशास्त्रिभिः पं. जयचन्द्रशर्म-सिद्धान्तभूषणेभ्यः समर्पिता। षट्श्लोकात्मिका उपायनपत्रिका व्याख्यारम्भे एव विद्योतते। दृश्यन्तां तत्रत्याः केचित् श्लोकाः —

"प्रेयान् सखाऽथ सहजः प्रणयी गुरुर्वा
स्वान्तं बहिश्चरमथोच्छ्वसितं मदीयम्।
बाभाति यः क्षितितले सुकृती द्विजन्मा
श्रीमान् समुज्ज्वलयशा जयचन्द्रशर्मा॥
सिद्धान्तभूषणं प्राहुर्भट्टाचार्यं च यं बुधाः।
वङ्गभूकण्ठहारे यः प्रस्फुरत्तरलायते॥
सादरं सप्रणामं च सभक्त्युन्मेषमर्पिता।
प्रसूनश्रियमभ्येतु व्याख्येयं तत्पदद्वये॥" इति।

पाठकमहोदयाः! श्रीमदप्पाशास्त्रिणां कीर्तिमन्दिरस्य संयोजकाः श्रीजयचन्द्रशर्माणः एव। चन्द्रिकावितरणे विद्यावाचस्पतिबिरुदप्राप्तौ च ते एव कारणभूताः। तेषाम् एव साहाय्येन संस्कृतसरस्वतीसेवायां श्रीअप्पाशास्त्रिभिः संपादितः भूयान् अवसरः। उपकारस्य पुनः अस्य प्रतियातनं दुर्घटम् एव। अत एव व्याख्याम् इमां श्रीजयचन्द्रशर्मणां चरण-सरसीरुहयोः स्थापयित्वा अप्पाशास्त्रिणः प्रार्थयन्ते स्म — 'प्रसूनश्रियमभ्येतु व्याख्येयं तत्पदद्वये' इति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

### ७३. हा हन्त ! अन्तर्हिता सूनृतवादिनी ! !

सूनृतवादिन्याः द्वितीयखण्डस्य अन्तिमः ५३ तमोऽङ्कः १८३१ शकवर्षीये आश्विने शुक्लपक्षीयद्वितीयायां प्रकाशितः। ततश्च द्वितीयखण्डः संपूर्णः। तदुत्तरं १९१० मार्चपर्यन्तं सूनृतवादिन्याः तृतीयखण्डस्य अष्टौ अङ्काः प्रकाशिताः।

विदितम् एव एतत् पाठकानां यत् संस्कृतचन्द्रिका च सूनृतवादिनी च इदानीं मुम्बय्यां 'वर्तमान एजन्सी' द्वारा प्रकाशम् आप्नुतः स्म इति। प्रदीप्तराष्ट्रभक्तिकं 'राष्ट्रमत' इति महाराष्ट्रभाषामयं पत्रं 'वर्तमान-एजन्सी' द्वारा एव प्रसिद्धं भवति स्म। राजद्रोहस्य आरोपं विधाय राजकीयैः अधिकारिभिः वर्तमानसंस्थायाः उपरि बहु-नियन्त्रणानि स्थापितानि। तत्प्रभावात् एव १९०९ तम-ख्रिस्त-वर्षस्य सप्टेम्बरमासे संस्कृतचन्द्रिकाप्रकाशनं प्रतिरुद्धम्। यथा यथा पुनः नियन्त्रणानाम् एतेषां वृद्धि अभवत् तथा तथा राष्ट्रमतस्य अपि प्रचारः स्थगितः। प्रतिबद्धा 'वर्तमानएजन्सी'-संस्था। अन्तर्हिता च तदेकप्रकाशनाधारा संस्कृतवृत्त-पत्रसृष्टेः वासन्तिकं वैभवं चित्रयन्ती धर्मेण तत्त्वज्ञानेन च सह समाज-स्थितिं, स्वराष्ट्रावस्थां, वैज्ञानिकाविष्कारान्, राजकीयतन्त्रं, नानाविध-प्रत्यग्रवार्ताश्च सर्वाङ्गीणमनोरमया संस्कृतभाषया प्रादुर्भावयन्ती निरुपमा पत्रिका श्रीमती सूनृतवादिनी ! प्रभग्नः सर्वथा संस्कृतभाषायाः मनोरमः मनोरथः ! !

एवं स्वधर्मस्य, स्वराष्ट्रस्य, स्वबान्धवानां च समुचिता सेवा एव ययोः उद्देश्यं समभूत् ते इमे द्वे पत्रिके शासकानां रोषाग्नौ नामशेषतां प्रापतुः ! ! !

### ७४. श्रीअप्पाशास्त्रिणां वाचनालयः।

श्रीमदप्पाशास्त्रिणां ग्रन्थसंग्रहः सुविपुलः एव आसीत्। पूर्वतन-हस्तलिखितग्रन्थानां समूहेन, तथा मुद्रितग्रन्थानां समुदायेन संग्रहः अयं सुसमृद्धः आसीत्। पत्रकारत्वेन यदा श्रीमदप्पाशास्त्रिणः प्रसिद्धाः सम-भवन् तदा तेषां निकटे समालोचनार्थं बहवः ग्रन्थाः आगताः। एते ग्रन्थाः सर्वविषयकाः विभिन्नभाषामयाः च आसन्। वेद-वेदान्तमीमांसा-धर्मशास्त्र-पुराण-व्याकरण-योग-साहित्यशास्त्र-काव्य-नाटक-कादम्बरी-पञ्चाङ्ग-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वैद्यक - ज्योतिष - तर्क - नानाविधप्रबन्ध- संस्थावृत्तान्त-क्रमिकपुस्तक-चित्र-संग्रह-पञ्जिका ( डायरी )- नियतकालिकपत्र-प्रभृति बहुविधं साहित्यम् अप्पाशास्त्रिणां ग्रन्थालयं मुहुर्मुहुः भूषयति स्म। एते ग्रन्थाः संस्कृत-मराठी-हिन्दी-वङ्ग-तैलङ्ग-केरल-तामिल-हूण ( इंग्रजी )-भाषामयाः तत्त-ल्लिपिमयाः च आसन्। अप्पाशास्त्रिणां वाचनालये चन्द्रिका-सूनृत-वादिन्योः आदान-प्रदान-प्रसंगेन याः याः पत्रिकाः समागच्छन्ति स्म ताः ताः अपि नैकलिपिमयाः नैकभाषामयाः च आसन्। तत्र कासांचित् दिग्दर्शनं यथा —

**संस्कृते** — विद्योदय-चिन्तामणि-सद्धर्म-रत्नाकर-सहृदयाप्रभृतयः।

**मराठी-भाषायाम्** — केसरी, विश्ववृत्त, भाला इत्यादयः।

**हिन्दी-भाषायाम्** — हिन्दीप्रदीप, सरस्वती, सुदर्शन-प्रभृतयः।

**वंगभाषायाम्** — वंगवासी।

**तामिल-भाषायाम्** — स्वदेशमित्र।

**इङ्ग्रजी-भाषायाम्** — न्यू इंडिया, डॉन, दि टाइम्स्, यंग मुस्लिम ट्रिब्यून-प्रभृतयः।

एवम् एतासु नानाविधभाषालिपिमयपत्रिकासु तत्तादृशपुस्तकेषु च अप्पाशास्त्रिभिः अभिप्रायाः अपि प्रकाशिताः।

नैकविषयाणाम् अभ्यासः, नैकभाषाणां परिचयः, नैकलिपीनां च परिशीलनम् अप्पाशास्त्रिषु प्रकर्षम् अवाप। तथापि सनातनधर्मः, संस्कृतविद्या, भारतवर्षम् इति त्रिके श्रद्धाप्रतिष्ठा सर्वथा अविचला एव आसीत् एतेषाम्।

अयं विपुलः ग्रन्थसंग्रहः प्रसंगवशात् अप्पाशास्त्रिभिः कोल्हा-पुरीय-राजाराम-महाविद्यालय-प्रभृति-संस्थाभ्यः अंशांशतः वितीर्णः।

प्रतिबद्धयोः संस्कृतचन्द्रिका-सूनृतवादिनी-पत्रिकयोः पुनःप्रचाराय अप्पाशास्त्रिभिः स्वीकृतः एव प्रयासः। पर्यवसानं तु अस्य कीदृशम् अभूत् कथं च व्यतीयाय तदुत्तरं जीवनम् अप्पाशास्त्रिणां तत् एतत् उत्तरपर्वणि संवीक्ष्यतां हृदयालुभिः।

* * *

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# उत्तरपर्व।

## १. पुण्यपत्तने प्रशालायाम्।

श्रीमदप्पाशास्त्रिभिः पुण्यपत्तने आगत्य पत्रिकयोः प्रकाशन-भारः मुम्बईवर्ति-वर्तमानसंस्थायां निक्षिप्तः। संस्थायां च एतस्यां प्रतिबद्धायां चन्द्रिका-सूनृतवादिन्योः प्रकाशनम् अपि स्थगितम् अभूत इति निवेदितपूर्वम् एव इदम्। कोल्हापुरे च वाईक्षेत्रे च अप्पाशास्त्रिणाम् आश्रयदातारः गगनबावडा-नृपतयः श्रीपन्तामात्यमहोदयाः एव आसन्। राशिवडे-ग्रामस्थकृषेः अपि किमपि उत्पन्नजातं लभ्यते स्म। अत्र पुण्यपुरे तु अन्यः कोऽपि उदरनिर्वाहोपायः नास्ति इति पुण्य-पत्तनीय-भावे-प्रशालायाम् अप्पाशास्त्रिभिः अध्यापनवृत्तिः स्वीकृता। वेतनं तु प्रतिमासं चत्वारिंशद्रूप्यकात्मकम् आसीत्। वस्तुतः तु दास्यवृत्तिः श्रीमदप्पाशास्त्रिस्वभावस्य एकान्ततः एव विरोधिनी समवर्तत। तथापि पत्रिकयोः प्रचारार्थं संवृत्तम् ऋणं निर्यातयितुं कुटुम्बभरणार्थम् आवश्यकं धनं संप्राप्तुं च कोऽपि धनदः व्यवसायः समपेक्षितः एव आसीत्। अत एव निरुपायतया प्राप्तकालम् एतत् व्यवसायान्तरं संश्रितम् अप्पाशास्त्रिभिः। जीवितावधि पुनः अयं शिक्षकत्वव्यवसायः अप्पाशास्त्रिभिः न परित्यक्तः।

इदानीं पुण्यपत्तने मनागिव स्वास्थ्यं नाम संप्राप्तम् अप्पा-शास्त्रिभिः। यद्यपि चन्द्रिकासूनृतवादिन्योः प्रचाराय न किल प्राभवन् इदानीम् अप्पाशास्त्रिणः, तथापि प्राक्तनस्य ऋणस्य अपाकरणाय लब्धः अवसरः एतैः।

## २. भूयः परिणये गोधूम-शष्कुली-(जिलबी)-परिवेषणम्।

अप्पाशास्त्रिणां तृतीया पत्नी तनयमेकं प्रसूय अचिरम् एव दिवम् आरुरोह इति निवेदितपूर्वम् एतत्। इदानीं १८३२ तमस्य शकवर्षस्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रारम्भे चतुर्थः एषां विवाहः संवृत्तः। सोऽयं कोल्हापुरे समभवत्। कौटुम्बिक-सुखे निःस्पृहैः अप्पाशास्त्रिभिः वृद्धायाः मातुः आदेशात् एव पुनरपि मनःकृतम् इति भाति। अस्मिन् विवाहोत्सवे संवृत्ता एका घटना वृद्धैः कथ्यते। सेयम् —

"अस्य विवाहोत्सवस्य कस्मिंश्चित् भोजन-समारोहे राशिवडे-निवासी 'नाना पहिलवान्' इति ख्यातः कश्चित् मल्लप्रवरः भोजनार्थं पङ्क्तौ समुपविष्टः आसीत्। अप्पाशास्त्रिणः भोजनोपविष्टानां पात्रेषु गोधूमशष्कुलीः परिवेषयन्ति स्म। पङ्क्तौ क्रमेण तं मल्लप्रवरं दृष्ट्वा अप्पाशास्त्रिभिः नवम् एव प्रत्यग्रपरिपूर्णं गोधूमशष्कुलीखचितं बृहद्वर्धमानकम् आनीय मल्लस्य पुरतः एव स्थापितम्। मल्लप्रवरेणापि अमुना संपूर्णम् एव तत् गोधूमशष्कुलीपरिपूर्णं वर्धमानकम् अविलम्बम् एव शून्यं कृतम्।" अहो औदार्यं भोजनदातुः! अहो पटीयस्त्वं भोक्तुः!

### ३. रन्ध्रेष्वनर्था बहुलीभवन्ति।

एवं भूयोऽपि परिणीय यावत् यथावत् प्रचरितुम् उद्युक्तः अप्पाशास्त्रिणां संसाररथः, तावत् एव समापतिता भूयांसः एव अनर्थाः। ऋणापाकरणार्थम् एव शिक्षकत्वं स्वीकृतम् एतैः इति निवेदितपूर्वमेव इदम्। तथापि समये एतस्मिन् अप्पाशास्त्रिणां मातुः शरीरस्वास्थ्यं विनष्टम्। सा हि इदानीं वार्धक्यदशाम् अनुभवन्ती आसीत्। स्वयम् अप्पाशास्त्रिणः अपि व्याधिग्रस्ताः अभूवन्। अनेन प्राप्तधनस्य भूयानेव अंशः कौटुम्बिक-व्ययार्थम् एव समुपयुक्तः अभवत्। अथ यं तावत् दर्शं दर्शं निखिलानि दुःखानि सोढव्यानि सोऽयम् एकमात्रः शिशुः एतेषां (तृतीयभार्यायां जातः) प्रस्थितवान् परं लोकम्। सर्वेषु अपि पुनः दुःखेषु या खलु गृहस्थस्य निधानम् इव संपद्यते, सेयं नवपरिणीता भार्या श्वशुरेण स्वगृहम् एव नीता। अथवा अपहृतेयम् एतत् सर्वम् अनुभूय परम् उदासीनाः समभवन् अप्पाशास्त्रिणः। १८३२ शकवर्षीयमाघसुदि अष्टम्यां श्रीजयचन्द्रशर्मणः भ्रातुष्पुत्राय गोपीचन्द्रमहोदयाय लिखिते पत्रे अप्पाशास्त्रिणः कथयन्ति —

"एकतस्तावद् गरीयस्यार्थिकी हानिरपरतो बलवच्छारीरमस्वास्थ्यं, तदन्यतः श्रीमातृदेव्या वार्धकसुलभं व्याधिवैशिष्ट्यं, तदितरतः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साहाय्याभावस्तदन्यतश्चाविमृश्यकारिणा श्वशुरेण नवपरिणीतायाः सह-धर्मिण्याहरणं कुमारस्य च पूर्वभार्यायां जातस्य परलोकप्रयाणम् इत्येवं-विधे रन्ध्रोपनिपातिभिरनर्थैरनारतमभिहन्यमानः क्षणमप्यनधिगतस्वास्थ्यो निःसारप्रायस्य जीवितस्यास्य वियोगमेव कामयमानः किं वा कुशल-मात्मनो निवेदयामि दुर्भागः ।" इति ।

एतेन प्रघट्टेन स्फुटीभवति पुट-पाक-प्रतीकाशः विद्यावाचस्पतीनां करुणो रसः । द्वितीय-भार्या-मरणादि-वृत्तान्त-निवेदनावसरे हि उक्तपूर्वम् अप्पाशास्त्रिभिः 'न खल्वितोऽपि वृत्तमात्मीयमुपवर्ण्य प्रियपाठकमहोदयानां कुसुमपेलवानि चेतांसि क्लेशयितुमिच्छामः ।' इति । एवं नितरां दाक्षिण्य-शालिनी अपि एतेषां लेखनी गोपीचन्द्राय दुःखातिरेकनिवेदनस्य साहसं कृतवती इत्यनेनैव विचिन्त्यतां विपद्-विनिहतानां श्रीअप्पाशास्त्रिणाम् अवस्था !

## ४. अहो महतां विनीतत्वम् !

श्रीमदप्पाशास्त्रिणां च क्रतुकोटिवासि-पण्डित-लिङ्गेशशर्मणां च सख्यं नितरां घनिष्ठम् आसीत् । एवं द्वयोः पत्रापत्रि अपि भूयिष्ठम् एव आसीत् । पूर्वं यदा अप्पाशास्त्रिणः शीतज्वरेण अभिभूताः आसन् तथैव श्रीलिङ्गेशमहोदयाः अपि रुग्णाः अवर्तन्त तदानीं तेभ्यः पत्रद्वारा निवेदयन्ति स्म अप्पाशास्त्रिणः —

"आः कथमिव दुर्भाग्यं मदीयमिदमन्वहं समुद्भवति ।
यद् बन्धोरपि देहे तनोति शीतज्वरो बाधाम् ॥"

इत्थं विलप्य स्वकीय-चिकित्सा-शास्त्र-विज्ञानस्य सार्थकतां च वितन्वन्ति स्म —

"न किल पयः संसेव्यं नो सर्पिः समधिकं बन्धो ।
सूपौदनं सनिम्बुरसं ससारं च संसेव्यम् ॥" इति ।

इत्यनेन अनुमेयम् एतयोः गाढं सौहार्दम् ।

यदा पुनः विद्यालङ्कार-महोपदेशकेत्यादि-बिरुदपत्रकं, पत्रप्रचारणेन संप्राप्तं संमानं च अप्पाशास्त्रिणां निर्वर्ण्य श्रीकुर्तकोटिलिङ्गेशपण्डित-



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महोदयैः प्रशंसिताः स्वसुहृद्वराः, तदा कस्मिंश्चित् उत्तरात्मके पत्रे अप्पाशास्त्रिणः तान् अवबोधयन्ति —

**" नाहं वैयाकरणो न तार्किको वा न चान्यशास्त्रज्ञः ।**
**केवलमेकतमोऽहं कतिपय-काव्यार्थ-चौर-धुर्याणाम् ॥ "**

अहो विनम्रत्वं वाचस्पतीनाम् ! प्रायः संदृश्यते यत् त्रिचतुराणां ग्रन्थानां कथमपि पठनेनैव सगर्वं निज-पाण्डित्यं भूयांसः एव हठात् प्रतिष्ठापयितुं कामयन्ते इति । यथार्थम् एव पुनः एतत् सर्वविधं सर्वथा सर्वशः विलासयन्तः अपि विद्वत्त्वम्, अप्पाशास्त्रिणः 'कतिपयकाव्यार्थ-चौरधुर्यः एव अहम्' इति निवेदयन्ति । विद्याविषयकः गर्वः पुनः धार्यमाणः अपि न किल न यथार्थः अभविष्यत् अप्पाशास्त्रिणाम् । श्रीमन्तं कृतविद्यम् अपि पण्डितराजजगन्नाथं '**नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः ?**' इति गर्वपरिवाहिणम् अवलोक्य तत्परिचयलेखे प्रोक्तम् अप्पाशास्त्रिभिः —

" यदि पुनरयं महात्मा वैदुष्यस्याननुरूपमहङ्कारमत्यक्ष्यत् तदा नूनमवदिष्यन् विद्वांसः समुदितं सुवर्णे सौरभमिति । " इति । तत् कथं पाण्डित्यस्य कलङ्कायमानः गर्वः मनाक् अपि धार्यताम् एतैः । सुष्ठु खलु उक्तम् — '**विद्या विनयेन शोभते**' इति ।

**५. क्रतुकोटि-ग्रामे वैश्याधिकार-निर्णयः ।**

'कलावाद्यन्तयोः स्थितिः' इति उच्यते मुनिभिः । ब्राह्मण-क्षत्रिय-वैश्य-शूद्रेतिचातुर्वर्ण्ये ब्राह्मण-शूद्रयोः एव कलियुगे अस्तित्वम्, इतरयोः लोपः इति तदर्थः । अतः वेदाधिकारः ब्राह्मणेतराणां न इति सनातन-धर्मसंप्रदायिनां सिद्धान्तः । एवं सति वाईक्षेत्रवासिभिः श्रीलेलेकाशीनाथशास्त्रिभिः " इदानीम् अपि ये 'वैश्याः' इति केचित् सन्ति, ते तावद् वेदाधिकारिणः एव " इति कुत्रचित् सभायां प्रतिपादितम् । तत् एतत् एतेषां व्याख्यानं ज्ञानप्रकाशस्य १९११ ख्रिस्तवर्षीय-मार्च-मासस्य पञ्चमदिनाङ्कीये अङ्के प्रकाशितम् । अवलोक्य पुनः एतत् धार्मिकेषु कोलाहलः समुत्पन्नः । भूयांसः एव विद्वांसः लेलेशास्त्रिणां पूर्वापरविरोधम् अपि समर्थयामासुः । तथा हि । यदा किल ख्रिस्तीय १९०५ वर्षे संकेश्वर-जगद्गुरु-स्वामिनां **ब्रह्मनाळकरोपनामकैः** शिष्यैः कोल्हापुराधिपतये वेदाधिकारसंमतिः प्रदत्ता, तदा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीकाशीनाथशास्त्रिभिः १९०५ वर्षीये ऑगस्ट-मासीय-धर्मपत्रे तद्विषये स्वकीयाम् असंमतिं प्रदर्श्य "कलौ ब्राह्मणशूद्रेति-वर्णद्वयम् एव वर्तते, क्षत्रियवैश्येति-वर्णद्वयं नैव अस्ति" इति लिखितम् आसीत्। इदानीं वैश्यानां वेदाधिकारं प्रतिपादितवताम् एतेषां प्रतिपादनयोः पूर्वापरविरोधः संवृत्तः इति।

एवम् अयं वैश्याधिकार-विषयः विवादग्रस्तः समभवत्। तत्र ये नाम सनातन-धर्मानुयायिनां प्रवराः आसन् तैः ऋतुकोटि-ग्रामे (कुर्तकोटी-धारवाड) संमिल्य अधिवेशनम् आयोजितम्। अस्यां सभायां पूर्वपक्षः लेलेशास्त्रिणाम् उत्तरपक्षः च अप्पाशास्त्रिणां, संवृत्तः। अस्य अधिवेशनस्य कृते धारवाडतः पं. तम्मण्णशास्त्रिणः पं. चिदम्बरदीक्षिताः पं. विरूपाक्षशास्त्रिणः, पं. श्रीकृष्णशास्त्रिणः (बेटगेरी), पं. श्रीमल्लारि-शास्त्रिणः इत्यादयः समागताः आसन्। पं. लिङ्गेशशर्माणः ऋतुकोटि-ग्रामस्थाः एव आसन्। अधिवेशनार्थम् अप्पाशास्त्रिणः अपि समभ्युप-गताः। वाईतः श्रीलेलेशास्त्रिणाम् अपि समुपस्थानं निश्चितम् आसीत्। किन्तु श्रीअप्पाशास्त्रिविद्यावाचस्पतयः सभायाम् अस्याम् उपस्थिताः सन्ति इति यदा विज्ञातम् अभवत्, तदा लेलेशास्त्रिणः सभायां नोप-स्थिताः। अहो व्यक्तित्व-प्रभावः !

## ६. "मध्येसभमपि पत्युः प्रीतिं विदधाति —!"

निवेदितपूर्वम् एव इदं प्रियपाठक-महोदयेभ्यः यत् अप्पाशास्त्रिणः प्रतिवर्षं धारवाड-हुबळीप्रदेशे गच्छन्ति स्म इति। हुबळीनगरे श्रीशंकरा-चार्योत्सवे प्रतिवर्षम् अध्यक्षत्वं वक्तृत्वं चापि बभूव अप्पाशास्त्रिणां, यत्रत्यं प्रसंगद्वयं परिचायित-पूर्वम्। धारवाडे तु बहुसंस्थाभिः सह एतेषां घनिष्ठः आसीत् संपर्कः। तत्र प्रतिवर्षं 'व्हिक्टोरिया थिएटर'-मध्ये भाषणं भवति स्म। यां किल संस्कृत-पाठशालाम् अधिकृत्य सूनृतवादिन्याम् अग्रलेखः लिखितः सेयं धारवाडस्था श्रीशंकराचार्य-पाठशाला अप्पा-शास्त्रिणां परमश्रद्धास्पदा आसीत्। अस्याः अध्यापकप्रवराः अप्पा-शास्त्रिणां भूयिष्ठं परिचिताः आसन्। अस्मिन् किल पाठशालायाः अध्यापकवर्गे पण्डितप्रकाण्डश्रीविरूपाक्षशास्त्रिणः, विद्वद्रत्नश्रीकृष्ण-शास्त्रिणः पं. श्रीतम्मण्णशास्त्रिणः इत्यादयः प्रधानाः आसन्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पं. तम्मणशास्त्रिण:, पं. चिदम्बरदीक्षितशास्त्रिण: च अप्पाशास्त्रिणां परमसुहृद: आसन्। एताभ्यां सह पत्रव्यवहार: अपि भूयान् आसीत्। तेषां मिथ: संस्कृत-भाषणं मधुरम् अत एव नूनं कर्णपुटपेयम् आसीत्।

अस्यां किल पाठशालायां **संस्कृतवर्धिनी** नाम एका सभा प्रतिष्ठापिता अभूत्। यस्या: प्रतिष्ठापकेषु अप्पाशास्त्रिण: अपि अन्यतमा: आसन्। सभाया: अस्या: संरक्षका: अपि आसन्। प्रतिवर्षम् अप्पाशास्त्रिणाम् अध्यक्षत्वे सभाकार्यं प्रचलति स्म। श्रावणे मासि प्रतिवर्षं प्रचलितासु पाठशालाया: परीक्षासु अप्पाशास्त्रिण: वेदान्तविषये परीक्षका: आसन्। अत एव बहुपरिचिता: अप्पाशास्त्रिण: **धारवाडवासिनाम्**।

सर्वत:प्रसारि बुद्धि-वैभवं, लेखन-भाषण-पटीयस्त्वम्, श्रीशिवाद्वैत-सनातनधर्म-निष्ठत्वम् इत्यादि-गुणगणै: प्रोद्भासमानानाम् अप्पाशास्त्रिणां विषये **धारवाडवासिनां** परमादर: अविद्यत। तत: एव च शकस्य १८३३ वर्षीये आश्विनमासे शुक्लत्रयोदश्यां **धारवाडे** विशिष्ट-नागरिकै: अप्पाशास्त्रिण: सत्कृता:। अपरेद्यु: श्रीशंकराचार्य-पाठशालाया: छात्रवृन्देन अध्यापक-मण्डलेन च अप्पाशास्त्रिणां भाषणम् आयोजितम्। विद्यावाचस्पति-विद्यालङ्कार-महोपदेशकाधिकाराणाम् इदं भाषण-पीयूषं कर्णपुटाभ्यां पातुं ये भाग्यभाज: समुपस्थिता: ते नूनं धन्यधन्या: एव। अस्मिन् संस्कृतोपन्यासे विद्यावाचस्पतीनां बिरुदस्य यथार्थत्वम् एव प्रत्यक्षीकृतं श्रोतृ-मण्डलेन। भाषणोपसंहारे पं. **श्रीतम्मणशास्त्रिमहाभागै:** अप्पाशास्त्रिणां प्रशंसापरा: श्लोका: सपदि एव श्राविता:। अहो एतेषां शीघ्र-कवित्वम्! तेषु कश्चित् श्लोक: एतत्-स्वरूप: —

**"मन्ये प्रौढां वाणीमप्पान्तर्वाणिभूसुरमणीनाम्।**
**मध्येसभमपि पत्यु: प्रीतिं विदधाति भीतिरहिता या॥"** इति।

अहो वैचित्र्यम्! अहो अनुप्रास-विन्यास-नैपुण्यम्!! अहो व्याजस्तुते: परमार्थ-व्यक्ति-क्षमत्वम्!!! अहो वाण्या: प्रौढत्वम्!!!! अहो विद्यावाचस्पते: पारमार्थिकं वाचस्पतित्वम्!!!!

**७. बुद्धचरितं व्याख्याय प्रकाशितम्।**

मोहमयी-विद्यापीठेन ईशपुत्रस्य १९१२ तमवर्षार्थं महाविद्यालय-प्रथमवर्षीय-च्छात्राणां कृते पाठ्यत्वेन बुद्धचरितस्य प्रथम-पञ्च-सर्गा:

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नियुक्ताः। यदा पूर्वं कालिदासचरित-विषयकः इङ्ग्रजीभाषामयः प्रबन्धः श्रीअप्पाशास्त्रिभिः पठितः, तदा तत्र बुद्धचरित-काव्यकर्तुः अश्वघोषस्य महाकवि-कालिदासस्य च मिथः तुलना वीक्षिता एतैः। अतः आसीत् बुद्धचरितस्य दिदृक्षा। सेयम् इदानीं पूर्णा अभवत्। छात्राणाम् अध्येयतया नियुक्तं बुद्धचरितकाव्यं लोके विरलप्रचारम्, अत एव व्याख्याविरहितम् एव आसीत्। तत् अत्र बालबोधिनी व्याख्या प्रणेतव्या इति हेतुना अप्पाशास्त्रिभिः बुद्धचरित-काव्यस्य पुस्तकानाम् अन्वेषणे प्रयत्नाः आरब्धाः।

कॉवेलमहोदयेन संमुद्रितं मूलमात्रं पुस्तकं, तेन प्रणीतः इङ्ग्रजी-भाषानुवादः सिंहलदेशीय **श्रीशीलस्कन्ध-स्थविरेण** प्रहितं पञ्चसर्गात्मकं पुस्तकम्, अश्वघोषकवेः चरितार्थं **श्री.र. ना. आपटे** महोदयानाम् इङ्ग्रजी-भाषामयः प्रबन्धः, **स्मिथ**महाभागस्य भारतस्य प्राचीनैतिह्यम् ( Early History of India ) इत्यादि सामग्री-जातं संप्राप्तं श्रीअप्पाशास्त्रिभिः। कॉवेलपुस्तकस्य अशुद्धत्वात् सिंहलदेशीयम् एव पुस्तकं प्रमाणीकृतम् एतैः। स्वतन्त्रविचारेण अश्वघोषस्य परिचयः अपि लिखितः। पञ्चसर्गेषु सुविशदां व्याख्यां विरचय्य महाविद्यालयीन-विद्यार्थिनां विशेषोपयोगाय पञ्चसर्गाणाम् इङ्ग्रजीभाषानुवादः अपि अत्र संयोजितः। **मीरतविद्यापीठस्थः** संस्कृताध्यापकः M.A. पदवी-सुशोभितः श्रीमान् **वेङ्कटरायसोवनी**-महाशयः अप्पाशास्त्रिणां सुहृद्वर्यः आसीत्। तेनैव महाभागेन बुद्धचरितस्य इङ्ग्रजी-भाषानुवादः अयं कृतः। पुस्तकं चैतत् कविकालनिर्णयभूमिका, सर्गार्थसंग्रहः, पद्यानां सूची, इत्यादि-समुचित-विषयैः समलंकृत्य पुण्य-पत्तने यशवन्तमुद्रणालये संमुद्रय अ. चि. भट-संघद्वारा १८३३ तमे शकवर्षे प्रकाशितम् अभूत्।

## ८. अलमिदानीं नैराश्येन।

शकस्य १८३३ तमे वर्षे अप्पाशास्त्रिणः सदाशिव-वीथीतः शनि-वारवीथ्यां निवासं चक्रुः। गृहाङ्कः पुनः एतेषां '२९ शनिवारवीथी, पुण्यपुरम्' इत्यासीत्। एतदवधौ चन्द्रिकायाः पुनः प्रचाराय बहुशः प्रयतितम् अप्पाशास्त्रिभिः। किन्तु अद्यापि नैव किमपि फलं नाम लब्धम्। चन्द्रिकायाः ग्राहकाणां पत्राणि पुनः पुनः आगच्छन्ति स्म। चन्द्रिका तु राजकीयविषयचर्चाकारणात् एव प्रतिबद्धा आसीत्। अतः राजकीयं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विषयं परिहृत्य एव चन्द्रिका प्रचालनीया, रञ्जनीया च ग्राहकजनता इति निश्चितम् अप्पाशास्त्रिभिः। बुद्धचरित-पुस्तकस्य अन्त्य-मलपृष्ठे एतद्विषयकं विज्ञापनम् उपलभ्यते। तत् एतत् —

" अलमिदानीं नैराश्येन। अचिरादेव हि प्रकाश्येत

**संस्कृतचन्द्रिका**

**(संस्कृतमासिकपत्रिका)**

अनेकैः किल प्रतिदिवसमनुयुज्ज्यामहे रसिकैः 'कदा वा संस्कृत-चन्द्रिका यथापूर्वं प्रकाश्येते'ति। अनेके च प्रकाशयन्ति विमनीभावमस्याः प्रकाशन-विलम्बेन। कुतोऽपि कारणात् कालमेतावन्तं नापारयाम सहृदयानां सकाश एनामुपस्थापयितुम्। इदानीं पुनरिमां भूयोऽपि प्रकाशयितुमाबद्धः परिकरोऽस्माभिः।

अस्यां च पूर्वमिव परस्तादपि कवीनां चरितानि दार्शनिकाश्च धार्मिकाश्च सामाजिकाश्च प्रबन्धाः सरस-सरसानि गद्यकाव्यानि हृदयहारीणि च पद्यमयानि खण्डकाव्यानि नीतिमय्यश्च कथा इत्येते चापरे च प्रबन्धाः सरलसरलया संस्कृतभाषया प्रकाश्येरन्। पृष्ठानि चास्या यथापुरं चतुर्विंशतिरेव। मूल्यं तु वार्षिकमग्रिमं सार्धैकरूप्यकम्। यैः किल काम्यते ग्रहीतुमियं, प्रहीयतामेतैः पत्रादिकं निम्नतो निर्दिष्टे स्थाने।

नैव परिस्प्रक्ष्यति **संस्कृत-चन्द्रिका** राजनैतिकान् विषयान्।

259 Shanivar — श्रीअप्पाशर्मा विद्यावाचस्पतिः।
Poona City — २५९ शनिवारवीथी, पुण्यपुरम्।

इति। अनेन प्रतीयते राजनैतिकाः विषयाः चन्द्रिकायां नैव प्रकाश्याः इति राजकीयः निर्बन्धः एतेषु समापतितः आसीत् इति। एतत् एव अनुसृत्य विज्ञापनम् इदं प्रकाशितम् अभूत। किन्तु कुटिलः कालः मनोरथम् एनं श्रीअप्पाशास्त्रिणां नैव अपूरयत्।

**९. श्रीमन्महाभारतानुवादः पूर्णः।**

ईशपुत्रस्य १९०४ तमवर्षात् आरभ्य अप्पाशास्त्रिभिः श्रीमन्महाभारतस्य अनुवादः समुपक्रान्तः आसीत्। सोऽयं बहूनां पण्डितानां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साहाय्येन परिपूरितः एभिः। शकस्य १८३३।१८३४ वर्षयोः महाभारतीय-शान्ति-हरिवंश-पर्वणोः अनुवादः अप्पाशास्त्रिभिः मोडकमहोदयैः च समापितः। शान्तिपर्वणोऽनुवादः १८३३ तमे शकवर्षे प्रकाशितः। तत्र प्रस्तावनायां वर्तते —

"अस्य शान्तिपर्वानुवादस्य सर्वोऽपि भारः श्रीअप्पाशास्त्रिविद्या-वाचस्पतिमहाभागैः प्रथमं स्वशिरसि कृतः आसीत्। तदनुसारं तैः २६९ अध्यायानाम् अनुवादः कृतः। परम् अत्रान्तरे व्यावहारिकैः प्रतिबन्धैः परिपीडितैः एतैः कम् अपि उपायम् अपश्यद्भिः अवशिष्टं कार्यं श्रीमोडक-महाभागेषु नियोजितम्।" इति।

हरिवंश-पर्वणः अनुवाद-विषये अपि तत्-प्रस्तावनायां प्रोक्तं श्रीमोडकमहाभागैः —

"अवशिष्टं तु कृतज्ञतानिवेदनं परमविदुषां, शास्त्रे केवलं गुरुस्थान-भूतानां मित्रवर्याणां विद्यावाचस्पति-श्रीअप्पाशास्त्रिराशिवडेकराणां विषये। अङ्गीकृते अस्मिन् कार्ये प्रकृति-दौर्बल्यवशात् निर्वहणाक्षमेषु अस्मासु एतैः महोदयैः विज्ञप्तिम् अस्माकं स्वीकृत्य प्रदत्तः हस्तावलम्बः। अत एव उत्तीर्णाः वयम्।" इति।

सोऽयं संपूर्णः अपि भारतानुवादः क्रमशः पुण्यपुरीय-बुधवार-वीथिस्थ-गणेशादिमण्डलीसंस्थया प्रकाशितः। अन्यपर्वानुवादवृत्तं प्रदत्त-पूर्वम् एव।

महाभारत-विषयिणी श्री. अप्पाशास्त्रिणां विचारधारा प्राचीन-परम्परानुसारिणी एव आसीत्। इदं हि संपूर्णम् एव श्रीव्यासमहर्षिभिः एव प्रणीतं न पुनः प्रक्षेपादिभिः प्रवृद्धम् एतत्। एवं शकात् प्राक् सहस्र-त्रयवर्षमितं प्राचीनं महाभारतम् इति च अविद्यत मतम् एतेषाम्। तत् एतत् अग्रे नलोपाख्यान-व्याख्यायाः परिचयावसरे विशेषतः स्पष्टी-भविष्यति।

### १०. याजुषहौत्रम्।

पठितपूर्वम् एव पाठकैः यत् शकस्य १८२७ तमे वर्षे पुण्यपुरे केनापि सोमयागः कृतः, तत्र च याजुषहौत्रं स्वीकृतम् इति। तम् अधिकृत्य चन्द्रिकायाः द्वादशे खण्डे प्रोक्तम् आसीत् अप्पाशास्त्रिभिः 'बह्वृचानामेव

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुनर्हौत्रमाम्नायते। आत्मघातमात्रफलः पुनरेषः (याजुषहौत्र-स्वीकारः)' इति। अस्मिन् १८३४ तमे शकवर्षे अपि तादृशः एव प्रकारः वाईक्षेत्रे संवृत्तः।

परिचिताः एव तावत् पाठकानां नामतः श्रीकाशीनाथशास्त्रिलेले-महाशयाः। येषाम् एव मुद्रणालये कंचित् कालं यावत् चन्द्रिका च सूनृतवादिनी च प्रकाशम् आसादयामासतुः। ते इमे लेलेशास्त्रिणः वाईक्षेत्रे १८३४ वर्षीय-ज्येष्ठ-सुदि दशमीतः सोमयागम् अकुर्वन्। अस्मिन् तैः याजुषम् एव हौत्रं स्वीकृतम् इति नावश्यकं वक्तुम्। १८२७ वर्षीयसोम-यागे स्वीकृतपूर्वं याजुषहौत्रं स्वीय-पत्रे लेलेशास्त्रिभिः समर्थितम् एव आसीत् इति। अथ तम् इमं प्रकारं दृष्ट्वा ऋग्वेदि-यजुर्वेदिनोः परस्परं यथापूर्वं कलहः प्रारब्धः।

परस्परं वादार्थं निमन्त्रणम् अभूत्। पुण्यपत्तने लेलेशास्त्रिभिः नातु-प्रासादे व्याख्यानं कृतम्। किन्तु तैः विरोधि-पक्षीयाणां विचारप्रकट-नाय तत्सभायाम् अवसरः न दत्तः। ततश्च लेखद्वारा विवादः प्रारब्धः।

अस्मिन् विवादे अप्पाशास्त्रिणः ऋग्वेदीयहौत्रस्य समर्थकाः आसन्। याजुष-हौत्रस्य विरोधे प्रामुख्येन पुण्यपुरवासिभिः एव परिकरः बद्धः।

एतेषु श्रीवामनबल्लाळकेळकर - रामचन्द्रबाजीराववझे - बाळकृष्ण-रामचन्द्रवैद्य-पं. रंगाचार्यरड्डी-पं. आगाशेकाशीनाथशास्त्रि-पं. आगाशेदत्ता-त्रेयशास्त्रि-प्रभृतयः भूयांसः एव अवर्तन्त। याजुषहौत्रसंबन्धि-विचारं कर्तुं लेलेशास्त्रिणः १९१२ ख्रिस्तवर्षीयसप्टेम्बर-मासे पुण्यपत्तने यदा आगताः तदा अप्पाशास्त्रिणां दर्शनम् एतैः कृतम्। एतद्विषये लेलेमहोदयाः स्वीय-धर्मपत्रस्य १–१२–१९१२ दिवसीये अङ्के लिखन्ति स्म —"पुण्यपत्तन-गमनसमये विद्यावाचस्पतीन् साक्षात्कृत्य मया याजुषहौत्रविषये किमपि पृष्टम्। किन्तु तैः 'याजुषहौत्रविषये मया कोऽपि विचारः न कृतः। न चाहं किमपि जानामि' इत्युत्तरं प्रदत्तम्" इति। किन्तु तत् एतत् अनुचितम् इव प्रतिभाति। यतः १८२७ शकवर्षीय-सोमयागे अप्पाशास्त्रिणाम् अभिप्रायः चन्द्रिकायां प्रकाशितपूर्वः। इदानीं तु प्रायः भाद्रपदमासे (१८३४ वर्षीये) सांगलीनिवासिनः पं. एकसम्बेकरश्रीनारायणशास्त्रि-महाभागाः पक्षं यावत् पुण्यपुरे स्थिताः आसन्। तदवसरे तेषां रड्डीराशि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वडेकरप्रमुखैः सह याजुषहौत्रविषये विचारः जातः। तदुत्तरं याजुषहौत्रस्य अशास्त्रीयताविषये लेखचतुष्टयस्य लघुपुस्तकम् एकं २२-१०-१९१२ दिवसे वाईक्षेत्रे लेलेमहोदयनिकटे समागच्छत्। तत्र अप्पाशास्त्रिणां, रड्डीमहोदयानाम्, आगाशेशास्त्रिद्वयस्य च प्रबन्धाः आसन्। लेलेमहाभागैः स्वीयधर्मपुस्तके एतान् लेखान् सानुवादं प्रकाश्य तदुपरि विचारः कृतः। लेलेमहाभागानां विचारस्य विवेचनस्य च अशास्त्रीयत्वं मन्यमानैः बहुभिः तद्विरोधितया लेखभाषणादि कृतम्। कर्णाटकादिविभिन्न-प्रदेशीय-विदुषां संप्रदायः अपि याजुष-हौत्रस्य विरोधी एव इति दर्शितं च।

**११. अप्पाशास्त्रिणां निर्णयः सशिरःकम्पमादृतः।**

याजुषहौत्रस्य अशास्त्रीयतां प्रदर्शयितुं श्रीअप्पाशास्त्रिभिः यः लेखः प्रकाशितः सोऽयं "याजुषहौत्र-विचार-संक्षेपः" इत्याख्यः। तत्रत्यः कोऽपि अंशः दृश्यताम् —

"**यदृचैव हौत्रं क्रियत** इति श्रुतिरार्चिकमेव हौत्रं विदधती तदितर-प्रयुक्तं तत्प्रतिषेधति। न च याजुष-हौत्रस्य कतिपयजन-विहितत्वमेवात्र प्रमाणमित्यसामञ्जस्याय करावलम्बप्रदानं युक्तम्। श्रुत्याद्यपेक्षयाचारस्य दुर्बलतमत्वात्। तदेवं सर्वथाऽऽर्चिकमेव हौत्रं शास्त्रसंमतं नान्यदिति सिद्धान्तः। विशेषतस्त्वन्यदा सप्रमाणं प्रपञ्चयिष्याम इति शिवम्।" इति।

अयं प्रबन्धः प्रबन्धान्तरैः सह लेलेशास्त्रिभिः स्वीये धर्म-पत्रे विचारितः। तत्र ऋग्वेदीय-हौत्रविधेः खण्डनम् आलोक्य अप्पाशास्त्रिभिः यथाप्रतिज्ञं पूर्वतन-प्रबन्धः एव आक्षेप-शङ्का-निराकरणादि विधाय सुविस्तृतः कृतः। अयं च 'सविवरण-याजुषहौत्र-विचारसङ्क्षेपः' इत्याख्यया कुरुन्दवाडग्रामात् श्रीकृष्णदीक्षितवाटवेमहाभागैः प्रकाशितः। प्रेषितः च अयं तत्तेषां विद्वन्महत्तराणां निकटे। बहूनां पण्डितानाम् अत्र संमतयः समुपागताः।

एतदवधि हौत्र-विषयं साकल्येन परिचाययितुम् ऋग्वेदीयस्य एव हौत्रस्य सशास्त्रत्वं परिमण्डयितुं च श्रीवाटवेमहाभागैः पुरस्तात् १८३८ शकवर्षासन्नसमये 'हौत्रतत्त्वप्रकाशः' इति पुस्तकं कुरुन्दवाड-नगरात् एव

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकाशितम् । यत्र अप्पाशास्त्रिणां प्रबन्धविषये प्रशंसोद्गाराः सन्ति । तत्र दृश्यताम् एकः अयम् **अथणी**ग्रामवासि-पण्डितानाम् अभिप्रायः —

"श्रीमद्राशिवडेकर- विद्यावाचस्पति - महाशयैर्युक्ति - प्रमाणाभ्यां सिद्धान्तितो याजुष-हौत्र-विचार-संक्षेपः सर्वैरपि सशिरःकम्पमादृत इति नैतच्चित्रम् । यैः ब्रह्मकल्पागत-परमधर्मवद्-ऋग्वेदस्य प्राथम्यं तद्धौत्रं च स्वशाखर्धितृषितैर्विलयं नीयमानमपि पुनरुज्जीवितं, ते महाशयाः तत्-सिद्धान्तितः स विधिर्वा हेतुदृग्भिः कैर्वा नादृता भवेयुः" इति ।

## १२. हा धिक्! जननीदेवी त्रिदिवमारूढा !

एवं स्वकीयं सौख्यम् अविगणय्य यथाशक्यं सनातनधर्मं स्वदेशं गीर्वाणभारतीं च परिचरितुं संनद्धपरिकराणां श्रीअप्पाशास्त्रिणाम् अनिष्टम् एकं वृत्तं संवृत्तम् । अस्मिन् समये अप्पाशास्त्रिणां संनिधौ कौटुम्बिकपरिवारः नाम केवलं तेषां माता **श्रीपार्वतीदेवी** एव आसीत् । इयं च अधुना अतीव-वृद्धा जीर्णशीर्णकलेवरा समपद्यत । सेयं १८३४ तमशकवर्षीयमार्गशीर्षे लोकम् एनं परिहाय दिवं जगाम । अप्पाशास्त्रिणः इदानीम् एककाः संवृत्ताः । अभिनवभट्टबाण-**श्रीकृष्णमाचार्य**महाभागेभ्यः प्रहिते पत्रे विलिखितम् अप्पाशास्त्रिभिः —

'प्रेष्ठाः ! कुत इदानीं श्रीमती मे जननीदेवी ? सा किल विहाय तनयमिममेकाकिनमतीते मार्गशीर्षे एवारूढा त्रिदिवम् । सर्वथा प्रभवति दैवम् ।' इति ।

पाठकमहाभागाः ! अद्ययावत् सर्वासु अवस्थासु अप्पाशास्त्रिणां श्रीमातृदेवी एव गरीयः अवलम्बनम् आसीत् । दिवम् अलंकुर्वन्तु भार्याः, त्यजन्तु लोकम् इमं तनयाः, समापतन्तु विपदः, पीडयन्तु व्याधयः, वञ्चयन्तु व्यवहारिणः, परिहरन्तु आश्रयदातारः, क्रुध्यतु राजा, संपद्यतां च नगरान्तराणां समाश्रयः । तथापि सर्वेषु अपि एषु प्रसङ्गेषु जननीदेव्याः आशीर्वादाः नाम अमूल्यः निधिः आसीत् । इतःपरं तत्तेषु अवस्थान्तरेषु कस्य चरणयोः विश्रामयितव्यम् उत्तमाङ्गम् अप्पाशास्त्रिभिः ? 'कः पुनः प्रतिबध्नातु भवितव्यतायाः विलसितानि ?' नूनम् इत्थम् एव विचिन्त्य कथमपि मनःप्रसादः संपादितः स्यात् अप्पाशास्त्रिभिः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## १३. व्याख्यातं नलोपाख्यानं च सावित्र्युपाख्यानं च।

खिस्तीये १९१३ तमे वर्षे मोहमयी-विद्यापीठेन महाविद्यालय-प्रथम-वर्षार्थं श्रीमन्महाभारतान्तर्गतं नलोपाख्यानं च सावित्र्युपाख्यानं च पाठ्यतया विनियुक्तम्। अतः महाविद्यालयस्थ-विद्यार्थिनां विशेषोपयोगार्थम् अप्पाशास्त्रिभिः एतयोः उपाख्यानयो नवीनव्याख्या विरचिता। तैः किल एवम् उक्तम् — "सन्ति खल्वत्र प्राचीन-व्याख्यास्तथापि नैता बालानामुपकुर्वन्ति। प्रगल्भमतिमात्राणामेव हि कृते तदारम्भः। केचित् पुनर्महाभारत-व्याख्यातारः सर्वत्र वेदान्तमेव पश्यन्तः सुतरामुत्तानार्थान्यपि पदानि वेदान्त-विषयतया व्याचक्षाणा व्याकुलीकुर्वन्त्यन्तरङ्गं विदुषाम्।" इति।

"उपाख्यानद्वयस्य मूलसंशोधनार्थम् अप्पाशास्त्रिभिः कलकत्ता-वाई-कुम्भघोण-पुणे-नगरेभ्यः पञ्च महाभारत-पुस्तकानि समासादितानि। पाठभेदाः विलिखिताः। महाभारते व्याख्या-द्वयं प्रसिद्धम्। चतुर्भुजमिश्रकृतं नीलकण्ठप्रणीतं चेति। अप्पाशास्त्रिभिः स्वीयव्याख्यायाम् एतयोः व्याख्ययोः विचारः कृतः।

कुम्भघोणतः प्रकाशितं महाभारतं बहुविध-दाक्षिणात्य-कोशाधारेण संशोधितम् इति विद्वत्सु प्रतिष्ठितम् आसीत्। तथापि तत्रत्य-पाठानां प्रामादिकत्वं प्रदर्श्य नैतत् विद्यावाचस्पतिभिः प्रमाणीकृतम्। कुम्भघोण-महाभारतम् एव मूलपदे स्थापनीयम् इति अप्पाशास्त्रिणां विचारः आसीत्। तथापि पूर्वोक्तप्रकारेण सोऽयम् एतेषां विचारः फलं न लेभे। एतद्विषये प्रोक्तम् अप्पाशास्त्रिभिः —

"किन्तु सूक्ष्मेक्षिकया संदृश्यमानमेतच्छैथिल्यमेवानैषीन्मनोरथमास्माकीनम्। तदेवं भूयसामेवानपेक्षितानामनिर्दिष्टप्रभवाणां पाठानामुपलम्भादपेक्षितानां च केषांचिदनधिगमात् समधिगतेषु चानेकेषामनौचित्यात् प्राचीनत्वसंभावनायां संदेहोन्मेषाच्च नात्र प्रमाणीकृतं कुम्भघोणपुस्तकमस्माभिः। समुचिताः पुनरेतद्गताः पाठा विनिवेश्य व्याख्यायां ससाधुवादं व्याख्याताः।" इति।

आङ्ग्लविद्यालयच्छात्राणां कृते इङ्ग्रजी-भाषानुवादः आवश्यकः इति अप्पाशास्त्रिभिः वङ्गीयेन बाबूप्रतापचन्द्ररायपण्डितेन कृतः अनु-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वादः तत्कन्यायाः हरिदासी-संज्ञीकायाः अनुज्ञया स्वीकृतः। अनुवादानुसारी इति तस्यैव महाभारतपाठः मूलपदे विनिवेशितः। स्वव्याख्यायां पाठान्तराणां साधुत्वादिकं विचारितम्। उपाख्यानयोः इङ्ग्रजीभाषामयी टिप्पनी अपि संयोजिता। इयं पुनः बेळगांव-वासिभिः **श्रीलोकूर-नारायणनामकैः** विधिपण्डितैः प्रणीता।

तदेवं १९१३ वर्षीय-फर्वरीमासे सव्याख्यम् एतत् उपाख्यान-द्वयं संपाद्य प्रकाशितम्। नलोपाख्याने सावित्र्युपाख्याने च निषधादिदेशानां नामानि सन्ति। अतः तेषाम् अवस्थान-बोधाय पुस्तके अस्मिन् प्राचीन-भारतवर्षस्य आलेख्यम् अपि समायोजितम् अप्पाशास्त्रिभिः। एतदालेख्य-विषये लिखितम् अप्पाशास्त्रिभिः —

"आलेख्येऽस्मिन् भूयानेवावलोक्येत विशेष आलेख्यान्तरतः प्रज्ञैः। अत्र हि पृथगेव सिंहलतो विनिर्दिष्टा लङ्कास्माभिः। अन्यैव चालम्बिता भुवो मध्यरेखा नाम। अन्येऽपि चैवं देशाः केऽपि विनिवेशिता अस्माभिर्नैवालेख्यान्तरेषु तथोपलभ्येरन्। अस्माभिः पुनरत्र प्रमाणीकृता ज्योतिष-सिद्धान्तग्रन्थाः पुराणप्रबन्धाश्च। निषधादि-देश-निर्देशः पुनर्महाभारतानुसारेणैव कृतः।" इति।

आलेख्यं चैतत् अप्पाशास्त्रिणां मार्गदर्शनानुसारं तेषां छात्रेण **नीलकण्ठशर्मणा** विनिर्मितम्। अस्य च संस्कृताङ्ग्लटीकासमेतस्य पुस्तकस्य पुनः प्रकाशनं **पं. म. पां. ओकमहोदयैः** १९१७ वर्षे कारितम्। व्याख्याम् एताम् उद्दिश्य आङ्ग्ल-टिप्पन्यारम्भे **श्रीनारायणरायलोकूरमहोदया** व्यलिखन् — "Balabodhini of the Vidyavachaspati Appashastri leaves nothing more to desired·" अर्थात्-विद्यावाचस्पतिश्रीअप्पाशास्त्रिणां बालबोधिनी व्याख्या अपेक्षित-विषयं नैव परिहरति।" इति।

## १४. कुतो वा महाभारतम्?

पूर्वनिर्दिष्टे पुस्तके अप्पाशास्त्रिभिः भूमिकायां महाभारतविषये विचारः कृतः। स तु संक्षेपेण तेषाम् एव शब्दैः निर्दिश्यते —

"कुतो वा महाभारतमित्येवमनुयुञ्जानाः केऽपि लघोरपि भारतस्यापरस्य सत्तामुत्प्रेक्षन्ते। वस्तुतस्तु भरतान् (भरतवंशजान् भूपान्) अधिकृत्य कृतत्वाद् भारतमिति संज्ञामनुप्राप्तं प्रबन्धरत्नमिदं निसर्गत एव

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महत्त्वान्महाभारतत्वमापन्नम् । संदृश्यन्ते ह्यनपेक्षाकृता अप्येवंविधाः संज्ञाः । यथा महोदधिरिति । न ह्यस्ति लघूदधिर्नाम समुद्रः कोऽपि ।

महाभारतं च कस्मिन् काले प्रादुर्भूतमिति जिज्ञासायां कलेर्युगस्यारम्भ इत्येव युक्तमाख्यातुम् । सम्प्रति च कलेः पञ्च सहस्राण्यब्दानामतिक्रान्तानि । शिष्टपरम्परया च भारतीयेषु निराबाधं प्रचरितेयं संवत्सरसंख्या नाश्रद्धेयतामर्हतीति नो बुद्धिः । महाभारतीयानि पद्यानि किल नार्वाचीनानां कवीनामिव समालक्ष्यन्ते । तानि हि वैदिकीमिव सरणिमालम्बन्ते । एवंविधानां च छन्दसाम् उपनिबन्धेन प्रतीयते प्रागेव लौकिकच्छन्दसां प्रचारतः प्रादुर्भूतं नलोपाख्यानं च सावित्र्युपाख्यानं च तत एव महाभारतमपीति । स चायं कालो नार्वाचीनः परन्तु प्राचीनतम एवेति विस्पष्टम् ।

महाभारतीया व्याकरणप्रयोगा अपि भूयिष्ठमत्र निदर्शनभावमासेवन्ते । अत्र हि नात्मनेपद-परस्मैपद-नियमो धातूनाम् । न गणनियमः । छान्दसा अप्यत्र प्रयोगा दृश्यन्ते । एवंविधानां च प्रयोगाणां विचारे लौकिकव्याकरणनिर्माणतः प्रागेव प्रादुर्भूतं महाभारतमित्यवश्यं वक्तव्यं भवति । अन्यथा ह्यपशब्दा एवैते संपद्येरन् । रूढमूले हि लोके व्याकरणे तद्विरुद्धाः शब्दा अपशब्दतया प्रोच्यन्ते । एवमपि चातिमात्रमेव प्राचीनं महाभारतं च तदन्तःपात्येतदाख्यानद्वितयं चेति नात्र संदेहः समुन्मिषति ।' इति ।

युक्तिवादः अयम् अप्पाशास्त्रिणाम् अवास्तवः इति को वा मन्येत?

## १५. भूयोऽपि परिणये सुहृद्-विबुधां निर्बन्धः ।

नलसावित्री-व्याख्यायाः प्रकाशनं १८३४ शकवर्षीये फाल्गुनमासे समभवत् । इदानीम् अप्पाशास्त्रिणः शनिवार-वीथितः ७८९ सदाशिव वीथ्यां जलाशय-(हौद)-समीपे निवासं चक्रुः। भावेप्रशालायाम् अध्यापकत्वं पुनः आसीत् एव । याजुषहौत्रसंबन्धिवृत्तं निवेदितपूर्वम् एव । तद् विषये ततः परम् अपि कोऽपि विवादः प्रस्तुतः आसीत् । तदानीं महाराष्ट्रेषु ये ये नाम श्रौत-विधि-पण्डिताः अविद्यन्त, तेषु पं. **एकसम्बेकर नारायण-शास्त्रिणः** अपि प्रधानाः आसन् । ते च याजुषहौत्रविचारार्थं पुण्यपत्तने कियन्ति अपि दिनानि न्यवसन् इत्यपि प्राक् एव कथितम् । तदुत्तरम्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अप्पाशास्त्रिभिः यः शास्त्रार्थः प्रकाशितः सोऽयं पण्डितैः प्रशंसितः। अतः अस्मिन् विवादे अप्पाशास्त्रिभिः एव नेतृत्वम् स्वीकरणीयम् इत्यासीत् पं. **एकसम्बेकर**महाभागानाम् अभिलाषः। न खलु एतत् दुष्करं नाम आसीत्। किन्तु सांसारिकैः विविधतापैः परिपीडितानाम् अप्पाशास्त्रिणां मनःस्वास्थ्यम् इदानीं शून्यप्रायम् आसीत्। तत्र पुनः एकाकित्वम्। अस्याम् अवस्थायां महता उत्साहेन विवादस्पर्धित्वं नेतृत्वं च कथं नाम शक्यं भवतु ? अतः अप्पाशास्त्रिभिः पुनरपि परिणयः कर्तव्यः इति अचिन्तयन् भूयांसः एव तेषां स्नेहिप्रवराः। तत एव पं. **श्रीनारायणशास्त्रि**-प्रभृतयः विवाहविषये श्रीअप्पाशास्त्रिविद्यावाचस्पतीन् निरबध्नन्। यद्यपि पुनः पुनः परिणयैः नितराम् उद्विग्नाः आसन् अप्पाशास्त्रिणः, तथापि गुरुकल्पानां विदुषां निर्बन्धं भेत्तुं न प्रभूतम् एतैः। अत एव गुरुकार्यवशात् ते एते विवाहाय संनद्धाः समभवन्। ततश्च समाहिताः पं. **एकसम्बेकर-नारायणशास्त्रि**महोदयाः वधू-संशोधने दत्तदृष्टयः अभवन्।

## १६. औदुम्बरकरनारायणशास्त्रिणां "वत्सला"।

एतस्मिन् काले पं. **एकसम्बेकर नारायणशास्त्रिणां** वासः साङ्गली-नगरे आसीत्। तत् इदं नगरं कोल्हापुरतः नातिदूरम्। अप्पाशास्त्रिणः अपि मध्ये मध्ये केनापि निमित्तेन गच्छन्ति स्म साङ्गलिग्रामम्। पं. **एकसम्बेकरशास्त्रिणां** संनिधौ पूर्वोत्तरमीमांसाम् अधीयमानाः भूयांसः एव आसन् छात्राः। तेषु एव अन्यतमाः श्रीक्षेत्रे औदुम्बरे वसन्तः **श्रीनारायणशास्त्रिणः** नाम।

औदुम्बरनामकः ग्रामः साङ्गलिनगरस्य पञ्चक्रोश्यां वर्तते। प्रधान-ग्रामः अङ्कलकोप इत्याख्यया प्रसिद्धः औदुम्बरात् क्रोशार्धमात्रं दूरः। अङ्कलकोपग्रामे **अङ्कलेश्वरस्य** च **कोपेश्वरस्य** च मन्दिरद्वयं वर्तते इति तदेव तस्य संज्ञाप्रवृत्तौ निदानम्। तस्य अङ्कलकोपग्रामस्य औदुम्बरः नाम काचित् वाटिका। औदुम्बरवृक्षाणां भूयस्त्वम् एव एतस्य अपि संज्ञाया प्रधानहेतुः। तत्र श्रीदत्तपूजकेषु अन्यतमाः **नारायणशास्त्रिणः**। एतैः खलु पं. **एकसम्बेकरशास्त्रिणां** संनिधौ पूर्वमीमांसा, उत्तरमीमांसा, स्मार्ताग्नि-विधिः, धर्मशास्त्रं चेत्यादि समभ्यस्तम्। एषां च **वत्सला** इत्याख्या चतुर्दशवर्षदेशीया द्वितीया कन्या इदानीं विवाहयोग्या अवर्तत। यदा पुनः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इयं वार्ता पं. **एकसम्बेकरशास्त्रिभिः** अवगता तदा तैः अप्पाशास्त्रिणां कृते सेयं याचिता। छात्रेण गुरोः आदेशः स्वीकृतः। अप्पाशास्त्रिणां सुहृद्वर्याः पुण्यपत्तनीयाः श्री. **म. पां ओकमहाभागाः** औदुम्बरकराणां परिचिताः आसन्। तेषाम् अपि एतद्विषये संमतिः आसीत्।

**१७. अङ्कलकोपे विवाह-समारम्भः।**

**औदुम्बरकरनारायणशास्त्रिणां** सदनं यथा औदुम्बरे तथा अङ्कलकोपे अपि आसीत्। तेषां ज्येष्ठभ्राता **वासुदेवभट्टनामधेयः** आसीत्। अनेन स्वकीयजनैः सह वैवाहिकः समारोहः संयोजितः। १८३५ शकवर्षीये चैत्रे मासि विवाहो निश्चितः। विवाहार्थम् अप्पाशास्त्रिणः पुण्यपत्तनतः समागताः। तैः सह प्रायः विंशतिसङ्ख्याकाः तेषां विद्वांसः सुहृत्प्रवराः समागताः। वरपक्षीयाणां निवासार्थम् अङ्कलकोपग्रामे **श्रीदेशपाण्डे-**महोदयानां गृहं संकल्पितम्।

अस्मिन् विवाहसमये अप्पाशास्त्रिणां बन्धुजनाः प्रायशः न आसन्। वधूपक्षीयाः पुनः भूयांसः एव आसन्। औदुम्बरस्य पञ्चक्रोश्यां **नारायणशास्त्रिणाम्** आप्तमण्डलं प्रसृतम् आसीत्। तत्तद्ग्रामेभ्यः आप्ताः विवाहकार्यार्थम् आजग्मुः। तेषु कुण्डलग्रामवासिनः **भास्करशास्त्रिणः** (वध्वाः मातुलाः), **भेडसगांवकर वासुदेवशर्मा** (वध्वाः मातृष्वस्रेयः) वे. **वष्ट गोपालभट्टः, भिलवडीकर प्रह्लादभट्टः** इत्यादयः प्रमुखा। तत्र **भिलवडीकर प्रह्लादभट्टः** औदुम्बरकराणां कुलपुरोहितः आसीत्।

अप्पाशास्त्रिणां च **औदुम्बरकर नारायणशास्त्रिणां** च परस्परं संभाषणं संस्कृतभाषया एव भवति स्म। **कुण्डलकर भास्करशास्त्रिभिः** 'विद्यावाचस्पतिः किल श्रूयते जामाता। द्रष्टव्यं तावत् अस्य वैदुष्यम्।' इति विचारेण संस्कृतभाषया किमपि पृष्टम्। तस्य उत्तरत्वेन अप्पाशास्त्रिणाम् एकहोरापर्यन्तं संस्कृतभाषणं संजातम्। अन्यदा **श्रीभास्करशास्त्रिभिः** श्रीमद्-भागवतस्थ-श्लोकस्य अर्थः पृष्टः। तदा अप्पाशास्त्रिभिः सोऽयं श्लोकः नैकप्रकारैः व्याख्यातः। संवीक्ष्य पुनः एतत् पृच्छक-पक्षीयाः सर्वेऽपि विस्मिताः।

एवं विवाहसमारोहः अयम् उत्साहेन निर्वृत्तः। अस्मिन् च प्रसंगे वैशिष्ट्यपूर्णं संवृत्तं घटनाद्वयं वृद्धैः कथ्यते। तत् इदम्—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१८. श्रीमद्भिर्मन्त्रोच्चारो न कर्तव्यः । मुहूर्तः अतिक्रामति ।**

अस्मिन् विवाहे याज्ञिकं कर्म व्यवस्थापयितुं **प्रह्लादभट्टसंज्ञकाः** पूर्वोक्ताः ऋत्विजः समुपस्थिताः आसन् । **प्रह्लादभट्टानां** सतत-ताम्रकूट-चर्वणं व्यसनम् आसीत् । तेन विवाहप्रयोगे मन्त्राणाम् उच्चारे वैकल्यं समजायत । संवीक्ष्य पुनः एतत् अप्पाशास्त्रिभिः **प्रह्लादभट्टाः** सविनयं प्रोक्ताः, "गुरुदेवाः! कृपया न पठ्यन्तां मन्त्राः । न किल अर्हन्ति श्रीमन्तः याज्ञिके कर्मणि समावेशम् ।" तदुत्तरं **प्रह्लादभट्टाः** विरताः । याज्ञिकं कर्म तु **वष्ट गोपालभट्ट**इत्याख्यैः वैदिकप्रवरैः निर्वर्तितम् ।

रात्रौ गृहप्रवेशमुहूर्तः आसीत् । वरयात्रा, देवदर्शनं ततश्च गृह-प्रवेशः इति आसीत् कार्याणां क्रमः । वरयात्रार्थं वध्वाः मातुलस्य श्री-**भास्करशास्त्रिणः** वडवा निश्चिता किन्तु नाद्यावधि सेयं समागता । अप्पा-शास्त्रिणां हस्ते घटीदर्शिका प्रकोष्ठालङ्कारः आसीत् । घटीदर्शिकातः मुहूर्तसमयः प्राप्तः इति विलोक्य मुहूर्तो मा अपक्रामतु इति हेतोः ते एव समुत्थिताः । अद्यापि घोटिका अपि नागता । अप्पाशास्त्रिणाम् अपि न तस्याः आवश्यकता आसीत् । तैः गुरुजनवन्दनं पुरःस्थितायां श्वश्रू-देव्यां 'लोकवृत्तापेक्षया शास्त्रं बलवत् । मुहूर्तः साधयितव्यः' इति उक्त्वा गृहीतः हस्तेन दीपः । वधूं च अपरेण करेण परिगृह्य देवदर्श-नार्थम् एते बहिः निष्क्रान्ताः । अञ्जसा एव **कोपेश्वरदर्शनं** विधाय परा-वृत्तैः मुहूर्तक्षणे एव गृहे प्रवेशः कृतः । सर्वे जनाः विस्मयमुग्धाः बभूवुः । अहो कर्मशुद्धि-प्रियत्वम् ! अहो मुहूर्त-प्रणयः !! **नारायणशास्त्रिणां** कन्या **वत्सला** इदानीम् अप्पाशास्त्रिणां पत्नी **यशोदा** संवृत्ता ।

**१९. पत्रं नृणां सङ्गम एव साक्षात् ।**

अथ विवाहोत्तरं मित्रपरिवारेण सह अप्पाशास्त्रिणः पुण्यपुरं गताः । ततश्च कतिपयैः दिनैः कुण्डलवासिश्रीभास्करशास्त्रिभिः 'ग्रहणे श्रावणी (उपाकर्म) कथं कर्तव्या ?' इति जिज्ञासा-पूर्तये पत्रम् एकम् अप्पाशास्त्रिभ्यः प्रेषितम् । अचिरात् एव तैः तदुत्तरतया अप्पाशास्त्रिणां पद्यमयं पत्रं संप्राप्तम् । अप्पाशास्त्रिणां पत्रविलेखनशैली परिचिता एव पाठकानाम् । गद्यपद्य-प्रभुत्वम् एषाम् असाधारणम् एव आसीत् । प्रसङ्गा-नुसारं प्रदत्तैः नैकविधैः उद्धरणैः विज्ञातमेव तदेतत् पाठकैः । एतत् पुनः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पत्रं शास्त्रार्थ-परिपूर्णम् इति किमपि वैशिष्ट्यं धारयति। किन्तु हा धिक्' न इदम् इदानीं पूर्णतया प्राप्यते। केवलं तु त्रयः एव अस्य प्राथमिकाः श्लोकाः अधिगताः अस्माभिः। ते तावत् एवं वर्तन्ते —

"स्वस्ति प्रियान् प्रेमभरावनम्रः शास्त्रिप्रवीरानवगाढशास्त्रः।
समुल्लसत्कुण्डलचारुभूषान् दासः परः कुण्डलिमण्डनस्य ॥ १ ॥
भव्याशयान् भास्करनामधेयान् अप्पाभिधो बन्धुजनेषु नव्यः।
प्रणम्य भूयः प्रणयैककामः प्रत्युत्तरं प्रीतमनाः प्रदत्ते ॥ २ ॥
देशान्तरे दैववशात् स्थितानां मिथः समालोकनकौतुकानाम्।
समुल्लसत्सान्द्रतरप्रमोदः पत्रं नृणां संगम एव साक्षात् ॥ ३ ॥ इति।

अत्र प्रथमश्लोकद्वयेन सचमत्कारं प्रणामः निवेद्यते। तृतीयश्लोकः तु पत्र-प्रशंसात्मकः सुभाषितरूपः। तत्र च अनुभयाभेद-निबन्धनं रूपकं विद्योतते इति सुज्ञेयम् इदम् आलंकारिकाणाम्।

## २०. चन्द्रिकायाः पुनः प्रकाशने उद्यमः।

ख्रिस्तीयशकस्य १९११ तमे वर्षे बुद्धचरितं व्याख्याय प्रकाशितम् अप्पाशास्त्रिभिः। तदा एव तस्य अन्तिमे मलपृष्ठे 'चन्द्रिका अचिरात् एव प्रकाश्येत' इति विज्ञापितम् आसीत्। किन्तु चन्द्रिका च सूनृतवादिनी चेति पत्रिकाद्वयं राजकीयान्दोलनं पुरस्करोति इति शासनस्य तत्प्रकाशने नासीत् अनुमतिः। अतः राजकीयविषयं परिहृत्य चन्द्रिका एव तावत् प्रकाशनीया इति आसीत् अप्पाशास्त्रिणां विचारः। सूनृतवादिन्याः प्रकाशनं तु राजकीयविषयपरिहारेण अशक्यम् एव आसीत्। तस्याः हि राजकीयविषयज्ञापनम् एव प्रधानम् आसीत् उद्देश्यम्। किन्तु चन्द्रिकायाः प्रकाशनं वर्तमान-एजन्सी संस्थायाः स्थगनोत्तरं सौकर्यं न अलभत। यदा पुनः इयम् एवंविधा परिस्थितिः आचार्यमहावीरप्रसादमहोदयैः विज्ञाता तदा तैः "चन्द्रिकायाः प्रकाशनं पुण्यपत्तने न शक्यं चेत् अस्माभिः काश्यां प्रविधातुं काम्यते" इति अप्पाशास्त्रिभ्यः निवेदितम्। स्वीयनगरे च तस्याः प्रकाशनस्य असौकर्यं संवीक्ष्य अप्पाशास्त्रिभिः द्विवेदीमहाभागानां विज्ञप्तिः अनुमोदिता। तथापि तत्प्रकाशने शासनस्य अनुमतिः नासीत् एव। अतः



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'चन्द्रिकायाः पुनः प्रकाशनम् अनुज्ञायताम्' इति प्रार्थनापत्रम् अप्पाशास्त्रिभिः राजकीयाधिकारिभ्यः प्रहितम्। तस्य च निर्णये दत्तचित्ताः आसन् अप्पाशास्त्रिणः।

**२१. केवलं संस्कृत-विद्यायाः पुनरुज्जीवनार्थमेव।**

प्रोक्तपूर्वम् एतत् यत् 'प्राचीन भारत' इति संज्ञकं मराठीभाषामयं मासिकपत्रं प्रकाशयितुम् इष्टम् अप्पाशास्त्रिभिः इति। किन्तु दुर्दैववशात् नेदं प्रचलितम्। उद्देश्यं च अस्य संस्कृत-संस्कृति-प्रचारः एव आसीत्। इदानीं पुनः संस्कृत-पत्रिकाद्वयम् अपि अप्पाशास्त्रिणां प्रकाशनात् विरतम् एव आसीत्। शकस्य १८३४ वर्षीयमाघमासे कै. पं. **विष्णुशास्त्रिबापट**-महाभागैः 'ब्रह्मविद्याग्रन्थरत्नमाला' इति महाराष्ट्रभाषामयं मासिकपत्रं प्रकाशयितुम् आरब्धम्। संस्कृत-तत्त्वज्ञान-प्रचारः एव तस्य उद्दिष्टम् आसीत्। तस्य प्रथमाङ्कीयलेखानां पठनेन अप्पाशास्त्रिणः भृशं प्रीताः। तैः च माघ-वदि १४ दिवसीये पत्रे रत्नमाला-संपादकाः प्रशंसिताः अभिप्रायः च प्रदत्तः। सोऽयम् —

"आपण प्रसिद्ध करीत असलेल्या ब्रह्मविद्याग्रंथमालेचा पहिला अंक समग्र वाचून पाहिला. भाषा मनोहर असून विवेचन फार सरस आहे. ह्यामुळें आपल्या ह्या मालिकेनें जिज्ञासूंचें मोठेंच कार्य होईल, असें माझें मत आहे. आर्यांच्या काहीं प्राचीन तत्त्वासंबंधानें अर्वाचीनांच्या शंकांचें प्रसंगानुसार आपण ह्यांत चांगले निरसन करीत आहां, हें प्रशंसनीय आहे. एकंदरीत ही मालिका संग्राह्य आहे." इति।

('श्रीमद्भिः प्रचाल्यमानमालायाः प्रथमाङ्कः सम्यक् अवलोकितः। अत्रत्या भाषा मधुरा विवेचनं च सरसम्। जिज्ञासूनाम् अतीव उपयुक्ता इयं माला। आर्याणां प्राचीनतत्त्वानां प्रसङ्गानुसारं प्रतिपक्षिशङ्कानिरसनपूर्वकं मण्डनं विधीयते इति साधुतरम्। साकल्येन संग्राह्या मालिका इयम्।' इति सारांशः।)

अप्पाशास्त्रिणां पञ्च विवाहाः संवृत्ताः। तत्र प्रथमविवाहचतुष्टयस्य विषये न किमपि विज्ञायते। औदुम्बरकरैः सह संवृत्तः संबन्धः तु लेखकस्य अस्य कुलम् एव स्पृशति इति तद्विषये भूयान् परिचयः उपलब्धः। नव्यः श्वशुरः श्रीअप्पाशास्त्रिणां संस्कृत-भाषायां व्युत्पन्नः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्वान् आसीत्। एतत् तु यदा ज्ञातम् अप्पाशास्त्रिभिः तदा ते हर्षातिरेकम् अन्वभवन्। संस्कृतभाषायाः प्रचारणे सुमहत् साहाय्यं भवेत् इति विचारेण ते द्विगुणितोत्साहाः अभवन्। अत एव चन्द्रिका-प्रचारे अनुज्ञां लब्धुम् अप्पाशास्त्रिभिः शासनाधिकारिणः भूयो भूयः प्रार्थिताः। स्वकीय-संस्कृत-प्रचार-परंपरां संरक्षितुम् अप्पाशास्त्रिभिः अन्यः अपि उपायः एकः आयोजितः। सोऽयम् —

राशिवडे-ग्रामे अप्पाशास्त्रिणां कुले जातः कोऽपि **शङ्करशर्मा** आसीत् बालः। स तावत् इदानीं कोल्हापुरे समागत्य मातृभाषायाः शिक्षणं समाप्य आङ्ग्लभाषायाः अध्ययनार्थं प्रशालां प्रवेष्टुकामः आसीत्। अप्पाशास्त्रिभिः यदा एतत् विज्ञातं तदा तैः बालकस्य अस्य मार्गदर्शनं कृतम्। संस्कृत-भाषायां रुचिः निर्मिता। संस्कृतविद्यायाः अध्ययनार्थं च नियोजितः अयम्। अयम् एव **शंकरशर्मा** पुरतः **शंकरशास्त्री गुळवणी** इत्याख्यां प्राप्नोत्।

पं. **एकसम्बेकर नारायणशास्त्रिणां शिरोळकर शंकरशास्त्रीति** प्रसिद्धाः विद्यार्थिनः आसन्। अध्ययनाय शृङ्गेरीमठे निवासः कर्तव्यः इति आसीत् **शिरोळकराणाम्** इच्छा। शृङ्गेरीपीठस्य श्रीजगद्गुरुचरणानाम् अप्पाशास्त्रिणां च भूयान् आसीत् परिचयः। अतः अप्पाशास्त्रिभिः प्रशस्तिपत्रं प्रदाय शृङ्गेरीस्वामिनां सविधे **शिरोळकराणां** निवास-सौकर्यं संपादितम्। एते एव पुरतः **श्रीशङ्कराचार्यशिरोळकरस्वामिनः** इति प्रसिद्धाः।

पुण्यपत्तनीय-भावे-प्रशालायाम् अध्यापन-समये अप्पाशास्त्रिभिः केऽपि विद्यार्थिनः श्रीजगन्नाथ-शंकरश्रेष्ठि-संस्कृत-शिष्यवृत्त्यर्थं पाठिताः। तेषु विद्यार्थिषु चिञ्चवडग्रामवासी **गजाननदेवः, प्र. के. अत्रे** महोदयः इत्यादयः प्रमुखाः आसन्।

## २२. भावे-प्रशालायां घटना-द्वयम्।

### (१) कालिदासस्य शाकुन्तलं केन लिखितम्?

प्रशालायां पाठ्यवर्गे प्रविश्य अप्पाशास्त्रिभिः एकदा गम्भीरमुद्रया छात्राः पृष्टाः 'वाळकाः। कालिदासस्य शाकुन्तलं केन लिखितम्? अपि जानीथ वा यूयम्?' अथ एकेनापि छात्रेण प्रतिवक्तुं नोद्यमितो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हस्तः इति दृष्ट्वा प्रत्येकम् अङ्गुल्या निर्दिश्य 'त्वं, त्वं, त्वम् ?' इति प्रष्टुम् आरभन्त। तपस्विनः विद्यार्थिनः तु भयाक्रान्ताः समभवन्। वाचाऽपि केषांचित् परावृत्ता। अथ अन्ते भिड्गे इत्युपनामकः कश्चित् छात्रः समुत्थाय भयकम्प्रः सन् प्रावोचत् 'गुरुदेव, मया तत् लिखितम्। अतः परं न खलु तत् लिखिष्यामि।' इति। तदा अप्पाशास्त्रिणः खोखोकृत्य हासैकपरायणाः संवृत्ताः। छात्रैः तु तेषां हासस्य हेतुः न ज्ञातः। समाप्ते पाठपर्याये (Period) अध्यापकनिवासे समागत्य सर्वशिक्षकेभ्यः तैः संवृत्ता घटना निवेदिता। शिक्षकाः अपि सोदरोत्पीडं हसितवन्तः। तत्र रानडे इत्युपनामकाः चित्रकलाशिक्षकाः अवर्तन्त। ते तु मनाक् अपि न अहसन्। प्रत्युत महत्या गम्भीरमुद्रया प्रावदन् 'भोः, कः सः ? किमु भिड्गेनामकः सः? अतिमात्रं हि दुश्चरितः अयम्। कालिदासस्य शाकुन्तलम् अवश्यमेव तेन लिखितं स्यात्।" इति।

## (२) नैव मात्रयाऽपि युष्मान् पाठयिष्यामः।

एकदा भावे-प्रशालायाः स्नेह-संमेलनम् आसीत्। तत्र संस्कृत-शिष्यवृत्त्यर्थं प्रचालिते वर्गे अधीयानः चिञ्चवड-निवासी-देवोपनामकः गजाननसंज्ञकः छात्रः विद्यार्थिनां कार्यक्रम-कलापे गुरुजन-विडम्बनं कृतवान्। कार्यक्रम-समाप्तौ अप्पाशास्त्रिभिः विडम्बनकर्तृभ्यः विद्यार्थिभ्यः सतर्जनं कथितम् — 'गुरुजनानां विडम्बनं कदापि नैव कर्तव्यम्। तत् खलु एतेषाम् अपमानास्पदम्। यदि नाम तादृशं विडम्बनं भूयः अपि युष्माभिः क्रियेत, तदा नैव मात्रयाऽपि युष्मान् पाठयिष्यामः।' इति। तदुत्तरं देवप्रभृतिभिः छात्रैः कदापि गुरुविडम्बनं न कृतम्।

एतेन विनोदप्रियत्वम् इव कार्यकठोरत्वम् अपि अप्पाशास्त्रिणां व्यक्तं भवति।

## २३. अप्पाशास्त्रिणां सौहार्द-केन्द्राणि।

अप्पाशास्त्रिपयोधिर्मथितः स्नेहेन मित्ररत्नानि।
प्रेमोल्लङ्घितसीमा दत्ते वल्गुत्वमप्यहो हन्त॥

—पुणेकरं प्रति पं. लिङ्गेशशर्माणः।

श्रीमदप्पाशास्त्रिणां सुहृन्मण्डलम् अतीव विस्तृतम् आसीत्। तत्रापि वङ्गेषु, कर्णाटकेषु, केरलेषु च अप्पाशास्त्रिणां मित्रभक्ताः भूयांसः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एव आसन्। तेषु बहवः एव चन्द्रिका-सूनृतवादिन्योः लेखकाः अवर्तन्त। सर्वेषु पुनः एतेषु पण्डित**जयचन्द्रशर्माणः** परमश्रेष्ठाः आसन्। खिस्तीय-१९०७ वर्षतः पं. **जयचन्द्र-महोदयाः** कलकत्तातः काश्यां निवसितुम् आगताः। तैः सह तेषां भ्रातृव्येण **गोपीचन्द्र**साङ्ख्यतीर्थेन च सह अप्पाशास्त्रिणां पत्रव्यवहारः आजीवनं प्राचलत्। तेषु पत्रेषु सुस्पष्टम् एव दृश्यते सौहार्दस्य पराकाष्ठा। मकरसंक्रान्त्यादि-पर्वसु मधुरपदार्थानाम् आदान-प्रदानं भवति स्म। एकस्मिन् पत्रे **अप्पाशास्त्रिणः गोपीचन्द्राय** लिखन्ति —

"प्रेष्ठ वत्स! किमेवमन्यथा संभाव्यते भवता? कच्चिद्दृष्टः श्रुतो वाऽऽयुष्मता पूर्वस्यामेव दिश्यस्तङ्गतो भगवान् भानुः। येन विस्मर्येत जनेनानेन वाराणसीवर्तिनः कुटुम्बकं प्रियबन्धोः। प्रेष्ठ! तदा खलु जीवितमप्यात्मनो विस्मरिष्यामि यदि स्वप्नेऽपि भातो विस्मरिष्यामि। नैव खलु जीवतो नामैतत् संभविष्यति। समधिगतं मया मूर्तमिव श्रीमतां विशुद्धं प्रेम-पुलकितं तिलजातम्। ये किलेतः प्रहिता मया तिलपुलकास्तेऽपि ननु विशुद्धतमया स्वदेशीययैव शर्करया विनिर्मिता मा खल्वमीषामास्वादने संदिग्धां वश्चेतः। स्वप्नेपि हि नेच्छामि स्प्रष्टुमपि शर्करां वैदेशिकीम्।" इत्यादि। पुण्यपुर-वास-समये सरदार **श्रीआबासाहेब मुजुमदारैः** सह भूयसी संगतिः आसीत्।

कुर्तकोटीवासि पं. **लिङ्गेशशर्माणः** यथा अप्पाशास्त्रिणां सुहृद्वर्याः आसन् तथैव **शङ्करो बाळाचार्य पुणेकर** महोदयाः अपि। **पुणेकरमहाभागैः** यदा क्वाचित्कं कारभारि-पदं परित्यक्तं तदा अप्पाशास्त्रिणः पत्रद्वारा तेभ्यः निवेदयन्ति स्म —

"आयासमात्रफलकः किलावमानैकसारः कारभारिपदं नाम। नायं धीमतो विषयो भवति। तत एव चायमापन्नितः श्रीमति पदपरित्यागः। तत्सर्वथा समुचितमेव समाचरितं भ्रात्रा। आर्थिकं पुनः कृच्छ्रमिति नैतत्किमपि। चपला किलेयं कुटिलतमा लक्ष्मीर्नैकत्र सुनिर्भरं पदं निदधातीति। किंच सत्यां लोकोत्तरायां प्रज्ञासंपदि किमनया विनश्वरया कुटिलया लक्ष्म्या?" इति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लक्ष्मीविषये **पुणेकराय** एव प्रेषिते पत्रे अप्पाशास्त्रिभिः लिखितम् —

**" गताऽपि लभ्यतेलक्ष्मीः पुनः कालेन निश्चितम् ।**
**कालस्तु न गतो धीमन् कथंचिदपि लभ्यते ॥ "** इति ।

**२४. पारिषदसंबन्धाः ।**

श्रीमदप्पाशास्त्रिणां सभा-संमेलन-वक्तृत्वादि-संबन्धः समस्तभारत-व्यापी आसीत् । वङ्ग-काशी-प्रयाग-मथुरा-मुम्बई-कोल्हापुर-वाई-कुर्तकोटी-धारवाड-हुबळी-प्रभृति-प्रदेशीयं वृत्तान्तजातं कथितपूर्वम् एव । केरलेषु पट्टाम्बिग्रामस्थ-सहृदय-समागम-सभा, आन्ध्रप्रदेशीय-गुण्टूर-मण्डलीयचिरालपुरग्रामस्थ-चिदानन्दसरस्वती-महोत्सवः, इत्यादि-नैकसंस्थाभिः सह अप्पाशास्त्रिणां दृढः संबन्धः आसीत् । मद्रासप्रान्ते तिरुवायूर-संस्कृत-महाविद्यालयस्य विद्याविलासिनी-सभायाम् अप्पाशास्त्रिणाम् अध्यक्षीय-भाषणं संवृत्तम् आसीत् । पुण्यपत्तनीय-वसन्त-व्याख्यान-मालायाम् अपि कदाचित् अध्यक्षत्वम् एभिः पारितम् । शिवराजविजय-प्रणेता पं. **अम्बिकादत्तव्यास**महाभागाः डॉ. **कुर्तकोटी** इति प्रसिद्धाः पं. **लिङ्गेशशर्मविद्याभूषण**महोदयाः च यदा वसन्तव्याख्यानमालायां संस्कृतभाषया व्याख्यानं चक्रुः, तदा **अप्पाशास्त्रिभिः** अध्यक्षत्वं स्वीकार्य समुचितः समारोपः कृतः । अप्पाशास्त्रिणां बहुविषयस्पर्शि सुमधुरं वैदुष्यम् आलोक्य प्रीताः नानादिग्वास्तव्याः पण्डिताः तान् एतान् आदरेण समाह्वयन्ति स्म । ८-८-१३ इति दिने प्रेषिते पत्रे गुण्टूरवासी **मार्कण्डेयशर्मा** विद्यावाचस्पतीन् विज्ञापयति स्म —

"अपि नाम विद्यते श्रीमतां दक्षिण-देशावलोकने मतिः । अपि नामाङ्गीकुर्युः मासं यावत् मद्र-विभागे प्रधान-प्रधानेषु विद्यमानानस्मादृशः दर्शनप्रदानेनानन्दयितुम् । यदि पुनरङ्गीकुर्युरेमां प्रार्थनाम् अनुगृह्णीयुरिमं जनं तदा कस्मिन् वा मासे श्रीमतामवकाशः भवेत् ?" इति ।

अनेन विद्यावाचस्पतिसान्निध्यविषये विदुषाम् औत्सुक्यं स्पष्टीभवति ।

एवं बहुषु ग्रन्थेषु अप्पाशास्त्रिणाम् अभिप्रायाः अपि प्रकाशिताः अभवन् । वक्तृत्वम् अभिप्रायलेखनं च संस्कृत-भाषायां मराठी-भाषायां वा आसीत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## २५. अप्पाशास्त्रिणाम् आचारः विचारः च।

इदानीं यावत् कृतेन वर्णनेन पाठकैः अवगतं स्यात् एव यत् अप्पाशास्त्रिणः सनातन-वैदिक-धर्मे परम-श्रद्धालवः आसन् इति। ततश्च तदनुसारी एव एतेषाम् आचारः विचारः च आसीत् इति कथनं पुनरुक्तम् एव। वेदाः अपौरुषेयाः सृष्टेः प्रारम्भे एव प्रादुर्भूताः, स्मृतयः च पुराणानि च महाभारतात् प्राग्वर्तीनि महर्षिप्रणीतानि, महाभारतं च कलियुगस्य आरम्भे एव व्यासमहर्षिभिः प्रणीतम् इति मतम् आसीत् अप्पाशास्त्रिणाम्। एतेषां पार्थिव-लिङ्ग-पूजा प्रत्यहम् आसीद् इति निवेदितपूर्वम् एतत्। तथापि श्रीशिवाद्वैतम् अङ्गीकुर्वताम् एतेषां नासीत् देवतान्तरेषु अन्येषु धर्मपन्थेषु च द्वेष-लवः अपि। प्रतिपक्षम् एकादशी-व्रतम् आसीत् अप्पाशास्त्रिणाम्। भोजनादिकम् अत्यन्तशुचिर्भूतम् एव आसीत् एतेषाम्। पुण्यपत्तन-निवास-समये अन्तिमे वर्षे अप्पाशास्त्रिणः एकाकिनः एव आसन्। कार्यान्तिरवशात् तदानीं स्वयंपाकार्थम् एभिः अवसरः न लब्धः। तदा अन्नापणतः प्रत्यग्रस्नातः शुचिवस्त्रधारी द्विजसेवकः अन्नपूर्णं वर्धमानकम् अप्पाशास्त्रिणां निवासालये आनयति स्म। भोज्यपदार्थेषु श्रीखण्डम् ( रसाला ) एतेषां रुचिकरम् आसीत्।

द्विजैः समुद्रोल्लङ्घनं म्लेच्छ-देश-निवासः च न कर्तव्यः इति आसीत् अप्पाशास्त्रिणां धर्म-शास्त्रार्थ-सिद्धं मतम्। तत्र गत्वा प्रत्यागतः अपि अयं कृतप्रायश्चितः यद्यपि स्वकीयाम् उपासनां कर्तुं शक्नोति, तथापि न अयं धार्मिकैः संव्यवहार्यः इति विचारः समुद्रयान-शास्त्रार्थे प्रकटीकृतः अप्पाशास्त्रिभिः। मनुजेन कस्याः अपि देवतायाः उपासना कर्तव्या एव इति एतेषां मतम् आसीत्।

राजकीयान्दोलने अप्पाशास्त्रिणः तीव्रपक्षे अन्तर्भवन्ति। वेदानाम् अनुवादादयः प्राचीनभारतीयानाम् एव प्रशस्यतमाः, यतः '**वेदा हि यज्ञार्थमभिप्रवृत्ताः।**' अतः एतम् एव विचारं पुरस्कृत्य भारतीयैः वेदाः व्याख्याताः इति। अतः बहुधा सायणादीन् अधःकुर्वन्तः विनिन्दिताः एतैः।

अप्पाशास्त्रिणां धर्म-देश-संबन्धिनः विचाराः एतावत् निश्चिताः आसन् यथा विपत्तिमग्नैः अपि तैः तेषां त्यागः न कृतः। एतत् एव महतां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

माहात्म्यम्। धार्मिक-राजकीयादि-लेख-प्रभावात् मुहुर्मुहुः कारावास-प्रसङ्गाः समागताः। किन्तु अप्पाशास्त्रिभिः स्वीयमतानि नैव तिलाञ्जलिना सत्कृतानि।

सरलः मधुरस्वभावः, शिष्येषु वात्सल्यं गुरुजनेषु नम्रत्वं च अप्पाशास्त्रिणां परमः विशेषः। स्वयं महापण्डिताः अपि एते कदापि इतरेषां पुरोभागित्वं न कृतवन्तः। अपि तु सर्वत्र महाविनयम् एव प्रकटीचक्रुः। पत्रिकायाम् अपि कस्यापि दुःखजनकं किमपि न प्रकाशितम् एतैः। अत एव चन्द्रिकायाः सप्तम-खण्डे बोधितः कोऽपि —

"विज्ञाप्यते च अयं यत् कदापि कस्याप्यरुन्तुदं वचनं चन्द्रिकायां न शक्यं प्रकाशयितुम् इति नैवंविधं काव्यं प्रेरणीयम्।" इति।

अप्पाशास्त्रिणां लेखन-वाचन-प्रणयः विलक्षणः आसीत्। आसीत् च एतेषां स्वभावः क्वचित् आग्रहाक्तः क्रोध-लिप्तः च। प्रत्यहम् अष्ट-होरामितः कालः एतेषां ग्रन्थ-वाचने व्यत्येति स्म। यदि पुनः तन्मध्ये कोऽपि प्रतिबन्धम् आनयेत्, तदा तं दण्डयन्ति स्म अप्पाशास्त्रिणः।

## २६. अप्पाशास्त्रिणां संदर्शनम्।

अप्पाशास्त्रिणां वर्णः गौरः मुद्रा च तेजःपुञ्जोद्भासिता आसीत्। शरीरयष्टिः एतेषां प्रांशुः अभवत्। नासिका दीर्घा च विशालाग्रा च आसीत्। अप्पाशास्त्रिणां शीर्षं काश्मीर-रक्तवर्णेन बद्धोष्णीषेण (पगडी) समलंकृतम् अविद्यत। भालपट्टेन एतेषां व्यराजत श्रीशिव-पूजन-शिष्ट-चन्दनपङ्केन रेखितः चन्द्राकृतिः तिर्यक् त्रिपुण्ड्रः। श्रवणशिखरे शोभते स्म वाली (बिगबाळी)। उत्तरोष्ठोपरि स्वावस्थानं बोधयति स्म श्मश्रुजालम्। अङ्गे व्यद्योतत उरश्छदः तदुपरि कञ्चुकं च। तस्योपरि उपवीताकारेण समासक्तम् अवर्तत करपत्र-धारम् (करवतकाठी) नाग-पुरीयम् उत्तरवस्त्रम्। कदाचित् पुनः बद्धोष्णीषस्थाने मुक्तोष्णीषम् (रुमाल) अपि शिरोभूषणं भवति स्म। सूक्ष्मेक्षिकया निर्वर्णिता अप्पाशास्त्रिणां मूर्तिः समाहितत्वम् इव निश्चयगर्भविमर्शतत्परत्वम् आत्मसंस्थं व्यञ्जयति। दृष्टमात्रा च मूर्तिः इयं स्वकीयां भव्यतां द्रष्टुः मनसि मनसि विनिवेश्य उत्तमाङ्गम् एतस्य प्रह्वीकरोति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**२७. केचित् विशेषाः ।**

(अ) पूर्वं राशिवडेग्रामे पत्र-प्रापण-स्थानं (Post) नासीत् । अप्पाशास्त्रिणः प्रतिवर्षं मासैकं मासद्वयं वा राशिवडेग्रामे आगत्य निवसन्ति स्म । तदानीं पत्रवितरकः तेषां कृते बृहतीं पत्रपूर्णपेटिकाम् आनयति स्म ।

(इ) **गंगाराम कुपले**-संज्ञकः अप्पाशास्त्रिणाम् अर्धसीरी आसीत् । तेन प्रतिवर्षं नवमणात्मकं व्रीहि-धान्यं दीयते स्म । एकदा तेन सप्त-मणात्मकम् एव धान्यम् आनीतम् । तदा अप्पाशास्त्रिभिः उक्तम् — "प्रतिवर्षानुसारं नवमणात्मकम् एव धान्यं दीयताम् । नो चेत् किमपि न अपेक्ष्यते" इति । मुहुर्मुहुः प्रार्थितैः अपि अप्पाशास्त्रिभिः तत् धान्यं नैव स्वीकृतम् । कृषीवलः तु आनीतधान्यं गृहीत्वा यथागतं प्रतिनिर्गतः । अहो सत्याग्रहः !

(उ) 'अस्माकं ग्रामवासी दिगन्तकीर्ति-संपन्नः पण्डिताग्रणीः वर्तते' इति अयं राशिवडेवासिनां सर्वजनानां धन्यताविषयः आसीत् । अप्पाशास्त्रिणाम् आगमनं सर्वेऽपि साभिमानं सादरं च समभिनन्दन्ति स्म । हालिकादयः अज्ञजनाः तु उच्चस्तरीयाः अप्पाशास्त्रिणः इति बुद्ध्या तेषां परिसरे अतीव संकोचेन नम्रतया सभयं व्यवहरन्ति स्म । तथापि अप्पाशास्त्रिणः सर्वैः सह प्रमुक्तबन्धेन स्वान्तेन संभाषन्ते स्म । असामान्यानाम् अप्पाशास्त्रिणां सामान्यैः साकं मधुरं व्यवहारं प्रेक्ष्य सर्वे जनाः साश्चर्यं प्रमुदिताः भवन्ति स्म ।

(ए) अप्पाशास्त्रिभिः 'न्यूयॉर्क लाइफ इन्शुअरन्स कम्पनी' संस्थायां द्विशतरूप्यकात्मकं जीवनमूल्यं निहितम् आसीत् । प्रतिज्ञातक्रमाङ्कः (Policy No.) पुनः ३७१५००१ इत्यासीत् । उत्तरकाले संस्थाविनाशनिमित्तेन १५० रूप्यकाः एव लब्धाः । अत्र पुनः इङ्ग्रज-शासनस्य चौर्यम् एव निदानम् आसीत् ।

(ओ) अप्पाशास्त्रिणां लेखन-वाचन-प्रणयः गरिष्ठः आसीत् । कदाचित् ते मध्यरात्रोत्तरम् अपि एक-घण्टायां समुद्घाटित-पुस्तक-परिवार-मध्यभागे समुपविश्य बहुकालं यावत् वाचन-लेखनं कुर्वन्ति स्म ।

(अं) अप्पाशास्त्रिणां पाठनशैली परंपराप्राप्त-पण्डितपद्धति-समेता एव आसीत् । तत्र साहित्यपाठारम्भे 'अथ प्रजानाम्' इति रघुवंश-द्वितीय-सर्गस्य प्रथमः श्लोकः नित्यं पठ्यते स्म ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**२८. योगवासिष्ठ-रामायण-व्याख्यारम्भः ।**

यथा **चिपळूणकर-मण्डल्याः** कृते श्रीमन्महाभारतम् अनुवादितम् अप्पाशास्त्रिभिः तथैव **योगवासिष्ठस्य** अनुवादः अपि प्रक्रान्तः एतैः । **चिपळूणकर-मण्डल्याः** प्रार्थनया १९१३ ख्रिस्तवर्षस्य जूनमासे अप्पाशास्त्रिभिः योगवासिष्ठग्रन्थस्य अनुवादः प्रारब्धः । किं तु निष्प्रतीकारेण महासंकटेन सोऽयं नैव पूर्णः अभवत् । महासंकटम् एतत् अचिरात् एव वर्णयिष्यति हतभागा लेखनी अस्माकम् । किं तु प्रकारेण अनेन चिपळूणकर-मण्डल्याः व्यवस्थापकमहोदयाः अतीव खिन्नाः निराशाः च संवृत्ताः । पुरतः १८३८ शाकवर्षे (इ. स. १९१६) प्रकाशितस्य रा. बर्वेमहाभागैः कृतानुवादस्य योगवासिष्ठ-प्रथम-भागस्य प्रस्तावनायां प्रकाशकाः विलिखन्ति स्म — ( मूलतः मराठीभाषायाम् । )

" विद्यावाचस्पति-श्रीअप्पाशास्त्रि - महोदयैः अस्मदीय - प्रार्थनाम् अङ्गीकृत्य योगवासिष्ठानुवादः प्रारब्धः । किं तु योजना इयम् अस्माकं सर्वथा परिभ्रष्टा बभूव । अचिराद् एव हि तद्-वर्षस्य ( १९१३ ) नवम्बर-मासि पुण्यपत्तने शास्त्रिवर्याः ग्रन्थिज्वरस्य बलितां प्राप्य कैलासं जग्मुः इति । एवं दौर्भाग्य-प्रभावेण 'प्रथमग्रासे मक्षिकापातः' इति इदृशीम् अवस्थां प्राप्तानां हताशानाम् अस्माकम् अशक्यानुवाद-प्रकाशनः ग्रन्थः अयम् इति परिणतः विचारः । शास्त्रित्रयंसदृशम् अद्वितीयं नररत्नं मुषितम्, अङ्गीकृतं कार्यं च कल्पनातीतेन विघ्नेन विध्वस्तम् । ततः च सुतरां परिध्वस्तोत्साहैः अस्माभिः योगवासिष्ठानुवादस्य अभिलाषः सुदूरं परित्यक्तः । " इति । तदुत्तरं रा. बर्वेमहाशयानां संमत्या अनुवादः अयं पूर्णः अभवत् इति अन्यत् एतत् ।

एवं वाल्मीकि-रामायणे संस्कृतभाषया व्याख्याविनिर्माणं प्रारब्धम् अप्पाशास्त्रिभिः । बालकाण्ड-व्याख्यायाः पत्रक-द्वयम् ( two forms ) अपि मुद्रितम् अभवत् । किं तु पूर्वोक्तेन एव पथा तत् एतत् कार्यम् अपि प्रतिबद्धम् अभवत् ।

**२९. पुण्यनगरे ग्रन्थि-ज्वर-महातङ्कः ।**

१८३५ तमशकवर्षस्य आश्विने मासे पुण्यपत्तने ग्रन्थि-ज्वरस्य परिपीडा प्रवृद्धा । ग्रन्थिज्वर-प्रभावात् अतीव त्रस्तं पुण्यनगरं पापनगरम्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इव संवृत्तम् । एतद्-विषयकं वर्णनम् अप्पाशास्त्रिणां सुहृत्प्रवरैः पं. **मुकुन्द-शास्त्रिमिरजकर**महाभागैः सुष्ठु कृतम् । निभाल्यताम् एतत् पाठक-महोदयैः —

"संप्रति हि चिरं क्रीडति स्वैरं महाराष्ट्रेषु, अवतार इव कालस्य, उत्पत्तिरिव दुरितस्य, जनक इव शोकस्य, शत्रुरिव तरुणानां, विघटयिता दम्पतीनां, शापस्थानमिव वैधव्य-दग्ध-वपुषां मुग्धकुमारीणां, क्रव्याद् इव मनुष्यभक्षको ग्रन्थिज्वरमहातङ्कः । कामं मासत्रयं स्थीयतेऽनेन रोगहतकेन पुण्यनगरे । पत्तनमिदं नितान्तं दुष्प्रेक्षतां प्रयाति प्रेक्षकाणाम् । विरलान्येव दृश्यन्ते दिवाऽपि विवृतद्वाराणि हर्म्याणि । यानि तु वर्तेरंस्तथाविधानि तत्र 'हा हताः स्मः ! हा निरवलम्बाः स्मः ! वत्स ! पश्य तव शोकविह्वलां मातरम् ! क्व गम्यते ! अन्तर्हितो मे सखा !' इत्यादि विलपतां श्रूयन्त आर्तनादाः । अवसरेऽस्मिन् वाचस्पतिमिश्रा अपि संप्रेष्य कुटुम्बिनीं पितृ-गृहे, आत्मना क्व गन्तव्यम्, ग्राम एव त्याज्य उत विरचयितव्यमुटजम्, इहैव वा यापयितव्यानि दिनानि इत्यनिश्चितकार्यनिर्णयाः श्वो वा परश्वो वा यथोचितं विधास्याम इति विचिन्तयन्त आसन् ।" इति ।

अनेन विज्ञायेत पाठकमहाभागैः ग्रन्थिज्वरस्य भीषणतमत्वम् । त्याज्यम् एव इदानीं पुण्यपुरम् इति विनिश्चितम् अप्पाशास्त्रिभिः । एतत् एव तैः अभिनव-भट्टबाण-**श्रीकृष्ण**माचार्याय पत्रेण विज्ञापितम् । यथा —

"सहधर्मिणी तु नाद्यापि पुष्पवती । सकृदेव चोपागत्य मन्दिरमे-तदात्मीयं प्रतिगता पितुः सदनम् । संप्रति चात्र गरीयान् ग्रन्थिज्वर इति नेदानीमिमानेतुमिच्छामि । अहमेव त्वचिराद् ग्रामान्तरं गमि-ष्यामि ।" इति ।

श्वो वा परश्वो वा ग्रामान्तरं गन्तव्यम् इति अप्पाशास्त्रिणः प्रस्थानस्य सिद्धौ प्रवृत्ताः ।

### ३०. अनुमतं शासकैः चन्द्रिकायाः प्रकाशनम् ।

यावत् अप्पाशास्त्रिणः पुण्यपुरत्यागं विचिन्तयन्ति, तावत् एव १९-१०-१९१३ इति दिने शासनाधिकारिणां पत्रम् एकम् आगतम् । तत्र खलु चन्द्रिकायाः पुन.प्रकाशनविषये संमतिः आसीत् । संवीक्ष्य च एतत् पत्रं नासीत् अप्पाशास्त्रिणां संमोदस्य सीमा । यदा मुम्बई-वर्तिनी

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'वर्तमान-एजन्सी' संस्था प्रतिबद्धा तदाप्रभृति एव अप्पाशास्त्रिणः येन केन प्रकारेण शासनद्वारा चन्द्रिकायाः प्रकाशने संमतिलाभार्थं प्रयतन्ते स्म। किं तु न अद्यावधि फलेन समवलम्बिता इयम् एतेषाम् अभिलाषा। अद्य तु अकस्मात् एव सुफलिताम् एनां पश्यताम् अप्पाशास्त्रिणां, पूर्णचन्द्रेण इव महासागरः, महोत्साहः प्रवृद्धः बभूव। अथ ग्रन्थिज्वरप्रशमोत्तरम् एव चन्द्रिकायाः प्रकाशनं व्यवस्थापयितव्यम् इति विचार्य इमे ग्रामान्तरप्रस्थाने निश्चयम् अकुर्वन्।

**३१. हा हन्त ! ग्रन्थिज्वरेण प्रपीडिताः अप्पाशास्त्रिणः !**

ख्रिस्तीयशकस्य २२।१०।१९१३ इति दिनम्। बुधवारः। तदा अप्पाशास्त्रिणः ग्रामान्तरं गन्तुं सज्जाः अभवन्। अद्ययावत् द्वि-त्रि-वर्षपर्यन्तम् अप्पाशास्त्रिणां शरीरप्रकृतिः सुदृढा आसीत्। तदवधौ न किमपि औषधम् एतैः सेवितम्। तथापि तद्दिने सायंकाले अप्पाशास्त्रिणः ज्वरेण अभिभूताः। चिकित्साशास्त्र-विज्ञत्वेन अप्पाशास्त्रिभिः सपदि एव स्वकीयम् औषधं सेवितम्। ज्वरः वेगवत्तरः आसीत्। ततः च अल्पेनैव समयेन अप्पाशास्त्रिणां वाक् प्रतिबद्धा।

यद्यपि अप्पाशास्त्रिणः पुण्यपत्तने एकलाः एव आसन्, तथापि तेषां विद्वत्तया आवर्जिताः भूयांसः एव पण्डित-सुहृदः तन्निकटे संमिलिताः। प्रारब्धाः च तैः नैकविधाः चिकित्सोपायाः। विद्वन्मण्डलेन एतेन मात्रयाऽपि न कृतम् औषधादि-योजनायां दुर्लक्ष्यम्। निवेदितं च एतैः पत्रद्वारा तेषाम् औदुम्बरवासि-श्वशुरमहोदयेभ्यः एतत्। ज्वरपीडाम् इमां वर्णयन्ति पं. मिरजकरमहाभागाः —

"तावत् तस्मिन्नेव दिवसे सहसा-समाक्रान्तो महात्मासौ नितान्तनिर्दयेन ज्वरेण। श्रमाधिक्यात् प्रायोऽयं समुद्भूतः स्यादिति विदित-वैद्यशास्त्रेण स्वेनैव कश्चिदुपायः चिन्तितः तत्-प्रतीकाराय। किं तु समतीते घण्टा-त्रितयं-परिमिते कालेऽवर्धत सुतराम् अस्य संतापः। ज्वरोऽप्यतिभूमिं गतः। तदात्व एव नित्यमिव समागतमस्य सुहृद्-वृन्दम्। किं तु बलवद्-रोग-ग्रस्तस्य वाक्प्रतिबन्धेन नैकोऽपि शब्दो विनिःसृतोऽस्य मुखपद्मात्। मित्रगणेन तु कृतनैकविधौषधोपचारस्यापि न किंचिदपि तनुताम् अगमदस्य रुक्प्रभावः।" इति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं प्रयत्नपरेषु अपि सर्वेषु मित्रेषु अप्पाशास्त्रिणां व्याधिः न केवलं न शान्तः, प्रत्युत प्रवृद्धः एव अयम् ।

**३२. संमिलितं बन्धुमण्डलम् ।**

इदानीं व्याधिग्रस्तानाम् अप्पाशास्त्रिणां परिसरे भूयांसः सुहृद्-वर्याः समुपस्थिताः । कोल्हापुरीयाः, पुण्यपुरीयाः अन्ये च। **श्रीबाबूशास्त्री गुळवणी, रामकृष्णपन्त पराडकरः, डॉ. पळसुले गोपाळरावः, पं. बाळाचार्यखुपेरकरः, केसरि-संपादकः गोखले बाबूरावः, पं. रड्डी रङ्गाचार्यः, कवडे श्रीकृष्णशास्त्री, पं. म. पां. ओकमहोदयः** इत्यादयः नैके सुहृदः अप्पाशास्त्रिणां निरामयत्वं प्रतीक्षन्ते स्म ।

समुदितः आश्विन-वदि-दशमी ( २५–१०–१९१३ ) शनिवार-दिवसः । आसीत् एकादशी-क्षय-तिथिः । अप्पाशास्त्रिणां वाक्-शक्तिः तु अपुनरागमनाय एव निर्गता आसीत् । केवलं तु दृग्भ्याम् एव संभावयन्ति स्म एते स्व-सुहृद्-वृन्दम् । इदानीं दीपावलि-सत्कार-विशेषाय निमन्त्रणीया वाचस्पतयः इति चिन्तयद्भिः अप्पाशास्त्रि-सुहृन्मण्डलेन प्रेषितं पत्रं यदा तेषां श्वशुरैः **नारायणशास्त्रिभिः** समधिगतं, तदा ते तूर्णम् एव स्वकीयपुत्र्या सह पुण्यपुरं प्रस्थिताः । आगताः च अप्पाशास्त्रिणां निवासस्थानम् । दृष्टाः च एतैः अपुनरुत्थानाय शय्यायां निमग्नाः स्वकीय-जामातृमहाभागाः । भार्याऽपि ननु एवंविधानां श्रीमदप्पा-शास्त्रिणां नयनयोः गोचरीबभूव । किंतु न इदानीम् अप्पाशास्त्रिणां प्रमोदाय प्राभवत् असौ । साऽपि च तथैव स्वकीय-सौभाग्य-रत्नाकरं दृष्टवती । कथं नाम इयम् इदानीम् आनन्दयतु चेतः ?

अनतिक्रान्तबालभावम् इदानीं भार्यायाः नवीनं वयः । जानाति च नैव जानाति च इयं संसारं वैवाहिकं सौख्यं च किमपि । अयम् अस्ति पुरस्तात् एव मृत्युशय्यायां सर्वसौख्यस्य एकमेव निदानं भर्तृदेवः !

अकस्मात् सहधर्मचारिणीं प्रेक्षमाणानां नितरां व्यथितम् अप्पा-शास्त्रिणाम् अन्तरङ्गम् । धारापातं प्रवृत्ताः अश्रुबिन्दवः ! किम् अतः परम् ?...

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

### ३३. हा धिक् ! वाचस्पतिः दिवंगतः ! !

सायं समयः। निकामं दुःख्यन्ति श्रीअप्पाशास्त्रिभिः सह वधूः, श्वशुरः, सुहृदः च। अस्मिन् एव अवसरे शान्तम् अभूत् अखिलम् अपि। स्वधर्माभ्युदयार्थं, स्वदेशोन्नतये, संस्कृतभाषायाः च पुनरुज्जीवनाय क्षणे क्षणे परिक्षीणः अयम् अप्पाशास्त्रिसंज्ञकः देहः चैतन्येन सुतरां परित्यक्तः ! ! ओङ्कारेश्वरतीर्थे च अयम् अग्निसात् अभवत् ! ! !

### ३४. न खलु स उपरतः...

"पारावारः पाण्डित्यस्य, प्रतिमूर्तिः प्रतिभायाः, निवासभूमिः सौजन्यस्य, तरङ्गिणीपतिस्तेजस्वितायाः, धरणिधरो धार्मिकताया अप्पाशास्त्री राशिवडेकरो भस्मसाद्भूतेऽपि भौतिके देहेऽद्यापि जीवत्येव भारते वर्षे। अद्यापि तस्य रचनाशैली प्रत्यक्षीक्रियते तेषु तेषु मास-पत्र-प्रबन्धेषु। अद्यापि परःसहस्रा जनास्तं सभक्त्युन्मेषं स्मरन्ति। न खलु स उपरतो यस्य वल्लभो जनः स्मरति।"

—मञ्जूषायाः अप्पाशास्त्रिविशेषाङ्के (मार्च ६१)
कै. पं. श्रीक्षितीशचन्द्रचट्टोपाध्यायमहोदयाः।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# पश्चिमपर्व।

## १. पुण्यस्मरणम्।

प्रेष्ठाः संस्कृतानुरागिणः पाठकाः !

प्रायः चत्वारिंशद्वर्षात्मकम् आयुः संस्कृत-भाषायाः सेवायां नियुज्य श्रीमदप्पाशास्त्रिभिः सार्थकत्वं संपादितं स्वकीयजन्मनः। विद्यावाचस्पतिः, विद्यालङ्कारः महोपदेशकाधिकारः धार्मिकप्रवरः, राष्ट्रभक्तः, संस्कृत-प्रचारकः, दार्शनिकः, कविः, भूगोलज्ञः, खगोलविज्ञः, ज्योतिःशास्त्रवित्, आयुर्वेदवेत्ता, नैकभाषावेदी, नैकलिपि-लेखन-कुशलः, भौतिक-विज्ञान-मर्मग्राही, लोकवृत्तनिपुणः, लेखनप्रवीणानां धुरीणः, चतुरः पत्रपण्डितः,संस्कृत-गद्य-ग्रथन-प्रजापतिः, नैकविध-गद्य-पद्य-प्रबन्ध-संग्रथन-समादित-पृथुयशाः, व्याख्याकारः, अनुवादकधुर्यः, स्वदेशे विदेशे च विदुषां प्रियतमः चन्द्रिका-सूनृतवादिन्योः संपादकः अप्पाशास्त्री राशिवडेकरः ग्रन्थिज्वरेण दिवं गतः इति समाकर्ण्य निखिलं संस्कृत-भारतवर्षं व्यथितम् अभूत्। अनेक-प्रान्तीय-पत्रिकासु श्रीअप्पाशास्त्रिणां निधनस्य वृत्तं गुणकीर्तनं च प्रकाशितम् अभूत्। यथोपलब्धं पत्रिकाणाम् एतासां नाम-तिथि-प्रदेशाः अधः निर्दिश्यन्ते—

| नाम | तिथिः | प्रदेशः |
|---|---|---|
| १ केसरी (मराठी) | २८।१०।१९१३ | पुणे |
| २ हिन्दीचित्रमयजगत् (हिन्दी) | डिसेम्बर १९१३ | |
| ३ सरस्वती (हिन्दी) | मे १९१५ | काशी |
| ४ संस्कृतरत्नाकरः (संस्कृत) | डिसेम्बर १९१३ | राजस्थानम्। |
| ५ सहृदया (संस्कृता) | १९१५ | केरलाः। |
| ६ मञ्जुभाषिणी (संस्कृता) | १।११।१९१३ | मद्रास-प्रदेशः। |
| ७ वङ्गवासी (बङ्गाली) | नोव्हेम्बर १९१३ | कलकत्ता |
| ८ चित्रमयजगत् (मराठी) | नोव्हेम्बर १९१३ | पुणे |
| ९ दि डॉन (The Dawn) (इं.) | ३०।१०।१९१३ | कलकत्ता |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एताः सर्वाः अप्पाशास्त्रिणां समकालिकाः पत्रिकाः सन्ति। एषु सर्वेषु पत्रेषु अस्मिन् प्रघट्टे निर्दिष्टाः अप्पाशास्त्रिणां वैदुष्यस्य चातुर्यस्य च सर्वेऽपि विशेषाः संपादकमहाभागैः प्रशंसिताः।

तत्र पठ्यन्तां केषांचित् रचनाः —

(अ) भट्टश्रीरमानाथशास्त्रिणः। (संस्कृत रत्नाकर डिसें. १३)

" वेदान्तेषु किमेक एव किमसौ साहित्यसाराम्बुधिः
किं वा वेदधुरन्धरो यदुत किं शाब्दे विदामग्रिमः।
संख्यावान् किमु कापिले परिचितः कामं नु काणादके
किंवा धर्मदृशामसौ तु विदुषामग्रेसरः केसरी ॥"
सूक्तीनां सविता सुधाद्रवमुचां वक्तोचितानां गिराम्।"

(आ) म.म. पं. श्रीगिरिधरशर्मचतुर्वेदानाम् (सं. रत्ना. डिसें. १३)

" पाठकाः ! कियत् कठिनमिदं कार्यं संस्कृत-भाषायां पत्र-प्रकाशनं नामेति त एव जानन्ति वराकाः, येषां शिरसि निपतितोऽयं भारः। तत्र न केवलं मासिकस्य, किं तु साप्ताहिकस्यापि पत्रस्य सहैव प्रकाशनम्, स्वयमेव संपादकत्वमाधिपत्यं प्रकाशकत्वं च, नास्ति गृहे काऽपि विशिष्टा संपत्तिरिति जीविकार्थं कार्यान्तराश्रयणम्। अस्त्ययं संस्कृतानुरागः श्रीमद्भिः कश्चन दृष्टः ? प्रश्नोऽयं स्वहृदयेनैवोत्तरणीयः।

" पत्रसंपादनमतिरिच्य (अनेन कृताः) संस्कृते टीकाः याः खलु विद्वन्मनोहराश्च विद्यार्थि-जनोपकारिकाश्च सकलसाहित्याङ्ग-प्रकाशिकाश्च।"

(इ) श्रीहरिहरसुरूपशास्त्रिणः। (सरस्वती, मे १९१५)

शास्त्रीजीके संस्कृतभाषणको श्रवण करनेका एक समय मुझे भी सौभाग्य प्राप्त हुआ है। मुम्बईमें चन्द्रावाडीमें आपके दर्शन हुए। उसी समय सनातन-धर्म-विषयपर सरस ओजस्विनी संस्कृतभाषामें शास्त्रीजीने सुललित भाषण दिया था। उस भाषणकी गून्ज़ अद्यावधि हमें मुखरित करती है।"

अस्य च अयं सारः —

" अप्पाशास्त्रिणां संस्कृत-भाषणश्रवणस्य सौभाग्यं मयाऽपि सकृत्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संप्राप्तम्। मुम्बई-नगरे चन्द्रावाडी-प्रासादे तत्रभवतां दर्शनम् अभूत्। तस्मिन् एव समये सनातन-धर्मम् अधिकृत्य सरसया ओजस्विन्या च संस्कृतभाषया शास्त्रिणां व्याख्यानम् अजायत। भाषणस्य अस्य गुञ्जनम् अद्यापि नः मुखरयति। " इति।

(उ) भट्टकेशवशर्मगलगलीमहोदयस्य। (सहृदया १९१५)

" समुदेति बुधाः पुनः क्षितावचिरात् संस्कृतचन्द्रिका मम।
तव तच्चरमं वचोऽधुना हृदयं पण्डित दन्दहीति मे॥ "

(ए) कविमुकुन्दरायस्य। (पं. मिरजकर मुकुन्दशास्त्रिणः)
(चित्रमयजगत् डिसेंबर १९१३)

" वचने धिषणो महाकवी रसवद्-गद्य-विलेखने पटुः।
कविहृद्गतबोधपण्डितोऽखिलविद्याभिरिव स्वयंवृतः॥ "

(ओ) पं. मिरजकर मुकुन्दशास्त्रिणः। (सहृदया १९१५)

" यः किल कालिदास इव मनोहर-कविता-निर्माण-निष्णातः, बाण इव नानाविध-सरस-ग्रन्थ-प्रणेता, मल्लिनाथ इव महाकाव्य-सप्रमाण-व्याख्यान-कुशलः, चन्द्र इव समुत्कण्ठित-चकोर-कुलस्य प्रसादयंश्चेतांसि रसिक-मण्डलस्य चन्द्रिकाविष्करणेन, सौभाग्यतिलक इव भगवत्याः सरस्वत्याः, निधिरिव विद्यानाम्, आदर्श इव गुणानाम्, मित्रमिव धर्मस्य, काल इवाधार्मिकजनानाम्, यः किल युवाऽपि विवेकवृद्धो न केवलं भरतखण्डमिदं निजेन विशुद्धेन यशसा किन्त्वन्यान्यपि बहूनि राष्ट्राणि धवलीकृतवान्, सोऽयं विद्यावाचस्पत्याद्यनेक-पदवी-समारूढः समुपगतो दृष्टिविषयं दुरात्मनो युक्तायुक्त-विवेक-रहितस्य नितान्त-निर्दयस्य मृत्युहतकस्येति निवेदयतां सुतरां व्याकुलीभवति नश्चेतः। ' इति इति इति च।

## २. कौटुम्बिकः परिशेषः।

पुण्यपत्तने श्रीमदप्पाशास्त्रिणाम् उत्तरकार्यानन्तरं तेषाम् अकाण्ड एव वैधव्य-महाप्रहार-विध्वस्त-सर्वस्वा बाला भार्या श्वशुराः च औदुम्बरे स्वगृ प्रत्यागताः। प्रत्यागमन-समये श्वशुरमहोदयैः तेषां सर्वम् अपि

अ. च. १६

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सामग्रीजातम् आनीतम् । अप्पाशास्त्रिणां ग्रन्थसंग्रहः नैकभाषामयः नैकलिपिमयः नैकविषयात्मकः सुसमृद्धः आसीत् इति निवेदितपूर्वम् एतत् । अतः च अत्यन्तावश्यकानि कानिचित् पुस्तकानि स्वस्य कृते संरक्ष्य अन्यानि सुविपुलानि पुस्तकानि श्वशुरमहोदयैः अप्पाशास्त्रिणां सुहृद्भ्यः प्रदत्तानि। अप्पाशास्त्रिभिः पारितोषिकत्वेन लब्धः शब्दकल्पद्रुमाख्यः महाकोशः श्रीमदप्पाशास्त्रिणां मित्रप्रवरैः पं. **लिङ्गेशशर्मविद्याभूषणैः** प्रार्थितः इति सोऽयं तेभ्यः एव समर्पितः । एवं प्रकारेण पुण्यपत्तनीयं, संबन्धं निरवशेष्य बाला इयम् अप्पाशास्त्रि-भार्या मरणसहोदरं वैधव्यं पितृकुले यापितवती। सेयम् आत्मीयं जीवनं यथाक्रमम् औदुम्बरक्षेत्रे (**श्रीनागेशशास्त्रिशर्मणः**) कोल्हापुरे च (**श्रीरामकृष्णशर्मणः**) भ्रातुः सदने गमयित्वा स्ववयसः ५४ तमे वर्षे १८७५ तम-शक-वर्षस्य आश्विन-सुदि एकादश्यां कोल्हापुरे एव भौतिकं कलेवरं तत्याज ।

इदानीम् अप्पाशास्त्रिणां साक्षाद्-वंशपरंपरा-धूर्वहः कोऽपि नास्ति। राशिवडे-ग्रामे तु एतेषां कुलजाः निवसन्ति, स्मरन्ति च ते च तत्साहित्य-मुग्धाः अपरे च सश्रद्धमेव तान् एतान् ।

**३. चन्द्रिका-पुनःप्रकाशन-प्रयत्नाः ।**

श्रीमदप्पाशास्त्रिभिः किल प्रतिबद्ध-चन्द्रिकायाः पुनःप्रकाशनार्थं शासकेभ्यः संमतिपत्रं लब्धम् । किं तु अकस्मात् एव समापतितेन तेषां निधनेन चन्द्रिका नैव प्राभवत् आत्मानम् आविष्कर्तुम् । अथापि अप्पाशास्त्रिणां कोल्हापुरीय-सुहृन्मण्डलेन चन्द्रिकायाः पुनःप्रचारणं मनसि कृतम् । अप्पाशास्त्रिणां निधनावसरे पं. **जयचन्द्रशर्मसिद्धान्तभूषणाः** काश्याम् आसन् । कोल्हापुरात् - पण्डित - प्रवरैः **श्रीबाळाचार्यखुपेरकर-महाभागैः** **श्रीजयचन्द्रशर्मणां** सकाशे चन्द्रिका - पुनः -प्रकाशन-विषयकः विचारः निवेदितः । **जयचन्द्रशर्मभिः** अपि स्वकीयां संमतिं प्रकटीकृत्य चन्द्रिका-ग्राहकाणां नामावली अपि प्रेषिता । 'अवश्यमेव मयाऽपि साहाय्यं करिष्यते' इत्यपि निवेदितम् । आश्वासिताः च चन्द्रिकायाः पुनः-प्रचारणे समुत्सुकाः सर्वेऽपि । चन्द्रिकायाः प्रकाशनं पूर्वम् अपि ऋणभारेण एव संवृत्तम् । इदानीम् अस्याः व्यय-भारः केन वोढव्यः इति विचारे विलीनं प्रकाशनम् एतत् नैव मूर्ततां प्रतिपन्नम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदुत्तरं पुण्यपत्तनीयैः 'भारतसुधा' इति संज्ञिका संस्कृतभाषामयी मासिकपत्रिका प्रकाशयितुं संकल्पिता। यस्याः प्रथमाङ्कः १८५२ तमे शकवर्षे (इ. स. १९३०) प्रकाशितः, यत्र पं. मुकुन्दशास्त्रिप्रणीतम् अप्पाशास्त्रिणां लघुतमं चरितं प्रकाशितम्। किंतु भारतसुधा इयं प्रथमाङ्कमात्ररूपम् आविष्कृत्य सपदि तिरोहिता। अहो दौर्भाग्यं संस्कृत-जीवनस्य।

:

४. अप्पाशास्त्रिवचोवैखर्याः यशःपरंपरा।

मध्यमपर्वं आरभ्य उत्तमपर्वंपर्यन्तं निवेदितवृत्तान्तस्य परिशीलनेन पाठकैः अप्पाशास्त्रिणां वैशिष्ट्यं समवगतं स्यात्। तैः हि संस्कृतस्य व्यावहारिकता-प्रतिष्ठापनार्थं सामायिकादि-बहुविषयान् अवलम्ब्य सरल-मधुर-संस्कृत-भाषया लेखनं कृतम्। संस्थापितः च मासिक-साप्ताहिक-पत्रयोः परमोच्चः आदर्शः। वैदुष्यं प्रबन्धकत्वं च एतेषां बहुमुखम् आसीत्। अत एव लोकशास्त्रोभय-नैपुण्यम् अपि एतान् प्राप्य कृतार्थम् अभवत्। एतेषाम् एव परिश्रमेण महाकर्मणा च तदुत्तर-कालिकाः संस्कृत-प्रचारण-निष्ठाः प्रपोषिताः। मार्गदर्शकत्वं पुनः अप्पाशास्त्रिरचनानाम् अखण्डम् एव प्रतिष्ठास्यति इत्यत्र न नः संदेहः।

अस्य वर्षशतकस्य प्रथमः पादः भारतवर्षस्य महीयसे सौभाग्याय निरुपमं समुज्ज्वलत्वं प्रदत्तवान्। सर्वेषु हि विभिन्न-क्षेत्रेषु तदानीं भारतवर्षे सुविपुलाः एव नरश्रेष्ठाः संजाताः। तत्र संस्कृत-संजीवनस्य यत् इदानीं किम् अपि सौरभ्यं दृश्यते, तत्र श्रीअप्पाशास्त्रिणां प्रयत्नाः किमपि असाधारणं महत्त्वं धारयन्ति।

श्रीमदप्पाशास्त्रि-कृतीनाम् एवंविधं सामर्थ्यम् आलोक्य एव भूयोभिः श्रीमदप्पाशास्त्रिणां चरितं च वाङ्मयं च उद्दिश्य बहु लिखितं लिख्यते लेखिष्यते च। तत्र अद्ययावत् संवृत्तेषु अप्पाशास्त्रि-विषयक-प्रयत्नेषु प्रथमः मञ्जूषा-नामिकायाः कलकत्तातः प्रचारितायाः संस्कृत-मासिक-पत्रिकायाः १८८२ तमशाकवर्षीयचैत्रे (March 1961) प्रकाशितः अप्पाशास्त्रिस्मृत्यङ्कः। तस्याः पत्रिकायाः संपादकाः स्वर्गीयाः पण्डित-प्रकाण्डाः श्रीक्षितीशचन्द्रचट्टोपाध्यायमहाभागाः अप्पाशास्त्रिणां परम-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भक्ताः आसन् । तैः खलु शास्त्रिणां वाङ्मयं यावच्छक्यं समासादितम् । केऽपि निबन्धाः पत्राणि च अप्पाशास्त्रिणां मञ्जूषायां प्रकाशितानि ।

अप्पाशास्त्रिणां **लावण्यमयी** इत्येषा दीर्घ-कथा चन्द्रिकातः समुद्-धृत्य तेषां शिष्यप्रवरैः **श्रीसहस्त्रबुद्धेचिन्तामणि**महाभागैः ख्रिस्तीये १९२० तमे वर्षे धारवाडे **श्रीशंकराचार्य-पाठशालायां** प्रकाशिता । इयं च पं. **क्षितीशचन्द्र**महोदयैः अपि मञ्जूषायां पुनः प्रकाशिता ।

अप्पाशास्त्रिविषयकः द्वितीयः महत्त्वपूर्णः प्रयत्नः नाम सागर-विद्यापीठस्य च्छात्रैः **श्रीहीरालालशुक्लमहोदयैः** वाचस्पति ( Ph. D.)-परीक्षार्थम् '**अप्पाशास्त्रिकृतिपरिशीलनम्**' (अप्पाशास्त्रि कृतियोंका अभ्यास)[1] इति संज्ञकः महान् प्रबन्धः प्रणीतः इति । प्रबन्धः तु अयं ख्रिस्तीये १९६४ वर्षे विलिखितः तैः । अत्र च सामान्यतः जीवनचरित-वाङ्मयप्रकार-काव्यादि-परीक्षण-प्रभृति-विषयाः आधारप्रदर्शनपूर्वकं परि-मण्डिताः । यत् सत्यं प्रबन्धम् इमं विरचय्य प्रा. शुक्लमहाभागैः अधमर्णी-कृता अप्पाशास्त्रि-भक्तमण्डली ।

तृतीयः पुनः निर्देशार्हः अप्पाशास्त्रिविषयकः प्रयत्नः नाम प्रा. **अकलूजकरोपाख्यैः अशोकशर्मभिः** प्रणीतः '**अप्पाशास्त्रि-साहित्यसमीक्षा**' नाम प्रबन्धः । प्रबन्धः अयं शकस्य १८८७ तमे वर्षे (इ. स. १९६५) पुण्यपत्तनवर्ति **शारदासंस्कृतपत्रिकायाः** गौरवग्रन्थमालायां प्रकाशितः । अत्र सामान्यतः अप्पाशास्त्रि-विरचित-गद्य-पद्य-काव्य-प्रबन्धानां समालोचना विद्यते ।

उपरि निर्दिष्टाः सर्वेऽपि पण्डितवर्याः संस्कृतविद्यायां कृत-भूरि-परिश्रमाः अप्पाशास्त्रिषु सुदृढ-श्रद्धाः च । विशेषतः अन्त्ययोः द्वयोः ग्रन्थयोः अप्पाशास्त्रि-कृतीनां समालोचना विद्यते । किं तु यदि विद्या-वाचस्पतीनां वाङ्मयस्य वैपुल्यं वैविध्यं च निध्यायेत, तदा यावदपेक्षिता तेषां वाङ्मयस्य समीक्षा नैव संवृत्ता इति मतिः भवति । तत्तादृश-विविध-वाङ्मय-परामर्शार्थं हि तत्तादृशविविध-विषयमर्मवेदी प्रतिभावान् लेखकः आवश्यकः । नैव खलु एतत् अशक्य-संभवं प्रतीयते अस्माभिः । **वाचस्पतेरपि भवेद्धि समानधर्मा, कालो ह्ययं निरवधिर्विपुला च पृथ्वी ।**

कै. पं. म. पां. ओकमहोदयैः नलसावित्री-व्याख्या पुनरपि १९१७

---

१ अयं प्रबन्धः संस्कृत-भाषा-प्रेमिकाणां कृते संस्कृतभाषामयः चिकीर्षितः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तमे खिस्तवर्षे मुद्रापिता। पुण्यपत्तनवर्तिन्यां भारतवाणी-संज्ञक-संस्कृत-पत्रिकायाम् अप्पाशास्त्रिणां काश्चित् महत्त्वपूर्णाः रचनाः प्रकाशिताः।

भवितव्य-मञ्जूषा - भारतवाणी- शारदा - गुञ्जारवेत्यादि-संस्कृत-पत्रिकासु, एकता-केसरी-मराठा-स्वराज्येति-महाराष्ट्र-भाषापत्रेषु, हिन्दी-भाषामये वेंकटेश्वर-समाचारपत्रे च अप्पाशास्त्रिणां चरितमयाः प्रबन्धाः प्रकाशिताः। अनेन संस्कृत-ज्ञानाम् इव भाषान्तर-विज्ञानाम् अपि अप्पाशास्त्रिविषयकः आदरः स्पष्टः भवति। यदि नाम-केऽपि महत्तराः मनसि कुर्युः तदा अप्पाशास्त्रिणां वाङ्मयस्य विषय-विभागेन खण्डशः प्रकाशनं नैव अशक्यम् इति संभावयामः। तादृशं च सुदिनं प्रतीक्षामहे।

### ५. विद्वदभिप्रायाणां परंपरा।

#### (अ) प्रा. ए. बी. गजेन्द्रगडकराणाम्—

"Pandit Appashastri Rashivadekar is too Wellknown to Sanskritists not only in this (Bombay) presidency but all over India. His writings were an eloquent ans er to the plea often made by ignorant people that Sanskrit as a vehicle of modern thought and literature is unsuited, and he was the first man, I believe, who clearly demonstrated the elasticity of Sanskrit and its capability to serve the purposes of a modern writer, for Appashastri wrote on almost all the topics under the sun, in a variety of style, which was peculiarly his. He wields his pen in Sanskrit almost with the familiarity with which one would do so in one's vernacular." — धारवाड-प्रकाशित-लावण्यमयी-प्रस्तावना।

(पण्डित श्रीअप्पाशास्त्रिराशिवडेकरमहोदयाः न केवलम् अस्मिन् एव प्रान्ते (मुम्बई-विभागे) अपि तु समस्त-भारते संस्कृतज्ञेषु सुप्रथिताः। अर्वाचीन-विचार-वाङ्मय-धारायाः आविष्करणे संस्कृतं न समर्थम् इति केऽपि अज्ञप्रायाः प्रजल्पन्ति। किं तु शास्त्रिणां लेखनं पूर्वोक्ताक्षेपस्य क्रियाशालि प्रत्युत्तरं वर्तते। अप्पाशास्त्रिणः एव संस्कृतभारत्याः सामर्थ्यं च नव्य-विचार-निवेदन-क्षमत्वं च सुस्पष्टं प्रतिष्ठापितवन्तः अग्रगण्यत्वम् आवहन्ति इति मे विश्वासः। यतः ते जगति अस्मिन् वर्तमान-समस्त-विषयान् अधिकृत्य व्यलिखन्। भाषा-सरणिः तु एतेषां दधाति किमपि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वैशिष्ट्यातिशयम् । श्रीअप्पाशास्त्रिणः सरलतया च सहजतया च लेखनीं संस्कृतभाषायां तथा प्रवर्तयन्ति, यथा खलु कोऽपि स्वीय-जन्मभाषायां विलिखेत् । इति ।

(आ) श्री. आर्. एस्. कृष्णमाचार्याणाम् —

Appashastri conducted Sunrita-Vadini on general topics, in which he demonstrated the capacity of Sanskrit being a general vernacular.

The Sanskrit translation of 'Aladin and wonderful lamp' from Arabian Nights by Appashastri Rashivadekar excells the original in narration. —History of classical Sanskrit

(अप्पाशास्त्रिभिः सूनृतवादिन्यां प्रायः सर्वेऽपि विषयाः प्रवर्तिताः । अनेन व्यतिकरेण संस्कृतभाषायाः सर्वसाधारणत्वस्य सामर्थ्यं प्रतिष्ठितम् अभवत् । 'अरेबियन नाइट्स्' (अरब-रजनी) ग्रन्थान्तर्गतस्य 'अल्ला-उद्दीनस्य विस्मापकः दीपः' इति कथायाः संस्कृतानुवादः अप्पाशास्त्रिभिः कृतः यः कथा-निवेदन-कर्मणि मूलग्रन्थम् अपि अतिशेते । इति । )

(उ) आचार्यमहावीरप्रसादद्विवेदानाम्—

"संस्कृतचन्द्रिका और सूनृतवादिनीके संपादक श्रीयुत अप्पाशास्त्री राशिवडेकर संस्कृतके बडे भारी विद्वान् और काव्यशास्त्रके परमोत्कृष्ट ज्ञाता है । कविता आपकी वडीही रसवती होती है ।"

—'सरस्वती, मार्च १९१०'।

(ऊ) वाई महालिङ्गशास्त्रिणाम् ।

"Pioneer of Modern Sanskrit Prose."

"अप्पाशास्त्रिणः आधुनिक-संस्कृत-गद्यस्य मार्ग-प्रतिष्ठापकाः सन्ति ।"

(ए) म. म. द. वा. पोतदारमहाशयानाम् —

"The late Appashastri Rashivadekar proved him-self a master in conducting journals in Sanskrit where in he handled modern subjects with extra-ordinary ease and grace."

— Inside Maharastra, All India writers conference

(स्वर्गीय श्रीअप्पाशास्त्रिराशिवडेकरैः संस्कृतभाषया पत्रिकाप्रवर्त-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नस्य स्वयं नैपुण्यं प्रकटीकृतम् । यत्र तैः अतीत-व्यवहारोपयुक्त-सुबोधत्वं सौन्दर्यं च समाश्रित्य प्रपञ्चिताः आधुनिकविषयाः । )

(ओ) म. म. श्रीगिरिधरशर्मचतुर्वेदानाम् —

"१९६२ तमे वैक्रमेऽब्दे (१८२७ तमे शाकवर्षे) काशीपुर्यां प्रयागे च कुम्भपर्वावसरे श्रीभारतधर्ममहामण्डलस्याधिवेशने स महोदयः (अप्पाशास्त्री) समागतः । तत्रोभयत्र तस्य महाभागस्य साक्षाद्दर्शनमवाप्यानुभूतं कीदृशं गम्भीरं पाण्डित्यम् कीदृशं सौहार्दं मधुरभाषित्वं च तत्र समवेतमभूदिति । श्रीमदप्पाशास्त्रिमहाभागेन परिचालिता संस्कृतचन्द्रिका संपादनसौष्ठवेन शीघ्रमेव सर्वमपि भारतं व्याप्नोत् । एतस्याः संपादन-प्रकाशनादिकं सर्वं शास्त्रिमहोदयेनैव निर्व्यूढम्, परं स्वकीयं नाम सदा सहकारिसंपादकत्वेनैव निर्दिष्टम् । मुख्यसंपादकत्वे तु जयचन्द्रमहाशयस्यैव नाम सर्वदापि ख्यापितम् अनेनैवानुमेयमस्य महाशयस्यौदार्यम् । वस्तुतस्तु सत्यमिदं यद् बहुलतर-ग्रन्थ-रत्न-समुज्ज्वलापि संस्कृतभारती समयोपयोगिनीं व्यावहारिकतां श्रीमताऽप्पाशास्त्रिणैव नीता । तेन च हिन्दीभाषया व्यावहारिकत्व-प्रतिष्ठापने यावान् समादरः श्रीभारतेन्दुहरिश्चन्द्रमहाभागस्य हिन्दी-भाषा-जगति, तावन्तमेव समादरं संस्कृतसमाजेऽधिकरोति श्रीमानप्पाशास्त्रिमहाभागः ।"

— मार्च १९६१ वर्षीयः 'मञ्जूषा-' विशेषाङ्कः ।

(औ) श्रीमत्पूज्यपादपण्डितश्रीभालचन्द्रशास्त्रिणाम् —

"सप्रश्रयमनारतं सुस्मूर्षामहे कृतधियं सुकृतपरिपाकैकसमासाद्यवाणी-वैशारद्यं सौपर्वाण-वाङ्मय-नवीनीकरण-नयानवद्यं विद्वत्-तल्लजं श्रीमदप्पाशर्माणमन्तर्वाणिमणिम् । यत् सत्यं कस्यापि नापैति स्मृतिपथान्महानुभावोऽयं सुरभारतीप्रणयिनो भारताभिजनस्य जात्वपि यदीयं मधुररस-स्यन्दि सुषमा-विशेष-भूषितं भाषा-पीयूषमास्वदमाना रसिकावतंसा खल्वद्यापि संधुन्वन्ति सानन्दसंधुक्षणं शीर्षं क्षणं क्षणं ब्रह्मानन्द-सब्रह्मचारिणा संमोदभरेणेति । सर्वथा महाभागोऽयं तथा किलोपकार्षीद् भारतस्य विशेषतश्चार्यविद्याया धार्मिकस्तोमस्य विपश्चिद्वर्यस्य च यथा न मनागप्याभूतसंप्लवमा च ग्रहतारापतिताराभ्यः शाश्वतीभ्यः समाभ्यः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्मरणस्मरणैर्न प्रच्यवेताभिख्यास्य सारस्वत-प्रिय-कुमारस्य श्रीमतोऽप्पाशर्मणः । ”

— मार्च १९६१ वर्षीयः मञ्जूषा-विशेषाङ्कः ।

(क) पण्डितप्रवरश्रीक्षितीशचन्द्रचट्टोपाध्यायानाम् —

“ यः खलु पारावार आसीत् पाण्डित्यस्य, प्रतिमूर्तिः प्रतिभायाः, प्रतिद्वन्द्वी प्रतिकूलदैवस्य, यमेवोपघ्नद्रुममवलम्ब्य चिराय कुसुमिता गीर्वाण-गद्य-कल्पलता, येन खलु बाल्यादारभ्य तृणीकृत्य सुखदुःखे समारचिता भगवती सुरसरस्वती, यस्मै च स्पृहयन्ते स्म आसेतुहिमाचलं संस्कृतज्ञाः, यस्माच्चोद्विजन्ते स्म हालाहलादिव धर्मद्रोहिणः पाषण्डिनः, यस्य चामृतमयी लेखनी निरन्तरमेव व्यापृतासीद् गद्य-पद्य-विनिर्माणकर्मणि, यस्मिंश्च समदृश्यत सुदुर्लभ-सामानाधिकरण्यं वैदुष्यस्य च सौजन्यस्य च धार्मिकत्वस्य च गुणज्ञत्वस्य च तादृशस्य महात्मनश्चरितमवगन्तुं कस्य वा सचेतसश्चेतो न समुत्कण्ठते ? ”

— १९६१ मार्च-मञ्जूषाविशेषाङ्कः ।

(ख) प्रा. अशोकशर्मणाम् अकलूजकरमहोदयानाम् —

“संस्कृतसमुद्धर्तारः, ऐहिकविषयपरस्य संस्कृतनिबन्धस्य मार्गदर्शिमहर्षयः, महादेशभक्ताः, महाराष्ट्रस्य प्रथमे प्रभाववन्तः संस्कृतपत्रपण्डिताः अप्पाशास्त्रिणः विपुलं विविधं च लिखन्तः शिवभक्ताः अप्पयदीक्षिततुल्याः पण्डिताः, कवयः अभिमानिनः प्रसन्न-वचोविन्यासाः खरतरोपहासप्रभवजगन्नाथपण्डित-सदृशाः नूतनस्य संस्कृत-निबन्धस्य प्रणेतारः पण्डिताः स्वदेशनिष्ठाः, पर-पक्षोपहास-प्रवीणाः विष्णुशास्त्रि-चिपळूणकरकक्ष्याः । ”

— अप्पाशास्त्रि-साहित्य-समीक्षा ।

(ग) आचार्योपाधिकानाम् अत्रेमहाभागानाम् —

“ अप्पाशास्त्री वेगाने संस्कृत बोलत. संस्कृत ही जवळ जवळ त्यांची मातृभाषाच होती. इतकें लालित्यपूर्ण आणि प्रासादिक संस्कृत बोलणारा आणि लिहिणारा, वक्ता आणि लेखक मी तरी माझ्या आयुष्यांत दुसरा पाहिला नाही. **सूनृतवादिनी** नांवाचें एक साप्ताहिक आणि **संस्कृतचन्द्रिका** नांवाचें एक मासिक अप्पाशास्त्री संस्कृतभाषेंतून कित्येक दिवस चालवीत होते, हें त्यांचें अविस्मरणीय स्मारक आहे. — ‘कऱ्हेचें पाणी, खंड १

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(अप्पाशास्त्रिणां संस्कृत-भाषणं वेगवत्तरं जन्मभाषावत् एव आसीत्। ललितसुन्दरं प्रासादिकं च एतादृशं संस्कृत-वक्तव्यं लेखनं च न मया अद्यावधि अन्यत्र प्रत्यक्षीकृतम्। **सूनृतवादिनीति** साप्ताहिकं **संस्कृतचन्द्रिकेति** मासिकं च पत्रं अप्पाशास्त्रिभिः बहुकालं यावत् संस्कृत-भाषायां प्रवर्तितं, यत् तेषाम् अविस्मरणीयं कार्यं वर्तते।)

(घ) प्रा. **हीरालालशुक्लमहाभागानाम्** —

"(अप्पाशास्त्री) कविताके क्षेत्रमें पारंपरिक-शृंगारिक विषयोंका त्याग कर नवीन विषय, भाषा तथा शैली लेकर आये। संस्कृतके उच्छृंखल निबंधको एकतानता दी। नाटककारोंको तत्कालीन समस्याओंपर नाटक लिखनेकी प्रेरणा दी। संस्कृतमे उपन्यासोंका आदर्श उपस्थित करनेके लिये लावण्यमयी, इंदिरा आदि अनेक बंगला उपन्यासोंका अनुवाद किया। संस्कृत-साहित्यकी आलोचनप्रणालीका कायाकल्प किया। चन्द्रिकाका संपादन करके संस्कृतके सामयिक साहित्यके अभावोंकी पूर्ति की। सूनृतवादिनीनामक साप्ताहिकपत्रिकाके संपादनद्वारा उन्होंने संस्कृतसाहित्यकारोंको राजनीतिक पाठ पढाया। संस्कृतसाहित्यमें राजनीतिक विचारधारा का सूत्रपात करने तथा उस युगमें आङ्ग्लशासनकी कडी आलोचना करनेका श्रेय इन्हीको है। क्लिष्ट तथा अव्यावहारिक संस्कृतको सरल तथा व्यावहारिक बनाकर उन्होंने उसके इतिहासको परिवर्तित कर दिया। उन्होंने साहित्यकाही नही, एक युगका भी निर्माण किया। वस्तुतः शास्त्रीजी संस्कृत-पत्रकारिताके भीष्मपितामह थे।"

— "**अप्पाशास्त्री : कृतियोंका अध्ययन**"

(अप्पाशास्त्रिणः काव्यक्षेत्रे पारंपरिकं शृङ्गारं विहाय नव्य-विषय-भाषाशैलीः प्रादुरभावयन्। संस्कृत-निबन्ध-विषयः एतैः सुसूत्रः कृतः। नाटक-प्रणेतारः प्रचलित-विषय-लेखने प्रवर्तिताः। लावण्यमय्यादि-वङ्ग-भाषामयान् उपन्यासान् संस्कृतेन अनुवाद्य उपन्यासस्य संस्कृतादर्शः प्रतिष्ठापितः। समालोचनापद्धतिः संस्कृता। सामाजिक-वाङ्मयस्य अभावः विनाशं गमितः। **सूनृतवादिनीद्वारा** संस्कृतविद्वांसः राजकारणं पाठिताः। संस्कृत-भाषायां राजकारण-विषयक-लेखनस्य आङ्ग्ल-शासनस्य कठोरालोचनस्य च श्रेयः अप्पाशास्त्रिणाम् एव विद्यते। संस्कृतं व्यवहारोपयोगि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृतम् एतैः। संस्कृतवाङ्मयस्य इतिहासः एभिः परिवर्तितः। न केवलं साहित्यमेव अपि तु युगमपि एकं निर्मितम् एभिः।

शास्त्रिवर्याः वस्तुतया संस्कृत-पत्रकारितायाः भीष्म-पितामहाः आसन्।

(ङ) पं. अण्णाशास्त्रिणाम् अर्जुनवाडकराणाम्—

"श्रीमान् अप्पा राशिवडेकरः मम प्रियः सुहृद्वरः। स मनोज्ञः, धीमान्, संस्कृतभाषाभिमानी, तमादरेण वयं स्मरामः।"

एवं नैकविधानाम् अप्पाशास्त्रि-विषयक-लेखानां समवलोकनेन विज्ञायते यद् अद्यापि नैकेषां विदुषां श्रद्धा विद्यावाचस्पतिविषये अपूर्वत्वं विस्पष्टयति। यत् च अस्माभिः पूर्व-पर्वणि ८-९ इति प्रघट्टयोः प्रतिपादितं तत् पूर्वोक्तानां विद्वदभिप्रायाणां समूहैः समर्थितं भवति।

६. अप्पाशास्त्रि-वाङ्मयम्।

अप्पाशास्त्रिणां वाङ्मयस्य नैकविषययुक्तत्वं नैकविधत्वं च एतावत्पर्यन्तं विज्ञातम् एव पाठकैः। तस्य एव संग्रहेण अत्र प्रदर्शनं क्रियते।

(अ) वाङ्मय-प्रकाशन-रूपम्।

अप्पाशास्त्रिणां वाङ्मयम् (१) स्वतन्त्रग्रन्थरूपेण। (२) पत्रिकासु, (३) पत्ररूपेण च प्रकाशितम्।

(आ) वाङ्मय-भाषा।

अप्पाशास्त्रिणां वाङ्मयं प्रायः १) संस्कृतभाषायाम् एव विद्यते। अथापि २) मराठीभाषायाम्, ३) आङ्ग्लभाषायां च अपि वर्तते। तत्र मराठीभाषायाम् अनुवादाः, किंचित् स्वातन्त्र्येण प्रबन्धादिकं च, आङ्ग्लभाषायां तु विज्ञापनमात्रम्।

(ई) वाङ्मयोत्पादनम्।

अप्पाशास्त्रिणां वाङ्मयं १) स्वतन्त्रलेखनम्, २) व्याख्यारचना, ३) अनुवादात्मकम् इति त्रैविध्ये समुत्पन्नम्।

(ऊ) वाङ्मय-बन्ध-प्रकारः।

अप्पाशास्त्रिवाङ्मयं गद्यमयं, पद्यमयं, मिश्रं च अस्ति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(ए) **वाङ्मय-विषय-स्वरूपम् ।**

सर्वमपि एतत् वाङ्मयं — १) शास्त्रार्थः २) काव्यं ३) निबन्धः ४) व्याख्या ५) अनुवादः इति पञ्चविधं विद्यते । तत्र शास्त्रार्थः नाम जटिलशास्त्रीय-प्रमेयानां प्रतिपादनम् । काव्यं प्रसिद्धम् । निबन्धप्रकारः च सर्वेषां सुविज्ञातः । यत्र सुसरलरीत्या गद्यमयं विवेचनं भवति । व्याख्या अनुवादः चेति प्रसिद्धमेव ।

(ओ) **वाङ्मय-विषय-प्रकाराः ।**

**शास्त्रार्थः** — मीमांसा, धर्मशास्त्रं, व्याकरणम्, अलङ्कारशास्त्रं च समवलम्ब्य अप्पाशास्त्रिभिः विद्वन्मात्रगम्याः प्रबन्धाः विलिखिताः । तत्र **मीमांसायाम्**-याजुषहौत्रविचारसंक्षेपः । **धर्मशास्त्रे**-मातृगोत्रनिर्णयः, एकादशी-श्राद्धविधि-निर्णयः इ. । **व्याकरणे** — हिन्दुशब्दविचारः परःशतशब्द-विचारः इ. । **अलङ्कारे**-संदेहे निर्णयः इ. ।

**काव्यम्** — अप्पाशास्त्रिणां काव्यं नैकप्रकारकं विद्यते । काव्य-प्रकाराः तेषाम् उदाहरणानि च यथा —

**गद्यकाव्ये** — १. आख्यायिका (कादम्बरी) — लावण्यमयी ।
२. कथा — धर्मस्य सूक्ष्मा गतिः । राजकुमारः कमलानन्दः इ. ।
३. विनोदाः — अनेके ।

**पद्यकाव्ये** — ४. महाकाव्यम् — गोकर्णसंभवम् । (केवलमुल्लिखितम्)
५. खण्डकाव्यम् — वल्लभविलापं, पञ्जरबद्धः शुकः इ. ।
६. सुभाषितानि — असंख्यानि ।
७. अवतरणिकाः — वर्षावतरणिकाः, मासावतरणिकाः ।
८. स्तोत्राणि — प्रबन्धारम्भे कृतानि मङ्गलपद्यानि ।
९. समस्यापूर्तयः — सुबहुलाः ।

**मिश्रकाव्ये** — १०. नाटकम् — अधर्मविपाकम् । (केवलम् अङ्कद्वयं प्राप्यते)

**निबन्धाः** — अप्पाशास्त्रिभिः भूयिष्ठान् विषयान् अधिकृत्य निबन्धलेखनं कृतम् । तत्र दृश्यन्तां तावत् निबन्धप्रकाराः —

१. दार्शनिकाः । २. धार्मिकाः । ३. आध्यात्मिकाः । ४. सामाजिकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

५. भूगोलीयाः। ६. खगोलीयाः। ७. आयुर्वेदीयाः। ८. विज्ञानीयाः। ९. राजकीयाः। १०. शैक्षणिकाः। ११. समालोचनात्मकाः। १२. संवादात्मकाः। १३. भाषाशास्त्रीयाः। १४. प्रासंगिकाः। १५. संशोधनात्मकाः। १६. चरितात्मकाः। १७. परिचयात्मकाः। १८. प्रस्तावात्मकाः। १९. भाषणानुवादाः। २०. पत्रात्मकाः। २१. इतिहासात्मकाः। २२. संकीर्णाः इत्यादि।

अथ निर्वर्ण्यन्तां केचित् निबन्धाः नामतः —

महाकविः श्रीकालिदासः। श्रीमदप्पयदीक्षितः। पण्डितराजश्रीजगन्नाथः। केन प्रणीतानि सांख्य-सूत्राणि ? मुनिप्रवरः श्रीपाणिनिः। कविप्रवरः श्रीमान् भट्टबाणः। वर्ण-लेखन-प्रचारः। प्रकृति-विज्ञानम्। ग्रन्थिज्वरः। ज्योतिस्तत्त्वम्। प्राचां भूगोल-विज्ञानम्। स्वदेशीय-कथा। ग्रहणम्। उद्धरेदात्मनात्मानम्। सामान्य-धर्म-प्रदीपः। संक्षिप्तं सांख्य-दर्शनम्। मातृभक्तिः। आयुर्वेदशिक्षणम्। अपि नाम विद्यते जीवो नाम ? श्यामजीकृष्णवर्मा। लालालजपतरायस्य जीवन-चरित-संग्रहः। हरितालिकाव्रते तृतीयानिर्णयः। समाजसंस्कारः। वैदेशिकवाणिज्यं भारतीयानां धर्मश्च। स्वदेशीयान्दोलनम्। जानपद-महासभा। जोसेफ् म्याझिनी-महाशयस्य केचिदुद्‌गाराः। पण्डितमहासभा। इंग्रेजानामनुशासनस्य गुणदोषाः। कस्येदं निर्वासनम् ? अपि नाम विदितमार्याणां मुद्रणशिल्पम् ? वार-क्रम-विमर्शः। धर्मपीठानि च धर्माचार्याश्च। इत्यादि।

निबन्धेषु एतेषु महाकविः कालिदासः प्रायः सपाद-शत-पृष्ठात्मकः पण्डितैः प्रशंसितः च। प्रकृति-विज्ञानम् इत्याख्ये निबन्धे पदार्थ-विज्ञान-शास्त्रस्य सूत्रबद्धं विवेचनं कृतम्। समालोचन-प्रबन्धाः तु सुबहुलाः एव सन्ति।

प्राचीन-कवि-पण्डितानां परिचयात्मकेषु निबन्धेषु कालादिनिर्णय-सरणिः अप्पाशास्त्रिणां सर्वथा वैशिष्टयं धारयति। एतैः हि प्रथमं भारतीय-वाङ्मय-विचारधारा प्रमाणीक्रियते स्म। पश्चात् च आवश्यकतानुसारं पाश्चात्त्य-लेखकानां मतानि। निबन्धानाम् एतेषां ग्रन्थरूपेण पुनः प्रकाशनं यदि भवेत् तर्हि सुसमृद्धा अपि सुरभारती काम् अपि रमणीयां सुषमां प्राप्नुयात् इत्यत्र न संशयः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**व्याख्या** — अप्पाशास्त्रिभिः मालविकाग्निमित्रे, वेणीसंहारे, बुद्धचरितस्य पञ्चसर्गेषु, महाभारतीये नलोपाख्याने, सावित्र्युपाख्याने च संस्कृतभाषया बालबोधिनी नाम व्याख्या प्रणीता।

व्याख्याविषये अप्पाशास्त्रिणाम् इयं प्रतिज्ञा आसीत् —

**पद्यं साकल्यतो गद्यं दुर्बोधांशे विशेषतः।**
**व्याख्यायते विनाऽऽयासं यथा बोधो घटिष्यते॥**
**प्रायेण संशयोच्छित्त्यै कोश-व्याकरणादिकम्।**
**यथास्थानमविस्तीर्णं सप्रमाणं प्रदर्श्यते॥**

इति। रामायणे व्याख्या आरब्धा किं तु नेयं पूर्णा अभवत्।

**अनुवादः** — अप्पाशास्त्रिभिः विष्णुपुराण-भविष्यपुराणयोः महाभारतस्य केषांचित् पर्वणां च महाराष्ट्र-भाषायाम् अनुवादः कृतः। क्वचित् प्रासंगिकादि-लेखार्थम् आङ्ग्लभाषामयप्रबन्धांशस्य अपि संस्कृते अनुवादः कृतः। लावण्यमयी, इन्दिरा, देवी कुमुद्वती, कृष्णकान्तस्य निर्वाणम् इति वङ्गभाषामयस्य आख्यायिका-चतुष्टयस्य अप्पाशास्त्रिभिः अनुवादः कृतः। तत्र लावण्यमयी पूर्णा, इतरं तु अपूर्णम्। 'अरेबियन् नाइट्स्' इति ग्रन्थस्य संस्कृतानुवादः संकल्पितः एतैः। तत्र 'अल्लाउद्दीनस्य विस्मापकः दीपः' इति कथायाः अनुवादः प्रकाशितः। किं तु सोऽयम् इंग्रजीकथायाः अनुवादः कृतः, अथवा महाराष्ट्रभाषावर्तिग्रन्थं दृष्ट्वा कृतः इति तत्त्वतः न ज्ञायते।

महाराष्ट्रभाषायां यथा पुराणग्रन्थानाम् अनुवादाः कृताः अप्पाशास्त्रिभिः, तथा स्वतन्त्रनिबन्धलेखनम् अपि कृतम्। तत् एतत् संस्कृतिधर्मविषयकम् आसीत्। एतत् पुनः समर्थ-विद्याविलास-राष्ट्रमतप्रभृतिपत्रिकासु प्रकाशितम् अभवत्।

### ७. अमूल्यो निधिः।

ग्रन्थस्य अस्य पूर्वपर्वणः नवमे प्रघट्टे अप्पाशास्त्रिणां योग्यताविषये यत् लिखितं, तत् कियत् पारमार्थिकम् इति विदुषां प्रशंसालेखपठनान्तरं वाचकैः सनिश्चयं प्रतीयेत। यद्यपि मनाक् इव न्यूनं, यत्र खलु तारुण्यम् अपि न अवसितं, तादृशं चत्वारिंशद्-वर्षात्मकम् एव आयुष्यम्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अप्पाशास्त्रिभिः लब्धं तथापि आधुनिक-संस्कृत-विश्वाय तैः प्रदत्तः कोऽपि अमूल्यः निधिः। यः संस्कृतवादिनां सर्वेषां महान् आधारभूतः विराजते। यत्र संस्कृत-व्यवहारस्य आदर्शः प्रतिष्ठितः। यत्र खलु शोभते भाषा-सौष्ठवस्य परिसीमा। यः च अस्ति आधुनिक-संस्कृत-सारस्वतस्य जीवातुभूतः। यद्यपि अन्तर्हितम् एव चिराय एव अप्पाशास्त्रिणां पाञ्च-भौतिकं स्वरुपं, तथापि यशोविलासी वाङ्मयम् एतेषां पीयूषम् इव संस्कृतसरस्वत्याः संजीवनाय पदे पदे उपयुक्ततमं संपद्येत। अस्य प्रकाशनं पुनः सत्वरातिसत्वरम् आवश्यकम्। अन्यथा जीर्ण-पत्रिकाङ्केषु एव विद्य-मानम् इदं कदाचित् विशीर्णं भवेत् इति प्रादुर्भवति बलीयसी भीतिः। आधुनिक-संस्कृत-प्रजापतेः वाङ्मयस्य अन्तर्धानं न खलु संभाव्येत संस्कृता-नुरागिभिः। अनिष्टं च एतत्। अतः समुचितं विधीयतां यत् प्राप्तरूपम् इति समभ्यर्थयामहे।

## अप्पाशास्त्रि-जीवनालेखः।

| शाकवर्षम्। | वृत्तम्। |
|---|---|
| १७९५ | कार्तिक शुद्ध त्रयोदशी। मध्यरात्रे जन्म। |
| १८०० | अक्षरारम्भः। प्राथमिक-संस्कृत-व्युत्पत्ति-पाठः। |
| १८०२ | उपनयनं, प्राथमिक-शाला-प्रवेशः च। |
| १८०७ | मराठी-षष्ठी-कक्षा समुत्तीर्णा। गृहे संस्कृताभ्यासः। तदैव पद्य-प्रणयनं, कालिदास-परिवर्तनं च। |
| १८०८ | आगामिवर्षस्य पञ्चाङ्गं निर्मितम्। |
| १८१० | प्रथमः विवाहः। |
| १८११ | कोल्हापुरे निवासप्रारम्भः। कपिलतीर्थे। पण्डितकान्ताचार्याणां संनिधौ शास्त्राध्ययनम्। |
| १८१४ | पाठशालात्यागः। स्वातन्त्र्येण पठनादिकम्। |
| १८१५ | आङ्ग्लभाषा-वाङ्मय-पठनारम्भः। संस्कृत-चन्द्रिका-ग्राहकत्वम्। |
| १८१६ | चन्द्रिकायाः समस्यापूर्तिः। मातृभक्तिस्पर्धायां प्रथम-पारि-तोषिक-शब्दकल्पद्रुम-प्राप्तिः। |
| १८१७ | पौष-चन्द्रिकायां सूनृतवादिनी-मासिक-पत्रिका-प्रकाशन-संकल्पः प्रकटीकृतः। |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

| शाकवर्षम् | वृत्तम् |
|---|---|
| १८१८ | मालविका-नाटके टीका रचिता। चन्द्रिका-संपादकानां निर्वेदः। |
| १८१९ | वैशाखमासम् आरभ्य संस्कृत-चन्द्रिका-संपादकत्वम्। कोल्हापुरात् प्रकाशनम्। वाईक्षेत्रे मोदवृत्ते मुद्रणम्। |
| १८२० | कोल्हापुरे वरुणतीर्थ-विभागे निवासारम्भः। चन्द्रिका-मार्गाङ्के कथाकल्पद्रुम-विज्ञापनम्। |
| १८२१ | चैत्रे मासि कलकत्ता-नगरे विद्वत्-परिषदि संस्कृत-भाषणम्। 'विद्यावाचस्पतिः' इति उपाधि-प्राप्तिः। कोल्हापुरे सत्कारः - (वैशाखसुदि १२) तैलङ्ग-वङ्गीय-केरलीय-तामिल-लिपि-ज्ञानम्। चन्द्रिका प्रशंसिता भूयोभिः। ४०० ग्राहकैः त्यक्ता। |
| १८२२ | समस्यापूर्ति-खण्ड-प्रकाशन-संकल्पः। शीत-ज्वर-पीडा। |
| १८२३ | मृत-शिशुं प्रसूतवती भार्या मृता। द्वितीयः विवाहः। चन्द्रिका भारत-धर्म-महामण्डलस्य मुखपत्रं बभूव। |
| १८२४ | चन्द्रिकायाः वत्सरारम्भमासः चैत्रः बभूव। मालविका-टीका प्रकाशिता। |
| १८२५ | आशीर्वचन-प्रीतेन दिनाजपुर-नरेशेन महावस्त्रं ७० रूप्यकमूल्यात्मकं समर्पितम्। विष्णुपुराणं महाराष्ट्रभाषया अनुवादितम्। |
| १८२६ | कोल्हापुरे श्रीमत्-पन्तामात्यानां प्रासादे निवासः। चन्द्रिका पत्र-प्रापणाधिकृतैः पञ्जीयिता। नीवी-धन-विचारः, सूनृतवादिनी-साप्ताहिक-पत्रिका-संकल्पः। महाभारतानुवाद-प्रारम्भः। |
| १८२७ | चैत्रे पितुः सदाशिवशास्त्रिणः निधनम्। चन्द्रिकाङ्केषु सूनृतवादिनी-विज्ञापनम्। आश्विने व्याधिः। पौषे प्रयागे काश्यां च भारत-धर्म-महामण्डलाधिवेशने समुपस्थानम्। कोल्हापुरीय-वेदोक्त-विरोधः। |
| १८२८ | वाई-क्षेत्रे वासारम्भः। भाद्रे सूनृतवादिन्याः आदर्श-प्रकाशनम्। ज्वराभिभवः। मार्गशीर्षे यथावत् सूनृतवादिनी-प्रचारः। भारती-भवन-पुस्तकालय-स्थापना-संकल्पः। माघात् प्रभृति वाई-क्षेत्रे श्रीकृष्णमुद्रणालये सूनृतवादिनी-चन्द्रिका-मुद्रणम्। माघमासे वाई-क्षेत्रे स्वदेशीय-संमेलने प्रकाश-सभायां च अध्यक्षत्वम्। |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

| शाकवर्षम् | वृत्तम् |
|---|---|
| १८२९ | कार्तिके ग्रन्थि-ज्वर-प्रभावात् केषांचित् दुष्टतया च वाईत्यागः कोल्हापुरे निवासः च। सूनृतवादिन्याः बृहत्तरीकरण-संकल्पः। कोल्हापुरे मुद्रणादि। द्वितीय-भार्यायाः परलोक-प्रयाणम्। "प्राचीनभारत" — मराठी-पत्र-प्रकाशन-संकल्पः। मुद्रायन्त्रं क्रीतम्। ग्रन्थि-ज्वर-(प्लेग)संबन्धिनी मोहमयी-विभागाधिपतेः पत्रिका। सूनृतवादिन्यां ग्रन्थिज्वरम् अधिकृत्य षट् प्रधान-लेखाः। पौषे मोहमय्यां परेलीय-रसायन-शालायां पत्र-संपादक-मेलने समुपस्थानम्। पण्डित-महासभा-प्रतिष्ठापना-विचारः। फाल्गुने सूनृतवादिन्याः प्रथम-खण्ड-समाप्तिः। संस्कृत-राष्ट्रभाषा-त्वस्य समर्थनम्। तृतीयः विवाहः। |
| १८३० | प्रतिवर्षानुसारं हुबळी-शंकराचार्योत्सवे अध्यक्षता भाषणं च। कोल्हापुरे राजकीयान्दोलनम्। अप्पाशास्त्रिणां कारागृह-दण्ड-विचारः। भार्या-मृतिः। |
| १८३१ | सप्ततारे निवास-प्रकाशनादि-प्रयत्नः। पुण्यपुर्यां सदाशिव-वीथ्यां निवासः। मोहमय्यां 'वर्तमान-एजन्सी' द्वारा पत्रिका-प्रकाशनम्। (१८३१ जेष्ठात्।) चैत्रमासे वाराणसेय-भारतधर्ममण्डलतः विद्यालंकारः, महोपदेशकः इति उपाधि-द्वयम्। भविष्य-पुराणानुवाद-प्रकाशनम्। महाभारत-वनपर्वानुवादः संपूर्णः। भाद्रपदे पञ्चदशवर्षीय-प्रथमद्वितीयाङ्क-प्रकाशनोत्तरं चन्द्रिका-प्रकाशनं स्थगितम्। मार्गशीर्षे वेणीसंहारे टीका। फाल्गुने तृतीय-खण्डस्य अङ्काष्टक-प्रकाशनोत्तरं सूनृतवादिनी अन्तर्हिता। वर्तमान-एजन्सी-स्थगनम्। |
| १८३२ | पुण्यपत्तने भावे-प्रशालायम् अध्यापनारम्भः। चैत्रे पुनः परिणयः। पूर्व-भार्यायां जातः शिशुः मृतः। नव-परिणीता भार्या मातृ-गृहं चिराय गता। |
| १८३३ | आश्विने धारवाड-पाठशालायां सत्कारः। फाल्गुने क्रतुकोटि-ग्रामे वैश्याधिकार-सभा। बुद्धचरितं व्याख्यातम्। शनिवार-वीथ्यां वासः। चन्द्रिकायाः पुनःप्रकाशने विज्ञापनम्। शासन-संनिधौ प्रयत्नः। |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

| शाकवर्षम् | वृत्तम् |
|---|---|
| १८३४ | महाभारतानुवादः समाप्तः । कार्तिके याजुष-हौत्र-विचार-संक्षेपः । मार्गे मातुः परलोक-प्रयाणम् । फाल्गुने नल-सावित्री-व्याख्या-प्रकाशनम् । |
| १८३५ | पुनरपि सदाशिव-वीथ्यां वासः । चैत्रे (पुनरपि) सुहृद्-विदुषां हठाग्रहेण ( पञ्चमः ) विवाहः । योगवासिष्ठानुवादारम्भः । रामायण - बालकाण्ड - व्याख्यारम्भः । ग्रन्थि - ज्वर - महान्तङ्कः । आश्विन-वदि एकादशी-दिने अप्पाशास्त्रिणः दिवं प्रस्थिताः । |

**" न खलु स उपरतो यस्य वल्लभो जनः स्मरति ! "**

## ९. कृतार्थता ।

प्रियपाठकमहाभागाः ! संस्कृतभाषायाः सुसंस्कृतीकरणे लब्धवर्णानां विश्रुतावदानानां जीवन-चरितम् एतत् यथाबुद्धिबलोदयं श्रीमतां पुरस्तात् उपस्थापितम् अस्माभिः । अद्यावधि यावत् जीवनवृत्तं विज्ञातम् अप्पाशास्त्रिणां सकलमपि तत् एतत् अस्मिन् ग्रन्थे गुम्फितम् । दिवंगतानाम् एतेषाम् इदानीं ( इ. स. १९७३ ) षष्टि-वर्षाणि पूर्णानि । तदा प्रभृति वर्षाणां दशक-चतुष्टयं यावत् जीवनचरित-संग्रहणात्मकः विस्तृतः प्रयत्नः नैव अभूत् । अस्मिन् वर्षदशके एव महता वेगेन सोऽयं संवृत्तः । अतः साहजिकम् एव श्रीअप्पाशास्त्रिणां जीवनचरितस्य त्रुटिपूर्णत्वम् । तदानीन्तनाः हि अप्पाशास्त्रि-वृत्तवेदिनः वृद्धाः प्रायः इदानीं न जीवन्ति । ये पुनः केऽपि संदृष्टाः पत्रद्वारा प्रार्थिताः वा, तेषां सकाशात् यानि वृत्तानि समधिगतानि अप्पाशास्त्रि-गीत-वाङ्मये, तत्संबन्धिनि अन्य-वाङ्मये च यानि वृत्तानि प्रतिबिम्बितानि, तेषां यथोपलब्धम् अत्र संनिवेशः कृतः । अतः च नैव मन्यामहे चरित्र-संग्रहस्य अस्य सर्वाङ्ग-सुन्दरत्वं परिपूर्णत्वं वा । तथापि संस्कृत-प्रेमिकाणाम् आवश्यकम् इदं कार्यं, यथाकथम् अपि वा भवतु समाप्तम् अभवत् इति नितान्तम् आनन्दति चेतः ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१०. कृतज्ञता ।**

जीवन-चरितस्य अस्य संपादनार्थं येषां मार्गदर्शनं लब्धं, येषां च प्रबन्धानां दर्शनं सफलम् अभवत्, तेषाम् अत्र नामनिर्देशः क्रियते, प्रकाश्यते च अशक्य-निर्यातनः कृतज्ञ-भावः ।

**(अ) साक्षात् निवेदकाः —**

श्री. प. प. ब्रह्मीभूत-शिरोळकर-शंकराचार्यस्वामिनः ।
१. कै. ती. औदुम्बरकर-नारायणशास्त्रिणः ।
२. कै. ती. गं. भा. लक्ष्मीदेवी ।
३. कै. ती. गं. भा. यशोदादेवी ।
४. ती. औदुम्बरकर नागेशशास्त्रिणः ।
५. कुण्डलवासिनः कै. खण्डभट्टाः ।
६. कुण्डलवासिनः पण्डितशास्त्रिणः ।
७. कै. पं. जेरे आत्मारामशास्त्रिणः । (नृसिंहवाडी)
८. पं. जेरे श्रीपादशास्त्रिणः । (कोल्हापुर)
९. पं. श्रीभालचन्द्रशास्त्रिणः । (धारवाड)
१०. कै. पं. श्रीमल्लारिशास्त्रिणः । (धारवाड)
११. पं. गुळवणी शंकरशास्त्रिणः । (कोल्हापुर)
१२. पं. खुपेरकर बाळाचार्याः । (कोल्हापुर)
१३. पं. वसन्त अनन्त गाडगीळ, संपादकः 'शारदा' (पुणें)
१४. पं. श्रीकाशीनाथशास्त्रिणः । (नरेगल, धारवाड)
१५. कै. गोसावी दिगम्बरशास्त्रिणः । (औदुम्बर)
१६. श्री. गजाननदेवमहाराजः । (चिंचवड-पुणें)
१७. रा. रामकृष्ण शंकरशास्त्री गोखले । (कोल्हापुर)
१८. कै. सरदार आबासाहेब मुजुमदार । (पुणे)

**(ई) पत्रद्वारा निवेदकाः —**

१. कै. पं. श्रीअण्णाशास्त्री अर्जुनवाडकरः । (बेळगांव)
२. कै. पं. श्रीक्षितीशचन्द्रशास्त्री चट्टोपाध्यायः । (कलकत्ता)
३. श्रीसतीशचन्द्रगुह ठक्कुरः । (अलाहाबाद)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४. कै. श्रीवासुदेव सदाशिव भेडसगांवकर (हरिपुर-सांगली)
५. श्री. द. के. घाणेकर (पुणे)

(ऊ) प्रबन्धाः

संस्कृते

१. संस्कृत-चन्द्रिका ।
२. सूनृतवादिनी ।
३. मालविका-व्याख्या ।
४. वेणीसंहार-व्याख्या ।
५. बुद्धचरित-व्याख्या ।
६. नल-सावित्री-व्याख्या ।
७. एकादशीश्राद्धनिर्णयः ।
८. याजुषहौत्र-विचार-संक्षेप ।
९. आचार्याभिनन्दनपत्रिका ।
१०. मातृगोत्रनिर्णयः ।
११. विद्योदय-पत्रिका ।
१२. विज्ञानचिन्तामणि-पत्रिका ।
१३. वासिष्ठवैभवम् ।
१४. सद्धर्म-पत्रिका ।
१५. हौत्र-तत्त्व-प्रकाशः ।
१६. शारदा-पत्रिका । (पुणें)
१७. भारतवाणी-पत्रिका । (पुणें)
१८. मञ्जूषा-पत्रिका । (कलकत्ता)
१९. अप्पाशास्त्रिसाहित्यसमीक्षा —डॉ. अशोक अकलूजकर ।
२०. पं. श्रीजयचन्द्रशर्मणां पत्रम् ।
२१. गुण्टूरमार्कण्डेयशर्मणां-पत्रम् ।
२२. विद्यालंकार-मानपत्रम् ।
२३. महोपदेशक-मानपत्रम् ।

मराठी

१. महाभारताचें भाषान्तर,
२. विष्णुपुराणाचें भाषान्तर,
३. भविष्यपुराणाचें भाषान्तर,
४. योगवासिष्ठाचें भाषान्तर,
५. धर्म-मासिक (वाई)
६. कुण्डार्कप्रकाश-भाषान्तर — विद्याभूषण तांबेशास्त्री
७. संस्कृतविद्येचें पुनरुज्जीवन —न. चि. केळकर
८. याजुषहौत्राचा वाद —वामन बल्लाळ केळकर
९. केसरी-(पुणें)-मृत्युवार्ता —रंगशर्मा
१०. सावरकरचरित्र —शि. ल. करंदीकर
११. अर्वाचीन-संस्कृत-साहित्य —डॉ. श्री. भा. वर्णेकर
१२. कऱ्हेचें पाणी, खण्ड १ —कै. आचार्य प्र. के. अत्रे
१३. ब्रह्मविद्या - ग्रन्थ - रत्नमाला, वर्ष १, अंक २ (कै. बापटशास्त्री)
१४. स्वगृहांतील हस्तलिखित कागदपत्रे

हिन्दी

१. अप्पाशास्त्री : कृतियोंका अभ्यास.

इंग्रजी

1. Foreword to लावण्यमयी by A. B. Gajendragadkar
2. Preface to Notes on नलसावित्री- by – Narayan S. Lokur

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# अप्पाशास्त्रिचरितम् : विशिष्टा सूचिः

( अङ्काः पृष्ठस्य )



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# अप्पाशास्त्रि-प्रशंसा ।

यदि पीयूष-पानेच्छा लोकेऽस्मिन्नेव वर्तते ।
अप्पाशास्त्रिवचोबन्धसरसां सेव्यतां रसः ॥ १

रसिकाः ! संस्कृता वाणी सरसा यदि काम्यते ।
स्व-वाञ्छां सुफलीकर्तुं सेव्यं वाचस्पतेर्वचः ॥ २

इहैव प्रेक्ष्यतां स्वर्गो भुज्यतां रस-वैभवम् ।
विद्यावाचस्पति-कृतिः सर्वान् वो मोदयिष्यति ॥ ३

अभ्यस्य संस्कृतां भाषां विहारः क्रियतां भवे ।
अप्पाशास्त्रि-वचःसार-सुधा-सान्द्ररसैर्द्रुते ॥ ४

किं मुधा-स्वर्ग-लोभेन क्रियते दुस्तरं तपः ।
लीलया खेलति स्वर्गः श्रीअप्पाशास्त्रिणः कृतौ ॥ ५

लब्ध्वा नरत्वमभ्यस्य संस्कृतं जन्म निष्फलम् ।
अहो नास्वादितं येन वाचस्पति-वचोऽमृतम् ॥ ६

सर्वदा यः श्रीमदप्पाशास्त्रि-वाङ्मयमीक्षते ।
अपण्डितमपि ह्येनं विबुधाः कृतिनं विदुः ॥ ७

गद्य-पद्य-कथा-नाट्य-समालोचन-लेखनम् ।
धर्म-दर्शन-भूगोल-खगोल-प्रणिबन्धनम् ॥ ८

समाज-राज-विज्ञान-संशोधन-विचारणम् ।
टीकानुवाद-करणं कवि-चारित्र्य-वर्णनम् ॥ ९

पत्र-प्रचार-पाण्डित्यं सकौशल्य-विलेखनम् ।
यद् यदिष्टतमं सारस्वतं तद्दानवर्षणम् ॥ १०

एवं वैचित्र्य-वैविध्य-वाग्-रत्नोज्ज्वल-मन्दिरे ।
रसिका विजिहीर्षा चेद् अप्पाशास्त्री निषेव्यताम् ॥ ११

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चन्द्रिका येन गीर्वाणवाणी-विज्ञ-चकोरिका ।
संमोदार्पणमात्रेच्छा समृद्धा सुप्रचारिता ॥ १२

राष्ट्रियान्दोलन-ज्ञान-क्षमा सूनृतवादिनी ।
सतीष्वप्यन्य-पत्रीषु कृता पण्डित-मानिनी ॥ १३

छात्र-वृन्द-हितार्थाय काव्य-नाटक-टीकनम् ।
विहितं येन कालादि-मीमांसादि-परिप्लुतम् ॥ १४

'श्रीशिवः शरणं' चेति यस्य नित्यं परं व्रतम् ।
स नः संस्कृतभक्तानां स्तात् सदा शरणं बुधः ॥ १५

(भारतवाणी–२९।२।६८)

शारदा-गौरव-ग्रन्थमाला क्र.. ... ७

अप्पाशास्त्री : साहित्यसमीक्षा

प्रा. अशोक न. अकलूजकर

मूल्यम् २ रूप्यकौ

प्राप्तिस्थानम् — 'शारदा' कार्यालयः, पुणे ३०

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# अप्पाशास्त्रिचरितस्य शुद्धिपत्रम्।

## सूचीविषये

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| १ | अन्त्या | ग्रहणे न | ग्रहणेन |
| ४ | २० | ७० | ७१ |
| ६ | १४ | श्रेणीकी | श्रेणीका |
| ७ | १६ | २०५ | २०६ |
| ७ | अन्त्या | खल्वयं | खल्वस्यां |
| ८ | १० | प्रासादिकः | प्रामादिकः |
| १२ | २२ | एषः | एषा |
| १४ | २७ | मानः | मानाः |
| १६ | २८ | ररमणीयम् | रमणीम् |

## ग्रन्थविषये

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| १ | २० | विद्यते | विद्यन्ते |
| ६ | २० | आकलंद | आँकलंद |
| ७ | १० | निरीक्षितव्यम् । | निरीक्षितव्यम् |
| ११ | १७ | विषय | विषये |
| ११ | २० | एव | एवं |
| १२ | ९ | सचार | संचार |
| १६ | अन्त्या | सलीलाबभूव | सलीला बभूव |
| १८ | अन्त्या | ककः | एककः |
| २० | १३ | नाम्ना | नाम्नां |
| २१ | १९ | विद्वद्प्र. | विद्वत्प्र. |
| २१ | २७ | अन्यतस्यम | अन्यतमस्य |
| २१ | २८ | श्रीबल | श्रीबाल |
| २८ | ३ | दधति | दधाति |
| २९ | १७ | उपलम्भिता | उपलम्भिताः |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| ३० | ७ | स्त्रोतस्वती | स्रोतस्वती |
| ३० | १८ | द्वितीयखं. | तृतीयखं. |
| ३१ | अन्त्या | प्रभति | प्रभृति |
| ३२ | ५ | पुन | पुनः ( पुनर् ) |
| ३४ | ९ | सवषाम् | सर्वेषाम् |
| ३७ | ९ | चन्द्रिकायां | चन्द्रिका |
| ४७ | १९ | वाब्जनेन | वाब्जजेन |
| ४७ | २७ | जन्मकुले | जन्म कुले |
| ४८ | १ | सुताद्भवो | सुतोद्भवो |
| ४९ | ८ | निगूढनार्थं | निगूढानर्थं |
| ५१ | १४ | समाधि | समाधिः |
| ५१ | १७ | तद्यदिच्छायो... | तद्यदि च्छायो... |
| ५२ | १४ | तदावशक्यत्वमेव | तदावश्यकमेव |
| ५२ | २४ | तत्निदानं | तन्निदानं |
| ५३ | २३ | एमेव | एव |
| ५४ | १९ | केन ना | केन वा |
| ५७ | ११ | ९७ | ९७ ) |
| ५७ | १२ | कृतः) | कृतः |
| ५७ | २२ | सुबहुलै | सुबहुलैः |
| ६४ | २ | प्रावर्तत् | प्रावर्तत |
| ६४ | १७ | इति | इति '। |
| ६४ | २६ | श्रीवान्वि. | श्रीमानवि. |
| ६८ | १० | वाचस्पति | वाचस्पतिः |
| ६८ | १२ | निपाय | निपीय |
| ६८ | २८ | प्रथम् | प्रथमम् |
| ७० | उपान्त्या | शास्त्रितणां | शास्त्रिणां |
| ७० | अन्त्या | वाअङ्मय | वाङ्मय |
| ७० | ,, | समधिकामे | समधिकामेव |
| ७२ | १७ | आभासः | अभ्यासः |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| ७३ | ३ | प्रार्थित | प्रार्थितः |
| ७३ | ८ | आमसात् | आत्मसात् |
| ७३ | १२ | परीशीलनं | परिशीलनं |
| ७३ | २० | कालो | काले |
| ७४ | १७ | वृत्तोद्वा | वृत्तोद्गा |
| ७४ | १८ | प्रयच्छत्यक्लेशं | प्रयच्छन्त्यक्लेशं |
| ७७ | ४ | कोपाचायः | कोपाचार्यः |
| ७८ | ७ | स्ययस्तु | व्ययस्तु |
| ७८ | १० | पुव्तकं | पुस्तकं |
| ७९ | १८ | तुकिम... | तु किम... |
| ७९ | १८ | नादिकम् | [illegible]नादिकम् |
| ७९ | १९ | त्यैषः | त्येषः |
| ८० | २४ | उत्तरप्रेषणे | उत्तराप्रेषणे |
| ८१ | २४ | स्वान्तः | स्वान्तम् |
| ८४ | २४ | समुच्च | समुच्छ |
| ८५ | ३ | स्थापिश्री | स्थापितश्री |
| ८८ | ८ | ये पुनर् | "ये पुनर् |
| ८८ | १५ | पुननैका | पुनर्नैका |
| ८९ | ५ | च बन्धाः | च प्रबन्धाः |
| ८९ | २१ | श्रीमद्अप्पा | श्रीमद्-अप्पा |
| ९० | १ | नासाधरणः | न साधारणः |
| ९२ | ५ | अहिताग्निः | आहिताग्निः |
| ९३ | ३ | एतत् | एतत्– |
| ९४ | २ | जातैः | जालैः |
| ९४ | १३ | प्रकाशनं | प्रकाशने |
| ९४ | १४ | दुःसाद्यम् | दुःसाध्यम् |
| ९४ | २० | कुर्वन्तु | कुर्वन्ति |
| ९६ | २० | पत्रे | पत्रे (७ मार्च १९०३) |
| १०४ | १५ | एतास् | तान् |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| १०५ | २४ | जिविकां | जीविकां |
| १०६ | अन्त्या | वासी पं. | वासि- . |
| १०८ | १७ | एतान् | एनाम् |
| १०९ | १० | अर्के | अक्के |
| १०९ | २५ | खास्वाद | एवास्वाद |
| ११० | २ | एवं विधां | एवंविधां |
| १११ | १७ | समुन्नितम् | समुन्नतिम् |
| १११ | अन्त्या | निःशेषा अपि | नि. अपि भारतवर्षीयाः |
| ११३ | ४ | प्रतिबद्धुम् | प्रतिबन्धुम् |
| ११३ | ११ | वमत्यं | वैमत्यं |
| ११६ | २६ | सुरायन्ति | सुरा यान्ति |
| १२० | ४ | प्रयोगंः | प्रयोगं |
| १२१ | ८ | नास्या | नास्याः |
| १२२ | ५ | पाध्येने | पाध्यायेने |
| १२४ | ६ | ...वचः | ...वचः— |
| १२४ | २८ | वस्थास्यत | वास्थास्यत |
| " | " | अपि | अयि |
| १२५ | २० | चापेक्ष्यतां | चावेक्ष्यतां |
| १२९ | ८ | विषय | विषयं |
| १३२ | १२ | उत्सहनीयाः | उत्साहनीयाः |
| १३२ | १६ | ...मणिः | ...मणेः |
| १३४ | ६ | भाषिणः | आङ्ग्लभाषिणः |
| १३७ | १६ | संस्कृतपत्रिकाम् | सं. पत्रिकायाम् |
| १३८ | १९ | आदर्शाः | आदर्शः |
| १३९ | २७ | अवातारं | अवतारं |
| १४० | १२ | संपन्नः | संपन्नाः |
| १४२ | २५ | सनातनं धर्मं | सनातनधर्मः |
| १४३ | १३ | स्थाप्येव | स्थाय्येव |
| १४३ | २२ | आत्मीयां | आत्मीयान् |

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| १४३ | २८ | सर्वदेश | स्वदेश |
| १४७ | ८ | ...पाटन... | ...पाटव... |
| १४८ | ४ | ...कविवद् | ...कवित्व... (?) |
| १५१ | ६ | सर्वेषां | विश्वेषां |
| १५१ | २० | नानाविधे: | नानाविधैः |
| १५७ | २२ | ...मेतस्येपि | ...मेतस्येति |
| १६० | १६ | यक्षा | यथा |
| १६० | २५ | स्थापितात्रि | स्थापिताः त्रि |
| १६० | २७ | प्राग्-गोमान्तक... | प्राग् गोमान्तक... |
| १६१ | १९ | निन्दत्यप्पा | निन्दन्त्यप्पा |
| १६२ | १८ | प्रथमस्तावत् | प्रथमतस्तावत् |
| १६४ | ७ | तत्रेव | तत्रैव |
| १६६ | १८ | संभावित | संभावितं |
| १७१ | २ | अप्रतिभ | अप्रतिम |
| १७१ | १० | नैवविधाभिः | नैकविधाभिः |
| १७१ | ११ | अप्पाशास्त्रिण | अप्पाशास्त्रिणः |
| १७३ | १ | कथं कारं | कथंकारं |
| १७५ | १४ | बीजतया चक्षाणाः | बीजतयाऽऽचक्षाणाः |
| १७५ | २३ | मनशास्तृभि | मनुशास्तृभि |
| १७६ | ९ | प्रथमस्तावत् | प्रथमतस्तावत् |
| १८१ | २१ | च प्रभूतम् | न प्रभूतम् |
| १८२ | ३ | प्रमाणमालेशोऽपि | प्रमाणलेशोऽपि |
| १८२ | २० | तत्रत्य. | तत्रत्यः |
| १८२ | अन्त्या | विचराणीयं | विचारणीयं |
| १८३ | १९ | तश्च | तच्च |
| १८३ | २० | ऽत्रवर्षे | ऽत्र वर्षे |
| १८३ | २८ | विनामूल्येन | विना मूल्येन |
| १८४ | ५ | दनावश्य | दनमावश्य |
| १८४ | १९ | ...वादिन्या | ...वादिन्याः |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धः | शुद्धः |
| --- | --- | --- | --- |
| १८४ | २३ | पासिते | पालिते |
| १८४ | २८ | ...त्याज्यस्यैव | ...त्याज्यत्वस्यैव |
| १८४ | २८ | णोच्चमान | णोच्यमान |
| १८७ | ४ | ...वादिनी | ...वादिनी— |
| १८७ | १२ | मण्डल्या | मण्डलस्या |
| १८८ | ६ | वासी पं. | वासि-पं. |
| १८८ | अन्त्या | भवितं | भवितुं |
| १९२ | १० | ...वादिनीभियं | ...वादिनी भियं |
| १९४ | ९ | पृष्टे | पृष्ठे |
| २०१ | ११ | प्रत्यग्रहत्वम् | प्रत्यग्रत्वम् |
| २०५ | १३ | वृद्धि | वृद्धिः |
| २०८ | ३ | मनःकृतम् | परिणये मनः कृतम् |
| २०९ | २ | धर्मिण्याहरणं | धर्मिण्या हरणं |
| २०९ | ३ | विधे | विधैः |
| २०९ | २५ | अनुयेयम् | अनुमेयम् |
| २१३ | १० | अश्वघोषकवेः चरितार्थं | ? |
| २१९ | २२ | संदश्यमान | संदृश्यमान |
| २२० | आद्या | संज्ञीका | संज्ञिका |
| २२४ | १५ | वन्दनं पुरः | वन्दनं विधाय पुरः |
| २२७ | २० | प्रसिद्धा | प्रसिद्धाः |
| २३० | २ | लभ्यतेलक्ष्मीः | लभ्यते लक्ष्मीः |
| २३१ | ८ | आसीद् ति | आसीद् इति |
| २३१ | १० | धर्मपन्थेषु | धर्मपथेषु |
| २३२ | १९ | भालपट्टेन | भालपट्टे |
| २३४ | १६ | इदृशीम् | ईदृशीम् |
| २३५ | २८ | पुन.प्रकाशन... | पुनःप्रकाशन... |
| २४१ | अन्त्या | स्वगृ | स्वगृहं |
| २४३ | ८ | उत्तम | उत्तर |
| २४७ | १ | अतीत | अतीव |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

| | | | |
|---|---|---|---|
| २४७ | १४ | हिन्दीभाषया | हिन्दीभाषाया |
| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धः | शुद्धः |
| २४७ | २० | सप्रशय | सप्रश्रय |
| २४७ | २४ | रसिकावतंसा | रसिकावतंसाः |
| २४७ | २५ | ह्मानन्द | ब्रह्मास्वाद |
| २४७ | २८ | किलोपकार्षीद् | किलोपाकार्षीद् |
| २४७ | अन्त्या | ...भूतसंप्लवमा | ? |
| २४८ | ६।७ | समारचिता | समाराधिता |
| २४८ | १९ | प्रभव- | प्रभवः |
| २५३ | १५ | अनुवादः | संस्कृतानुवादः |
| २५४ | ६ | विलासी | विलासि |
| २५४ | १३ | अप्पाशास्त्रि. | ८ अप्पाशास्त्रि |
| २५४ | २६ | चन्द्रिकायाः | चन्द्रिकायां |
| २५६ | १७ | जेष्ठात् | ज्येष्ठात् |
| २५७ | २१ | गीत | प्रणीत |
| २५९ | १२ | संक्षेप | संक्षेपः |
| २६४ | १ | चकोरिका । | चकोरिका — |

* * *

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

